॥ श्रीः ॥

चौखम्बा-संस्कृत-ग्रन्थमाला ।

( ग्रन्थ-संख्या ८७ )

ग्रन्थाङ्काः ४७३, ४७४, ४७५.

॥ श्रीहरिः ॥

श्रीसामवेदीयश्रौतस्मार्तकर्मणां

श्री

# सुबोधिनीपद्धतिः

श्रीशुक्लविश्रामात्मज-श्रीशिवराम-विरचिता ।

सा च

त्रिपाठ्युपाह्व श्रीरणवीरदत्तात्मजेन काशीस्थ जोखीराम मटरूमल गोयनका संस्कृत महाविद्यालयीय सामवेदाध्यापकेन आहिताग्नीनां ओझोपाह्व श्रीगौरीशङ्करशर्मणामनुमत्या ।

पण्डित श्रीदुर्गादत्तशर्मणा

टिप्पण्यादिभिरलङ्कृत्य, संशोध्य, सम्पादिता ।

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

१९९८

श्रीकृष्णश्शरणम् ।

# प्रकाशकस्य विज्ञप्तिः ।

ममाद्य सहर्षं सोत्कर्षं सामवेदीयसुबोधिनीपद्धतिमिमां कर्मकाण्डपद्धतिमधिरुरुक्षूणां शेमुषीजुषामभ्यर्णमुपस्थापयतो नितान्तानन्दसन्दोहोल्लसितस्वान्तं समुज्जृम्भते ।

सम्पादनकार्यञ्चास्याः प्रागेव सामवेदिभिरग्निहोत्रिश्रीहरिशङ्करशास्त्रिमहोदयैः प्रारब्धमपि प्रचुरकार्यसाङ्कर्येण शैथिल्यं प्राप्तम् । परमिदानीमानन्दकन्दसच्चिदानन्द-श्रीकृष्णचरणारविन्दानुकम्पया स्ववसरं प्राप्य नर्मदा (शुक्लतीर्थ) निवासिसामवेदनिष्णातविद्वद्धौरेयाग्निहोत्रिभिः ओझोपाह्वश्रीगौरीशङ्करशास्त्रिचरणैः पद्धतिमिमामखिलां हस्तलिपिं सूक्ष्मेक्षिकया याथातथ्येन विमृश्य प्रफुल्लमानसैः सस्वरामिमां पण्डितश्रीदुर्गादत्तशास्त्रिद्वारा सम्पाद्य प्रकाशयितुं नितरामहं प्रोत्साहितः । तथा च खराशङ्करत्रिवेदिमहोदयैश्चास्याः प्रकाशने बहुतरं साहाय्यं प्रदत्तमतः शतशो धन्यवादाः मानार्हेभ्यस्तेभ्यो मया भूयो भूयः प्रदीयन्ते । आशासे चाहमेषां विद्वद्धुरीणानां साहाय्येन सामवेदस्यान्येऽपि ग्रन्थाः शीघ्रमेव सामवेदमधिजिगीषूणामन्तिके समुपस्थापयिष्यन्त इति शम् ।

॥ श्रीहरिः ॥

# किञ्चित्प्रास्ताविकम् ।

अतिरोहितमस्त्येवैतच्छेमुषीमतां विदितवेदितव्यानां तत्रभवतां भवतां, यत् सकलानर्थनिवृत्तिपूर्वकं परमानन्दावाप्तिरेवाशेषजीवानामभिलषितं वस्तु, तदप्युपायमन्तरा दुर्लभमेव । उपायश्च क इत्यस्यां विवेचनायां 'तरति शोकमात्मवित्', 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवास्तदादेवमविज्ञाय दुःखस्यान्तो भविष्यति', 'सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम् । तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं तत' इत्यादिभिः परःशतैः श्रुतिस्मृतिवचनैः प्रत्यक्चैतन्यानन्दात्मकमात्मज्ञानमेव तदुपायपदवीमधिरोहति । तादृशं ज्ञानञ्च 'दृश्यते त्वग्र्यया बुद्ध्या' 'मनसैवानुद्रष्टव्यम्' इत्यादि वचनैर्निर्मलाचञ्चलस्वान्तसाध्यम् । बुद्धेर्वैशुद्ध्यमपि 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्', 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः', 'ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि', 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः', 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः' इत्यादिवाक्यैः श्रौतस्मार्तकर्मौपयिकमेवेति सिद्धान्तितत्वात् श्रौतस्मार्तकर्मैव सर्वैरभ्युदयनिःश्रेयससिद्ध्यै स्वस्ववर्णाश्रमानुसारेण श्रद्धयाऽनुष्ठेयम् । तदपि 'यः स्वशाखां परित्यज्य परशाखां समाश्रयेत्', 'यन्नाम्नातं स्वशाखायाम्' इत्यादि प्रमाणबलेन स्वस्वशाखानुसारिसूत्रादिभिर्विज्ञायैवानुष्ठातुं शक्यते । सूत्रार्थस्यातिदुरूहत्वान्मन्दमतीनां ततो झटिति कर्मस्वरूपप्रतिपत्तिर्न भवितुमर्हतीति तदनुजिघृक्षया लोककल्याणैकदीक्षितैर्विद्वद्भिर्विशदार्थावबोधकभाष्यनिबन्धप्रयोगपद्धतयो विरचिता लोकेऽधिकं समाद्रियन्ते ।

तत्र सत्स्वपि सामवेदीयकौथुमिशाखानुसारिकर्मकाण्डप्रतिपादकेषु ग्रन्थान्तरेषु श्रीशिवरामशुक्लविरचिता प्रकाशपञ्चकात्मिका अन्वर्था सुबोधिनीपद्धतिः सरलत्वात्सप्रमाणत्वाद्विस्पष्टत्वात्सर्वानप्यतिशेते । यदीयं 'सुबोधिनी' न प्रादुरभविष्यत्तर्हीदानीमखिलमपि सामवेदीयं कर्म लुप्तप्रायमेवाभविष्यदित्युक्तिर्नातिशयोक्तिभावं भजते । अस्यां पञ्च प्रकरणानि सन्ति । तत्राद्ये—कर्माङ्गभूतसामान्यपरिभाषाद्यग्निनाशे प्रायश्चित्तान्तानि, द्वितीये—उपवीतकरणादि सायंहोमान्तानि, तृतीये-पर्वाहकृत्यादि पक्षहोमान्तानि, चतुर्थे-विवाहार्थं कन्यापरीक्षणादि समावर्तनान्तानि, पञ्चमे-उपाकर्मादि वास्तुशान्त्यन्तानि समन्त्रकाणि कर्माण्युपनिबद्धानि सन्ति । अनेनैकेनव ग्रन्थरत्नेन संगृहीतेन जननाद्यासंस्थिति सर्वं साङ्गं श्रौतस्मार्तकर्मजातं स्वयमनुष्ठातुमनुष्ठापयितुं च पार्यते ।

## ग्रन्थकर्तुः परिचयः ।

अयं श्रीशिवरामशुक्लः कुत्रत्यः, कः, किञ्जातीयः, कदा प्रादुरभूदिति

जिज्ञास्यमाने तत्कृतकृत्यचिन्तामणिसञ्ज्ञकगोभिलगृह्यसूत्रभाष्यस्थान्तिमपद्यद्वयमादौ दृक्पथीयति। तद्यथा–"पक्ष २ तु ६ शर ५ चन्द्रैश्च १ मिते शाके, तु वत्सरे। मुन्यङ्क ९७ सम्मिते नाभे मासि पक्षे सितेतरे॥ जन्माष्टम्यां गुरोर्वारे शुक्लविश्रामसूनुना। शिवरामेण रचितः कृत्यचिन्तामणिः शुभः॥" एतत्पद्यद्वयालोचनेनैतत्स्पष्टतरं निश्चीयते, यदयं सुबोधिनीकार इतः शतत्रयवत्सरात्पूर्वं १६९७ तमे वैक्रमाब्द इमां भारतभुवमलङ्करोति स्म। तदानीं ख्यातनाम्नोऽकबरस्य पौत्रोः, धर्मान्धस्यात्याचारिणो यवनराज्यास्ताचलायमानस्यौरङ्गजेबस्य पिता, मयूरसिंहासनस्य निर्मापयिता शाहजहानो दिल्लीसाम्राज्यसिंहासनमलङ्करोऽति स्म। श्रीरामचन्द्रकीर्तिवर्णनपूतभारतीतनो रामचरितमानसमानसस्य गोस्वामिकुलमौलिभूषणस्य श्रीतुलसीदासस्य साकेतप्रयाणावसरेऽयं श्रीशिवरामः श्रीविश्रामोद्वसितं स्वीयबाललीलया भासयाम्बभूवेत्युक्तौ न काप्यनुपपत्तिर्भवितुमर्हा। किन्तु कस्मिन्वत्सरेऽस्य जन्म, कदा चायमितो दिवङ्गगामेति न विज्ञायते। "अयं गुर्जरदेशीय–राजनगर ( अहमदाबाद ) मण्डलान्तर्गत-सरखेज-ग्रामनिवासिनश्चतुर्वेदीमोढ़-इत्युपाह्वस्य कस्यचिद्विश्रामशर्मणोऽग्रजन्मनः सकाशाज्जनिमलभत। बाल्ये मन्दधीत्वान्नाधिकमधीतवान्। अस्य श्रीविघ्नेशजगदम्बिकापादाब्जेष्वनल्पा प्रीतिरासीदिति सुबोधिनीप्रारम्भे ग्रथितमङ्गलपद्येन "प्रणम्य तातं विश्रामं विघ्नेशं जगदम्बिकाम्" इत्यनेन तर्क्यते। अस्य पत्नी जन्मान्धाऽपि श्रीजगदम्बिकानुग्रहेणावलोकनसामर्थ्यमाससाद। श्रीशिवरामः श्रौताग्नीनाधाय मखैर्यज्ञभुजमीजे। एकदा तद्भक्त्यावर्जिताऽम्बा यवनभिक्षुवेषमादाय तद्गेहे भैक्ष्ययाचनव्याजेन समागता। द्वाःस्थं भिक्षुमाकर्ण्य स्वयं किञ्चिद्भैक्षमादाय तस्मै दित्सया द्वार्युपतस्थौ। दित्समानं तमवलोक्य तेन यावनभिक्षुणोक्तम्—'नाहं कयाचित्समादित्सयाऽत्रागतोऽस्मि, अपितु भवते किञ्चित्प्रदातुमुपस्थितोऽस्मि।' शिवरामेण कपटवेषधारिणीमनुग्रहवतीं स्वेष्टदेवतां तामभिज्ञायोक्तम्—'यथा भवदाज्ञा।' तया तेन वोक्तम्–'स्वाननं व्यादेहि। तदन्तरे ष्ठीवितुमिच्छामि।' एतच्छ्रुत्वा श्रीशिवरामेण कथितम्—'तथैवाङ्गीकरोमि, किन्तु भवत्या साम्प्रतं यावनवेषः स्वीकृतोऽस्त्यत इदानीं तथाचरणं सदाचारविरुद्धत्वादनर्हं स्यादतोऽन्यं कमप्युपायमुपदिश।' जगदम्बया वाग्देव्या व्याहृतम्—'एवञ्चेत्करं प्रसारय, त्वत्करतले ष्ठीवनमुत्सिसृक्षामि। ततोऽनेन करेण यल्लिखिष्यसि तदाचन्द्रतारकं जगति स्थिरीभविष्यति।' तथाऽनुष्ठिते साऽन्तर्दधे। ततः शिवरामः कृत्यचिन्तामण्यादिग्रन्थाञ्जिर्ममे। वाराणसीनिवासिभिः सकलविद्या-

पारङ्गतैर्विपश्चिद्वरैः स्वीयं ग्रन्थजातं प्रमाणयितुं तेन साकं काशीं प्रययौ। मध्येमार्गं बहुशो विपदोऽनुभूय काश्यां समागतः। तत्रत्यविदुषां पुरतो ग्रन्थेषु निवेदितेषु तत्कीर्तिमसहमानैरीर्ष्यावद्भिस्तैरुपेक्ष्योक्तम्—"एतान्कुग्रन्थान्किमित्यस्मत्पुरो निदधासि, द्रागेतानग्निसात्कुरु, जातवेदसि समर्पिता अप्येते चेदप्रदग्धाः स्युस्तर्हि वयं स्वीकरिष्यामः।' तथेति प्रतिश्रुत्य तेषां पुर एव श्रीमणिकर्णिकोपकण्ठे भागीरथीतटे चितां प्रदीप्य तस्यां स्वान्समस्तान्ग्रन्थानचिक्षिपत्। काष्ठभारे निर्दग्धेऽपि श्रीजगदम्बिकानुग्रहवशात्तदीयग्रन्था यथापूर्वमनाघ्रातहुतवहकरालज्वालाः समास्थिताः। प्रशान्तेऽग्नौ तानादाय शिवरामस्ताञ्जाह्नवीसलिले प्रचिक्षेप। व्युष्टायामपि पक्षिण्यां क्षपायां सलिलस्थाम्बुजदलवदक्लिन्नांस्तानवेक्ष्य चमत्कृतैः सर्वैः सुधीभिः शिवरामोऽत्यर्थमभिनन्दितः, ग्रन्थप्रामाण्यमपि समोदमङ्गीकृतम्।"

एतत्पुरावृत्तं वटोदरप्रान्तीय-रेवातटवर्ति-शुक्लतीर्थनिवासिभिः सामवेदप्रतिमूर्तिभिराहिताग्निभिश्चातुर्मास्ययाजिभिः श्रीमालिज्ञातिशिरोलङ्कृतिभूतैरोझोपाह्व श्रीगौरीशङ्करशर्मभिरवगतं पाठकबुभुत्सयात्रोल्लिखितम्। एतच्चरित्रं श्रीमद्भिर्गौरीशङ्करपादैरपि वाराणसीस्थसिद्धेश्वरीप्रान्तवासिभिरिदानीन्दिवङ्गतैः श्रौतस्मार्तकर्मनिपुणैर्नागरकुलावतंसैर्द्विवेद्युपाह्व श्रीमाधवरामशर्मभिरधिगतम्।

## श्रीशिवरामस्य ग्रन्थाः—

अयं विबुधः प्रायः सप्तविंशतिग्रन्थानरीरचदिति विज्ञायते। तत्र बहव उपलभ्यन्ते, अपरे नामतः श्रूयन्ते। ते जिज्ञासूनां कृतेऽत्र निर्दिश्यन्ते—

१ कृत्यचिन्तामणिः ( गोभिलगृह्यसूत्राणां विस्तृतं भाष्यम् )
२ सुबोधिनी ( गोभिलानुसारिकर्मणां प्रयोगपद्धतिः )
३ शान्तिचिन्तामणिः ( प्रयोगः )
४ ,, ( मूलमात्रक )
५ श्राद्धचिन्तामणिः ( सर्वश्राद्धविषयको निर्णयः )
६ श्राद्धपद्धतिः ( सर्वेषां श्राद्धानां प्रयोगः )
७ रुद्रचिन्तामणिः (लघुरुद्रादिनिर्णय)
८ रुद्रपद्धतिः( लघुरुद्रादिप्रयोगः )
९ मन्त्रचिन्तामणिः ( तान्त्रिककर्मनिर्णयः )
१० मन्त्रचिन्तामणिपद्धतिः ( आह्निक-पूजन-होम-शतचण्डी-यन्त्रप्रतिष्ठात्मकपञ्चप्रकाशात्मिका )
११ व्रतचिन्तामणिः (अनुपलभ्या)
१२ व्रतचिन्तामणिपद्धतिः( ,, )
१३ चतुर्णां गानानां ऋषिच्छन्दोदेवताः।
१४ आर्चिकऋष्याद्यः।
१५ मन्त्रब्राह्मणान्तर्गतमन्त्राणां ऋष्याद्यः।
१६ छान्दोग्योपनिषद्विवृतिः।
१७ कर्मप्रदीपविवृतिः।
१८ श्राद्धकल्पविवृतिः।

१९ पुष्पसूत्रविवृतिः ( पाटनपुरेऽस्तीति श्रूयते )
२० श्राद्धप्रदीपः ।
२१ मण्डपसङ्कुलीकरणम् ।
२२ वास्तुशान्तिः ।
२३ दानवाक्यसमुच्चयः ।
२४ निरग्निकाह्निकम् ।
२५ स्मार्तहोमादिप्रयोगः ।
२६ आशौचनिर्णयः ।
२७ गृह्यकारिका ( गोभिलगृह्यसूत्राणां पद्यात्मिका विवृतिः )

एतेषु श्रीसुबोधिनीमृते सर्वेऽप्यप्रकाशिताः सन्तः साम्प्रतं केषाञ्चिद्विदुषां भवने ज्ञाताज्ञाताः पुस्तकवेष्टनानि भूषयन्ति। सर्वान्त्सोदरानतिक्रम्येयं सुबोधिनी यस्य भगवतः सर्वशक्तिमतः सर्वान्तर्यामिणः परमेशितुः परानुग्रहेण प्राकाश्यं गता, तमेवान्येषामप्यचिरात्प्रकाशनानुग्रहाय सविनयं साभिनिवेशं च मुहुर्मुहुरभ्यर्थये। सम्प्रति यदनुग्रहेण विनैतद्दुष्करं सम्पादनकार्यमत्यल्पमतिशक्तिमानयञ्जनः कथमपि पारयितुं नाशक्ष्यत्, तस्यैव सच्चिदानन्दघनस्यानन्तमहिम्नः परमस्वतन्त्रस्यापि भक्तानुग्रहाधीनस्य विघ्नौघध्वान्तध्वंसद्युमणेः सर्वेश्वरस्य सकलतापापनोदनशीलेषु श्रीचरणेषु स्वशिरो भूयोभूयः प्रणम्य, ततस्तेषां श्रीशुक्लतीर्थनिवासिनां यज्ञावर्जितयज्ञेश्वराणामाहिताग्नीनां श्रीगौरीशङ्करपादानां, स्वकीयपितृव्यचरणानां श्रीबालकृष्णत्रिपाठिनां, श्रीखराशङ्करशर्मप्रभृतीनां पादाब्जेषु शतशः प्रणतिपुरस्सरं सादरं कृतज्ञतां व्यक्तीकरोमि, येऽस्य सुबोधिनीप्रकाशनस्य मूलभूताः। तेषामेव सदाग्रहेण सस्नेहमनेकविधसमयोपयोगिसन्मतिसत्साहाय्यार्पणेनाद्यायं स्ववसरोऽभ्युपस्थितः। तदन्वस्य प्रास्ताविकस्य समापनात्पूर्वं दुर्लभानगणितशास्त्रग्रन्थान्सम्मुद्य विहितविद्वद्विद्यार्थिव्रातोपकारानविरतनूतनग्रन्थप्रकाशनबद्धपरिकरान् सूत्साहवतः श्रेष्ठिवरगोलोकवासिहरिदासगुप्तात्मज श्रीजयकृष्णदासान् सात्मीयान् प्रति साशीर्वादं साधुवादान्समर्पये। अस्मिन् ग्रन्थप्रकाशनव्रते त एवमेव, इतोऽप्यधिकं वा सोत्साहानुरागाः सन्तः प्रयतिष्यन्तीत्याशासे।

अतः परं सर्वानपि तत्रभवतो विपश्चितः सप्रणति प्रार्थये, यदस्य सम्पादने मदीयमन्दमतित्व-भ्रम-प्रमादालस्यानवधानत्वदृष्टिच्युत्यस्वास्थ्यापत्त्यादिहेतुजा देहवत्सुलभा याः काश्चन त्रुटयः स्युस्ताः स्वीयदयालुस्वान्तत्वेन गुणैकपक्षपातशीलवत्त्वेन संक्षम्य यथावसरं ताभिरहं बोधनीयः। येन पुनर्मुद्रणावसरे ताः संशोधिता भवेयुः। भूयोऽपि तमेव सत्ताऽस्फूर्तिप्रदं भगवन्तं सानुरागं स्मृत्वाऽस्मात्कार्याद्विरमामि।

रामघाट, काशी
चैत्र शुक्ल ९ रवौ
१९९८ वैक्रमाब्दः

विदुषां विधेयः—
त्रिपाठ्युपाह्व श्री स्व० रणवीरदत्ततनुजन्मा—
**दुर्गादत्तशर्मा**

श्रीयज्ञनारायणो विजयतेतराम् ।

# अभिप्रायः ।

अहो ! स्ववत्सरोऽस्माकं जनदृष्ट्याऽस्तप्रायसामवेदानाम् । प्रथितमेवास्त्यनेकेषां विद्याभ्यासङ्गिनां गृहे करतले दृष्टौ ज्ञाने वाऽस्माक वेदसंरक्षकस्य मार्गदर्शकस्य पण्डितप्रवरस्य श्रीशिवरामस्य करकमलपावितं शुभकर्मविधिबोधकं 'सुबोधिनी' नाम 'कृत्यचिन्तामणि'-रित्यपरनाम ग्रन्थरत्नम् । तदिदं श्रीचौखम्बास्थ 'विद्याविलास' मुद्रणाधिपतिना श्रेष्ठिवरेण 'जयकृष्णदास' गुप्तेन स्वद्रव्यव्ययेन मुद्रणायोत्पाद्य, पण्डितधुरन्धरस्य सामवेदवाचस्पतेः श्री 'गोयनका विद्यालया' ध्यापकस्य वेदत्रयीपुरोहितस्य श्री 'दुर्गादत्त' त्रिपाठिनः सकाशात् संशोध्य जनेभ्यः ख्यापितम् ।

ग्रन्थेऽस्मिन् पञ्च प्रकाशाः । प्रथमे नान्दीश्राद्धम् , स्वस्तिवाचनम्, पूर्वाङ्गोत्तराङ्गप्रायश्चित्तम्, स्मार्ताग्न्याधानादि । द्वितीये सन्ध्यापूजातर्पणाद्याह्निकम्, स्मार्ताग्निपरिचर्या च । तृतीये पिण्डपितृयज्ञः, दर्शश्राद्धम् , पत्न्यादिस्थालीपाकादिश्च । चतुर्थे विवाहादिसमावर्तनान्ताः षोडश संस्काराः । पञ्चमे उपाकर्म ( श्रावणीप्रयोगः ), सप्त पाकसंस्थाः, वास्तुश्च । एते सर्वे प्रयोगाः समंत्रका इत्यतीवोपयोगि संग्राह्यं चेदं समेषां सामवेदान्तर्गतकौथुमीशाखाध्यायिनाम् ।

ग्रन्थस्यास्य मुद्रणेन हर्षोत्फुल्लं मानसमस्माकं, यतो जातोऽयमरुणोदयः सामवेदिनां कृते । ग्रन्थेऽस्मिन् केवलं प्रयोगा एव, न परवेदीया इव शास्त्रार्थविन्यासः । एवञ्च सरलमार्गदर्शकोऽयं ग्रन्थः । एतत्सम्बन्धिशास्त्रार्थविन्यासस्तु 'कृत्यचिन्तामणिभाष्य' नामके पृथक् द्वितीये ग्रन्थरत्ने । तस्य ग्रन्थस्य यथाकालं मुद्रणेन ग्रन्थोऽयं सुदृढतां समायास्यति जनानां समक्षम् ।

एतस्य ग्रन्थस्य प्रकाशनेन श्रीश्रेष्ठिप्रवरस्य 'जयकृष्णदासस्य' पण्डितधुर्यस्य श्री 'दुर्गादत्त' त्रिपाठिनश्च बहूपकारं मन्यामहे । ग्रन्थस्य समग्रस्य सम्पूर्त्यनन्तरं शुद्धिपत्राय ग्रन्थः पत्रश्चोभावभ्युपेतावस्माभिस्ततः । तदवसरे तस्मिन् कर्मणि मद्भ्रातृजेन भूतपूर्व 'लुणावाड़ा' स्टेट राजकीयसंस्कृतपाठशालाध्यापकेन 'काव्यरत्न-साहित्यभूषण-साहित्यशास्त्री' पदवीभूषितेन 'रामचन्द्र' शास्त्रिणा महत् साहाय्यमाचरितम् । अतस्तस्य शं विदध्यात् शङ्करः साम्बः ।

अभ्यर्थयेऽहं परमकृपालं परमेश्वरं, यद् ग्रन्थस्यास्य सम्यगुपयोगेन भविष्यति कालेऽन्येऽपि सामवेदग्रन्था झटिति प्रकाशतामायान्त्वित्याशास्तिपूर्वकमभिप्रैति ।

आहिताग्निः
**गौरीशङ्कर ओझा**
( शुक्लतीर्थस्थः )

---

वेद—कर्मकाण्ड-धर्मशास्त्रादि-सर्वविधग्रन्थानाम् एकमात्र प्राचीनतम प्राप्तिस्थानम्—

जयकृष्णदास—हरिदास गुप्तः—
**चौखम्बा संस्कृत पुस्तकालय,**
पो० बा० नं० ८ बनारस सिटी ।

# आवश्यकपूरणी ।

४८ पृष्ठे स्वस्तिवाचनाङ्गाभिषेकान्ते 'अनेन स्वस्तिवाचनाख्येन कर्मणा श्रीकर्माङ्गदेवः प्रीयताम् । स्वस्तिवाचनकर्मसमृद्धिरस्तु ।' इत्युक्त्वा जलमुत्सृजेत् ।

५० पृष्ठे कौतुकबन्धान्ते विहिता 'ब्राह्मणाः सन्तु' इत्यादि विप्रप्रार्थना विप्रवरणान्ते कार्येति विशेषः ।

८७ तमे पृष्ठे नित्यतर्पणप्रकरणे निरग्निकतर्पणसूचिका टिप्पणी भ्रमपतितास्तीति कृत्वा निरग्निकतर्पणे विशेषोऽत्र प्रदर्श्यते । निरग्निकेन 'नमो ब्रह्मणेत्याद्युपजाय चेत्यन्तं पठित्वा 'अग्निस्तृप्यतु' इत्यादि तर्पणस्थाने ब्रह्मादीनां तर्पणं कार्यम् । तद्यथा—ॐब्रह्माणं तर्पयामि । ॐ विष्णुं त० । ॐरुद्रं त० । ॐप्रजापतिं त० । ॐवेदांस्तर्पया० ॐ देवांस्त० । ॐ छन्दांसि त० । ॐ ऋषींस्त० । ॐ पुराणाचार्यांस्त० । ॐ गंधर्वांस्त० । ॐ इतरांस्त० । ॐ मासांस्त० । ॐ संवत्सरं सावयवं त० । ॐ देवीस्त० । ॐ अप्सरसस्त० । ॐ देवानुगांस्त० । ॐ नागांस्त० । ॐ सागरांस्त० । ॐ पर्वतांस्त० । ॐ सरितस्त० । ॐ दिव्यान्मनुष्यांस्त० । ॐ इतरान्मनुष्यांस्त० । ॐ यक्षांस्त० । ॐ रक्षांसि त० । ॐ सुपर्णांस्त० । ॐ पिशाचांस्त० । ॐपृथिवीं त० । ॐओषधीस्त० । ॐपशूंस्त० । ॐवनस्पतीस्त० । ॐभूतग्रामं चतुर्विधं त० । इति देवतर्पणम् ॥ अथ पितृतर्पणम् । प्राचीनावीतिदक्षिणाभिमुखः पातितवामजानुः कृष्णतिलैर्द्विगुणदर्भैः पितृतीर्थेन तर्पयेत् । ॐकारो महाव्याहृतयो गायत्री ब्रह्मा वेदा देवा ऋषयः पितरश्छन्दांस्याचार्यास्तृप्यन्ताम् । एवं त्रिवारं तर्पयित्वा यमादींस्तर्पयेत् । ॐयमं त० । ॐयमपुरुषं त० । ॐकव्यवालं त० । ॐनलं त० । ॐसोमं त० । ॐअर्यमणं त० । ॐअग्निष्वात्तांस्त० । ॐसोमपीथांस्त० । ॐबर्हिषदस्त० । अथ (१)स्वपित्रादीन् मात्रा-

---

(१) कोकिलमते पितृपितामहप्रपितामहान् मातृमातामहप्रमातामहान् प्रत्येकमञ्जलित्रयेण तर्पयेत् । सर्वत्र स्त्रीणां पितृगोत्रेण पृथक् तर्पणं न तु सपत्नीकशब्देन, तच्च तर्पणं यथासंभवं अञ्जलित्रयरूपं एकाञ्जलिरूपं वा सर्वेषां समानम् ।

दीन् सपत्नीकान् मातामहादींश्च नामगोत्रपूर्वकं प्रतिपुरुषमञ्जलित्र- येण द्वितीयान्तप्रयोगेन तर्पयेत् । ततः पत्नीमपत्यानि पितृव्यमातुल- स्वभ्रातॄन् पितृव्यमातुलस्वभ्रातृपत्नीः अपत्यधवसहिताः पितृस्वसृ- मातृस्वसृस्वस्वसॄः श्वश्रूश्वशुरौ सद्गुरुशिष्याप्तांश्च प्रत्येकं एकैका- ञ्जलिना तर्पयेत् । ततः — पितृवंशे मातृवंशे येचान्ये मत्त उदकमर्हन्ति तांस्तर्पयामीति तर्पयित्वा सनकादिमनुष्यतर्पणादि सर्वं यथावत् ।

११४ पृष्ठे साग्निकस्य वैश्वदेवविधिरुल्लिखितः । तत्र निरग्नि- कस्य तत्तत्स्थले विशेषविधिः प्रदर्श्यते । अन्यत्सर्वं समानम् । सङ्क- ल्पान्ते अरत्निमात्रे कुण्डे स्थण्डिले वा यथाविधिना पञ्चभूसंस्कारान् कृत्वा, पावकनामानमग्निं संस्थाप्य, वैश्वदेवार्थं पात्रे घृतप्लुतमन्नमु- द्धृत्य, आत्माग्न्योरन्तराले हविष्यं समिद्द्वयञ्च संस्थाप्य, उत्तरतः सजलं प्रणीतापात्रंसंन्यस्य, इदं भूमेरिति भूजप-प्रसेक-पर्युक्षण-स- मिद्धोमान् विधाय हविर्जुहुयात् । "ॐ भूःस्वाहा । इदमग्नये न मम ॥१॥ ॐ भुवः स्वाहा । इदं वायवे० ॥२॥ ॐ स्वः स्वाहा । इदं सूर्याय० ॥३॥ ॐ भूर्भुवःस्वः स्वाहा । इदं प्रजापतये० ॥४॥ ॐ देव- कृतस्यैनसोऽवयजनमसि स्वाहा । इदमग्नये० ॥५॥ ॐ पितृकृत- स्यैनसोऽवयजनमसि स्वाहा । इदमग्नये० ॥६॥ ॐ मनुष्यकृतस्यै- नसोऽवयजनमसि स्वाहा । इदमग्नये० ॥७॥ ॐ अस्मत्कृतस्यैनसो- ऽवयजनमसि स्वाहा । इदमग्नये० ॥८॥ ॐ यद्दिवा च नक्तं चैनश्च- कृम तस्यावयजनमसि स्वाहा । इदमग्नये० ॥९॥ ॐ यत्स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । इदमग्नये० ॥१०॥ ॐ यद्विद्वाँ सश्चाविद्वाँ सश्चैनश्चकृम तस्यावयजनमसि स्वाहा । इद- मग्नये० ॥ ११॥ॐ एनस एनसोऽवयजनमसि स्वाहा । इदमग्नये० ॥१२॥ ॐ अग्नये स्वाहा । इदमग्नये० ॥१३॥ ॐ धन्वन्तरये स्वाहा । इदं धन्वन्तरये० ॥१४॥ ॐ विश्वेभ्यो देवेभ्यःस्वाहा । इदं विश्वेभ्यो देवेभ्यो० ॥१५॥ॐप्रजापतये स्वाहा । इदं प्रजापतये० ॥१६॥ ॐअग्नये स्विष्टकृते स्वाहा। इदमग्नये स्विष्टकृते०॥१७॥" पुनः समिद्धोम-पर्युक्षण- प्रसेकादीन्विधाय हुतशेषेण 'पृथिव्यै नम' इत्यादि "पितृभ्यः स्वधा" इत्यन्तं बलीन् दत्वा, "आयुरारोग्यं" इत्यादिनाऽग्निं सम्प्रार्थ्य वाम- देव्यं गीत्वा चतुर्भिश्चेति प्रणमेत् । शेषमन्नं चतुर्द्धा कृत्वा "ॐ वि- श्वेभ्यो देवेभ्यो नमः" इति एकस्मिन्नंशे जलमुत्सृज्य "इदं विश्वेभ्यो

देवेभ्यो न मम” इति त्यागं कुर्यात् । ततोऽपसव्यं कृत्वा सद्विगुणकुशं जलमादाय “अमुकगोत्रा अस्मत्पितृपितामहप्रपितामहाः अमुकामुकामुकशर्माणः, अमुकगोत्राः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः अमुकामुकामुकशर्माणः यथाविभागमिदमन्नं वः स्वधा । इदं पितृभ्यो न मम” इति पितृतीर्थेन जलमुत्सृजेत् । सव्यं, उदकोपस्पर्शः । ततो निवीतिः सऋजुकुशं जलमादाय “ॐ इदमन्नं सनकादिमनुष्येभ्यो हन्त । इदं सनकादिमनुष्येभ्यो न मम” इति मनुष्यतीर्थेन जलमुत्सृज्य, सव्यं कुर्यात् । ततः “सौरभेय्यः सर्वहिताः पवित्राः पापनाशनाः । प्रतिगृह्णन्त्विमं ग्रासं गावस्त्रैलोक्यमातरः । इदं गोभ्यो न मम” इति जलमुत्सृजेत् ।

ततो भूमावुत्तरभागे प्राग्गतान् वक्ष्यमाणैश्चतुर्भिर्मन्त्रैश्चतुरो बलीन्दद्यात् । “ॐ ऐन्द्रवारुणवायव्या याम्या वै नैर्ऋतास्तथा । वायसाः प्रतिगृह्णन्तु भूमौ बल्यं मयार्पितम् । वायसेभ्यो नमः । इदं वायसेभ्यो न मम ॥१॥ द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ । ताभ्यामन्नं प्रदास्यामि स्यातामेतावहिंसकौ । श्वभ्यो नमः, इदं श्वभ्यो न मम ॥ २ ॥ देवा मनुष्याः पितरो वयाँसि यक्षाश्च सिद्धोरगदैत्यसंघाः । प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छन्ति मया प्रदत्तम् । देवादिभ्यो नमः, इदं देवादिभ्यो न मम ॥३॥ पिपीलिकाः कीटपतङ्गकाद्या बुभुक्षिताः कर्मनिबद्धबद्धाः । तृप्त्यर्थमन्नं तु मया प्रदत्तं येषामिदं ते मुदिता भवन्तु । कृम्यादिभ्यो नमः, इदं कृम्यादिभ्यो न मम ॥ ४ ॥ ततः “प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः” इति पठित्वा “अनेन पञ्चमहायज्ञाख्येन कर्मणा श्रीपरमेश्वरः प्रीयतां न मम” इति जलमुत्सृजेत् । ततो “गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन” इत्यग्निं प्रार्थ्य भुञ्जीत ।

१२८ पृष्ठस्थटिप्पण्यां जलाभिमन्त्रणविनियोगे ‘पाकप्रोक्षणाय’ इत्यस्य स्थाने ‘पाकादिप्रोक्षणाय’ इति संशोधनीयम् ।

२०१ पृष्ठे ‘अग्ने प्रायश्चित्ते’ इत्यादि मन्त्राणां ऊहप्रकारो दर्शितः, ‘पापीलक्ष्मी’ पदयुक्त मन्त्रपञ्चकमपि निदर्शितमस्ति । प्रयोगकाले सौकर्यायावशिष्टपञ्चदशमन्त्रा अप्यत्र लिख्यन्ते । प्रथमावृत्तिस्तु ग्रन्थे निर्दिष्टैव, ततः-‘ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि

ब्राह्मणस्त्वा नाथकाम उपधावामि यास्याः पतिघ्नी तनूस्तामस्या अपजहि स्वाहा । इदमग्नये न मम ॥६॥ ॐ वायो प्रायश्चित्ते त्वं० यास्याः पतिघ्नी तनूस्तामस्या अपजहि स्वाहा । इदं वायवे न मम ॥७॥ ॐ चन्द्र प्रायश्चित्ते० पतिघ्नी तनू० अपजहि स्वाहा । इदं वायवे० ॥८॥ ॐ सूर्य प्रायश्चित्ते० पतिघ्नी तनू० अपजहि स्वाहा । इदं सूर्याय० ॥९॥ ॐ अग्निवायुचन्द्रसूर्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयः स्थ ब्राह्मणो वो नाथकाम उपधावामि यास्याः पतिघ्नी तनस्तामस्या अपहत स्वाहा। इदं अग्निवायुचन्द्रसूर्येभ्यो न मम ॥१०॥

"ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्या अपुत्र्या तनूस्तामस्या अपजहि स्वाहा। इदं अग्नये न मम ॥११॥ ॐ वायो प्रायश्चित्ते त्वं० अपुत्र्या तनूस्ता० अपजहि स्वाहा । इदं वायवे० ॥१२॥ ॐ चन्द्र प्रायश्चित्ते त्वं० यास्या अपुत्र्या तनू० जहि स्वाहा । इदं चन्द्राय० ॥१३॥ ॐ सूर्य प्रायश्चित्ते० यास्या अपुत्र्या तनू० जहि स्वाहा । इदं सूर्याय० ॥१४॥ ॐ अग्निवायुचन्द्रसूर्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयः स्थ ब्राह्मणो वो नाथकाम उपधावामि यास्या अपुत्र्या तनूस्तामस्या अपहत स्वाहा । इदं अग्निवायुचन्द्रसूर्येभ्यो न मम ॥ १५ ॥"

"ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्या अपशव्या तनूस्तामस्या अपजहि स्वाहा । इदमग्नये न मम ॥१६॥ ॐ वायो प्रायश्चित्ते त्वं देवानां प्राय० यास्या अपशव्या तनूस्ता० अपजहि स्वाहा । इदं वायवे न मम॥१७॥ ॐ चन्द्र प्रायश्चित्ते त्वं देवानां० यास्या अपशव्या तनू० जहि स्वाहा । इदं चन्द्राय० ॥१८॥ ॐ सूर्य प्रायश्चित्ते त्वं देवानां० यास्या अपशव्या तनू० अपजहि स्वाहा । इदं सूर्याय० ॥१९॥ ॐ अग्निवायुचन्द्रसूर्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयः स्थ ब्राह्मणो वो नाथकाम उपधावामि यास्या अपशव्या तनूस्तामस्या अपहत स्वाहा । इदं अग्निवायुचन्द्रसूर्येभ्यो न मम ॥ २० ॥"



# सूचना ।

यद्यपि गोभिलसूत्रानुयायिना शिवरामेण सुबोधिन्यामेतस्यामग्न्यादितर्पणमेव निर्दिष्टम्, किन्तु तदग्निहोत्रिणां कृत एव, तत्कालेऽग्निहोत्रिणां बहुत्वात् । निरग्निकानां कृते तु कात्यायनेन नूत्नं गोभिलसूत्रावशिष्टवस्तुप्रदर्शकं 'कर्मप्रदीप' नाम पुस्तकं निर्माय त्रिप्रपाठकैः समापितम् । तस्य द्वितीये प्रपाठके द्वितीये खण्डे ब्रह्मादितर्पणं विन्यस्तम् । यथा हि:—'अथाद्भिस्तर्पयेद्द्देवान् सतिलाभिः पितॄनपि । नामान्ते तर्पयामीति आदावोमिति च ब्रुवन् ॥' इत्यादि । गोभिलेन च 'कर्मप्रदीप' नाम 'गोभिलस्मृति' नाम्ना 'छन्दोगपरिशिष्ट' नामान्तरेण त्रिपरिणम्याऽनुमोदितं तद्ग्रन्थरत्नम् । तदनुसृत्य शिवरामेण निरग्निकाह्निके ब्रह्मादितर्पणमेव समुद्घोषितम् । यथा हि:—'ॐ ब्रह्माणं तर्पयामि । ॐ विष्णुं तर्पयामि इत्यादि' । अस्माभिश्च पारम्पर्येण तथैवाऽऽचरितम् । अतो निरग्निकैर्ब्रह्मादितर्पणमेव कार्यं नाऽग्न्यादितर्पणम्, अग्निहोत्रिभिश्च अग्न्यादितर्पणमेवकार्यमिति मतमस्माकम् ।

विद्वत्कृपेच्छुवस्तुसंशोधक आहिताग्निः—

**गौरीशंकर ओझा**

( शुक्लतीर्थस्थः )

॥ श्रीः ॥

# श्री सामवेदीय-सुबोधिनीपद्धतिस्थविषयाणां सूचीपत्रम्।

## चतुर्थप्रकाशे—

श्रीगणेशाय नमः ।

# अथ
# सामवेदीय-सुबोधिनीपद्धतिः ।

प्रणम्य तातं विश्रामं विघ्नेशं जगदम्बिकाम् ।
कृत्यचिन्तामणौ स्वीये निर्णीतानां तु कर्मणाम् ॥ १ ॥
प्रयोगपद्धतिं सम्यग्गुरूणां सुप्रसादतः ।
सामगानां हितार्थाय कुर्वे नाम्ना सुबोधिनीम् ॥ २ ॥

तत्राऽऽदौ परिभाषा— यज्ञोपवीती आचान्तो बद्धशिखः कृतप्राणायामो देशं कालं च सङ्कीर्त्य यज्ञियवृक्षनिर्मितासने समुपविष्टो दर्भपाणिश्च कर्म कुर्यात्। यत्र दिगनुपदेशस्तत्कर्म प्रागुत्तरैशानान्यतमाभिमुखः कुर्यात् । अङ्गानुक्तौ दक्षिणकरः सर्वकर्मसु। तिष्ठता प्रह्वेण उपविष्टेन वेति यत्र नोक्तं तदुपविश्यैव कर्त्तव्यम् । अनुक्तकालं कर्म उदगयने शुक्लपक्षे शुभेऽह्नि मध्याह्नादर्वाक्कर्त्तव्यम् । नियतकालमुक्तकाले कार्यम् । एकवासा द्वीपे शूद्रान्त्यजपतितभ्रमणयंत्रशब्दश्रवणे कर्म न कार्यम्, गवांशतमेकवृषभाधिकं यस्मिन् द्वीपे तिष्ठति तत्र कर्म कार्यम् । सर्वाणि गर्भाधानादीनि कर्माणि वृद्धिश्राद्धपूर्वकाणि भवन्ति। यत्र वृद्धिश्राद्धनिषेधस्तानि निर्णये द्रष्टव्यानि। सर्वत्र कर्मसमाप्तौ ब्राह्मणभोजनम् , इति सामान्यतः परिभाषा ।

**अथ सकलमङ्गलकर्मारम्भादौ गणपतिमातृपूजाभ्युदयिकश्राद्धादीनां प्रयोगः ।** तत्राऽऽदौ गणपतिपूजा—तत्र कर्माहे प्रातः सुस्नातः शुचिः शुक्लवासोधरः कृतनित्यक्रियः प्रक्षालितपाणिपादः आचान्तः कर्ता गोमयोपलिप्तायां भुवि यज्ञियवृक्षजं पीठं उदगग्रं संन्यस्य तदुपर्युदगग्रं कुशमास्तीर्य तस्मिन्नासने प्राङ्मुख

उपविश्य प्रारीप्स्यमाणमङ्गलकर्मणो निर्विघ्नपरिसमाप्तिकामो विनायकम्पूजयेत् ।

यथा—पूजोपहारान् समानीय कुशयवजलान्यादाय देशकालौ सङ्कीर्त्य कर्त्तव्यामुककर्मणो निर्विघ्नपरिसमाप्तिकामो गणपतिपूजामहङ्करिष्ये, इति सङ्कल्प्य शुद्धोदकगन्धपुष्पादिकमर्घपात्रे कृत्वा कुशाग्रैस्तज्जलं संस्पृश्य गायत्र्याऽभिमन्त्र्य तैरेवकुशाग्रैस्तज्जलं संगृह्य तेन कुशाग्रगृहीतजलेन पूजाद्रव्याणि सम्प्रोक्ष्य गणपतिमावाहयेत् । ॐ भूर्भुवः स्वः विनायक ! इहाऽऽगच्छेति स्थण्डिले मूर्त्तौ वा विनायकमावाह्येह तिष्ठेति संस्थापयेत् । ततः ॐ विनायकायेदमासनं नमः इत्यासनं दत्वा इदं पाद्यं विनायकाय नम इति पाद्यम् । अथवा—'ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्ती प्रचोदयात्' इतिगणपतिगायत्र्या पाद्यादुयुपचाराः कर्त्तव्याः । एवं एषोऽर्घः, इदमाचमनीयम् , इदं स्नानम् , इदं पुनराचमनीयम् , इदं वस्त्रम् , इदं यज्ञोपवीतम् , एष गन्धः, एतानि पुष्पाणि, एष धूपः, एष दीपः, इदं नैवेद्यम् , इदं पुनराचमनीयम् , तत आरार्तिकम्, प्रदाणिक्षा, स्तुतिः, अञ्जलिं बध्वा—

'लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय ।
अविघ्नं कुरु मे देव ! सर्वकार्येषु सर्वदा ॥'

एवं स्तुत्वा नमस्कृत्याऽञ्जलिं बध्वा अनया मया कृतया पूजया विनायकः प्रीयताम् । एवं पूजां निवेद्य 'ॐ विनायक क्षमस्व' इति विसर्जयेत् । नो चेत् प्रारब्धमङ्गलकर्मणो निर्विघ्नपरिसमाप्तिकामः प्रत्यहं विनायकं पूजयेत्, कर्मसमाप्तिपर्यन्तम् । तदुत्तरं विसर्जयेत् । इति गणपतिपूजाप्रयोगः ।

अथ ब्राह्मणानां निमन्त्रणम् । परमोत्साहवान् श्रीमद्गणपतिमिष्टदैवतं च संस्मरन् स्वयं सायङ्कालोत्तरं द्विजायतने गत्वा कृताञ्जलिपुटो भक्तिपूर्वकं प्रणम्य शुभासने प्राङ्मुखं विप्रद्वयं उपवेश्य स्वयमुपवीती उदङ्मुखो दक्षिणं जान्वाच्योपविश्य सयवहस्त-

स्तया दक्षिणजानुनी स्पृशन् श्वः कर्त्तव्यास्मत्पित्रादित्रयस्य मातामहादित्रयस्य च वृद्धिश्राद्धसम्बन्धिवैश्वदेविकौ युवामहं निमन्त्रयामि । ततः 'निमन्त्रितौ स्वः' इति ताभ्यामुक्ते तथैवाऽपरं विप्रद्वयमुपवेश्य तथैव जानुनी स्पृष्ट्वा नान्दीमुखानामस्मत्पितृपितामहप्रपितामहानां श्वो वृद्धिश्राद्धकरणाय युवामहं निमन्त्रयामीति । ततः 'निमन्त्रितौ स्वः' इति ताभ्यामुक्ते तथैवाऽपरं विप्रद्वयमुपवेश्य पूर्ववत् जानुनी स्पृष्ट्वा नान्दीमुखानामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानां श्वो वृद्धिश्राद्धकरणाय युवामहं निमन्त्रयामि । ततस्तथैव ताभ्यामुक्ते अञ्जलिं बद्ध्वा पठेत्—

'ॐसर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।
भवितव्यं भवद्भिश्च श्वोभूते श्राद्धकर्मणि ॥'

ततो यथाविघ्नेन रात्रिर्यास्यति सर्वमेतत्करिष्याम इति विप्रैरुक्ते कर्त्ता निमन्त्रिताश्च ब्रह्मचर्येण शयीरन्, प्रतिपुरुषं ब्राह्मणभेदे नान्दीमुखपितृब्राह्मणकार्यसम्पत्तये युवामहं निमन्त्रयामीति विशेषः, एवमपरयोः । मातामहादीनां च तत्तन्नामपूर्वकम् । पूर्वदिननिमन्त्रणासम्भवे नियतब्रह्मचर्यान् श्राद्धदिने प्रातर्निमन्त्रयेत् । तदा वाक्ये श्वःपदस्थाने अद्याऽस्मत्पित्रादित्रयेति विशेषः । नियमश्रावणम्—

'अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ।
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ॥' इति ।

समानमन्यत् । ततो निमन्त्रणोत्तरं ब्राह्मणैराज्यदोहानि त्रीणि सामानि पठनीयानि । एवं निमन्त्र्य गृहमागच्छेत् । स्वयमपि श्राद्धसमाप्तिपर्यन्तं नियमवान् भवेत् । ततः प्रातरेव स्नानसन्ध्यातर्पणानि विधायाऽऽदौ मातृपूजां कुर्यात् ।

**अथ मातृपूजनम्** । तत्राऽऽसादनक्रमः—शुद्धोदकपात्रं कुशाः शमीपत्राणि यवाः स्फटिकमणिमय्यो रजतमय्यः भित्त्यादिषु

शुक्लचन्दनेन लिखित्वा यवपुञ्जेषु पञ्चदशप्रतिमा वा यज्ञियवृक्षजं पीठं वस्त्रं कुङ्कुमं घृतं वसोर्द्धाराकरणक्षमं पात्रम् सूत्रं गुडः चन्दनं पुष्पाणि धूपपात्रं दीपपात्रं सघृताक्तवर्त्तिकं पञ्चदशपूगीफलानि नैवेद्यानि च नारिकेलं ताम्बूलानि दाक्षिणा एतान्यासाद्य आचम्य प्राणानायम्य सोमसामादीनि पठित्वा गुर्वादीन्नत्वा पात्रे शुद्धोदकमापूर्य्य शमीपत्राक्षतचन्दनानि निःक्षिप्य तज्जलं कुशाग्रैः संस्पृश्य गायत्र्याऽभिमन्त्र्य उपहारान् प्रोक्ष्य देशकालादि संकीर्त्य अमुककर्माङ्गत्वेन सगणाधिपगौर्य्यादिचतुर्दशमातृणां वसोर्द्धारासहितानां पूजामहं करिष्ये इति सङ्कल्प्य यज्ञियवृक्षमयमासनं प्रागग्रमुदगग्रं वा संन्यस्य तदुपरि रक्तवस्त्रमास्तीर्य्य तदुपर्यक्षतैः कुङ्कुमेन वा समाचाराच्चतुरस्रमेकद्वारं गृहं विरच्य प्रादक्षिण्येन विनायकादिचतुर्दशमातृकाणां स्थापनं कुर्यात् । प्रतिमापक्षे स्फटिकरजतादिनिर्मिता गणेशगौर्यादिपञ्चदशप्रतिमाः संन्यस्याऽथवा पटादिषु शुक्लचन्दनादिना पञ्चदशप्रतिमाः संलिख्याऽथवा यवमुष्टिमयपञ्चदशपुञ्जान्वा सम्पाद्य 'ॐ भूर्भुवः स्वर्गणाधिपेहाऽऽगच्छ' इति प्रतिमाद्यन्यतमे गणेशमावाह्येह तिष्ठेति स्थापयित्वा एवं गौरीहाऽऽगच्छेह तिष्ठेतिगौरीम् । पद्मे इहागच्छेह तिष्ठ । शचीहागच्छेह तिष्ठ । मेधे इहागच्छेह तिष्ठ । सावित्रीहागच्छेह तिष्ठ । विजये इहागच्छेह तिष्ठ । जये इहागच्छेह तिष्ठ । देवसेने इहागच्छेह तिष्ठ । स्वधे इहागच्छेह तिष्ठ । स्वाहे इहागच्छेह तिष्ठ । धृते इहागच्छेह तिष्ठ । पुष्टे इहागच्छेह तिष्ठ । तुष्टे इहागच्छेह तिष्ठ । कुलदेवते इहागच्छेह तिष्ठेत्येवं प्रत्येकमावाह्य संस्थापयेत् । ततस्तत्समीपभित्तौ वसोर्द्धाराः कर्त्तव्याः । यथा—पात्रे घृतमादाय तेन भित्तौ प्रादक्षिण्येन सप्त पञ्च वा धाराः कुर्यात् एभिर्मन्त्रैः—'ॐ एतमुत्यं मदच्युतꣳ सहस्रधारं वृषभं दिवोदुहम् । विश्वावसूनि बिभ्रतम्'(१) । एतमुत्य-

(१) इदन्त्वत्राऽनुसन्धेयम्—एष हि सर्वत्र नियमः यत् प्रत्येकं

मिति ककुभऋषिः उष्णिग्छन्दः अग्निर्देवता वसोर्धाराकरणे विनियोगः । अथवा अनेन च 'ॐ वसुरग्निर्वसुश्रवा अच्छानक्षि द्युमत्तमो रयिं दाः' । अस्य मन्त्रस्य प्रजापतिऋषिः संकृतिच्छन्दः अग्निर्देवता वसोर्धाराकरणे विनियोगः । 'सोमं राजानम्' इति मन्त्रेण च । सोमं राजानमिति बार्हस्पत्यं साम बृहस्पतिऋषिः अनुष्टुप्छन्दः अग्निर्देवता वसोर्धाराकरणे विनियोगः । एवमन्यतमेन साम्ना वसोर्धारां कृत्वा समाचारात्तदुपरि कुङ्कुमबिन्दून्कृत्वा गुडेन सूत्रं दत्वा प्रतिष्ठां कुर्यात् । कुंकुमरंजिताक्षतानादाय प्रतिष्ठामन्त्रौ पठित्वा अद्य समस्तपुण्यकालावयवयोगेषु एवंग्रहगणविशेषणविशिष्टायां तिथौ गणेशगौर्याद्याश्चतुर्दशमातरो वसोर्धारासहिताः सुप्रतिष्ठिता वरदा भवन्त्वित्युच्चार्याऽक्षतांस्तत्रमातॄणामुपरि प्रक्षिपेत् । ततो गणेशादीनां पूजनं प्रणवादिनमोन्तैस्तत्तन्नाममन्त्रैः इदं पाद्यम् । ॐगणाधिपतये नमः । एवं एष वो अर्घः, इदमाचमनीयम् , इदं स्नानम्, पुनराचमनीयम् , इदं वस्त्रम् , यज्ञोपवीतम् , एष गन्धः, एतानि पुष्पाणि, अक्षताः, धूपः, दीपः, नैवेद्यम् । नैवेद्यन्तु मण्डकपूरिकामोदकपर्पटपायसान्नादि ; एतैरेवद्रव्यैर्यथाकुलाचारविहितैरन्यैश्च एष बलिः, इमानि ताम्बूलानि । ततः प्रदक्षिणास्तुतिनमस्कारान्विधाय । एवं काण्डानुसमयेन पाद्याद्युपचारैर्विनायकं सम्पूज्य । एवमेव इदं पाद्यं गौर्यै नमः । पद्मायै नमः । शच्यै० ।.मेधायै० । सावित्र्यै० । विजयायै० । जयायै० । देवसेनायै० । स्वधायै० । स्वाहायै० । धृत्यै० । पुष्ट्यै० । तुष्ट्यै० । कुलदेवतायै नमः । एवं प्रतिदैवतं पाद्याद्युपचारैरभ्यर्च्य सर्वेभ्यः पृथक् यथासम्भवं बलिवस्त्रदानं कर्त्तव्यम् । असम्भवे तु पदार्थानुसमयेन पूजां कृत्वा सर्वे-

---

मन्त्राणां पूर्वं ऋषिच्छन्दादिपरिज्ञानद्वारा विनयोगं सम्पाद्याऽनन्तरं तत्तन्मन्त्राणां तत्तत्कर्मसु विनियोगो विधेयः, अतोऽत्र यद्यपि मन्त्रस्वरूपं पूर्वं प्रदर्शितम् , तथापि विनियोगान्तरं तस्य विनियोगो बोध्यः, एषा । रीतिः सर्वत्राऽनुसन्धेयेति दिक् ।

भ्यस्तन्त्रेण बलिवस्त्रदानं कर्त्तव्यम् ।

प्रयोगो यथा—शोभने पात्रे यथाकुलाचारविहितं बलिं संस्थाप्य सकुशोदकमादाय 'कुलाचारविहितमिमम्बलिं गणेशगौर्यादिचतुर्दशमातृभ्यो यथायथा विभागं वः स्वाहा' इत्युच्चार्य जलमुत्सृजेत् । एवं वस्त्रसङ्कल्पः । कुलाचारविहितमिदं वस्त्रम्, गणेशगौर्यादित्यादि पूर्ववत् । ततः समाचारात्सुसम्प्रोक्षितमस्त्वित्यादिदीर्घमायुः शान्तिः पुष्टिस्तुष्टिश्चास्त्विवसन्तमुक्त्वा सङ्कल्पं कुर्यात् । कृतैतन्मातृपूजनसाङ्गतासिध्यर्थं यथासम्पन्नेनाऽन्नेन ब्राह्मणभोजनेनाऽहन्तर्पयिष्ये । कृतैतन्मातृपूजनसाङ्गतासिध्यर्थं दक्षिणामहं दास्ये । ततोऽञ्जलिं बध्वोपविष्टान् ब्राह्मणान प्रार्थयेत् । एतन्मातृपूजनकृतस्य विधेर्यन्यूनातिरिक्तं तत्सर्वं श्रीमतां प्रसादात् परिपूर्णमस्तु । उत्तरे कर्मण्यविघ्नमस्तु । इति मातृपूजाप्रयोगः ।

तत आयुःशान्तिजपः । 'अबोध्यग्निः' इति प्रजापतिऋषिः, त्रिष्टुप्छन्दः, अग्निर्देवता । 'महित्रीणाम्' इति द्वयोः पष्ठवाड्ऋषिः, गायत्रीच्छन्दः, प्रजापतिर्देवता । 'त्वावत' इति साकमश्वऋषिः, गायत्रीछन्दः, इन्द्रो देवता । 'इन्द्रं नर' इति गौरीवितऋषिः, त्रिष्टुप्छन्दः, इन्द्रो देवता । 'त्यमूष्विति' द्वयोस्तार्क्ष्यऋषिः, त्रिष्टुप्छन्दः, इन्द्रो देवता । 'त्रातारम्' इति इन्द्रऋषिः, त्रिष्टुप्छन्दः, इन्द्रो देवता । 'सोमः पुनान' इति प्रजापतिऋषिः, उष्णिक्छन्दः, सोमो देवता । 'समुन्वेय' इति भरद्वाजऋषिः, गायत्रीछन्दः, सोमो देवता । 'विश्वतोदावन्' इति इन्द्रऋषिः पष्ठवाट्पंक्तिश्छन्दः, वरुणादित्येन्द्राः देवताः । 'उदुत्तमम्' इति वरुणगौतमऋषिः, त्रिष्टुप्छन्दः, वरुणादित्यौ देवते शान्त्यर्थे जपे विनियोगः । एवमृष्यादीन् स्मृत्वा आयुःशान्ति जपेत् । इत्यायुःशान्तिजपः । ततो वैश्वदेवः । तत्र वक्ष्यमाणविधिना गृहीताग्निर्निरग्निर्व्याहृतिभिः शाकलमन्त्रैर्गौतमोक्तैरग्न्यादिभिर्मन्त्रैश्च वैश्वदेवं बलिकर्मसहितं कुर्यात् ।

अथाऽभ्युदयश्राद्धप्रयोगः । तत्र पूर्वेद्युः प्रातर्वा निमन्त्रितान् ब्राह्मणान् प्रातरेवाऽऽगतान्प्रत्युत्थानाभिवादनादिभिः सत्कृत्य स्वागतमिति ब्राह्मणान् प्रत्युक्त्वा सुस्वागतमिति तैरुक्ते रथ्यारजोपनयनार्थं पादप्रक्षालनाय जलदानम् । तत आचमनम् । ततश्चतुरस्रमण्डलद्वयकरणम् । दैविकद्विजार्थमेकं पैतृकार्थमन्यत् । मण्डलद्वयेऽपि प्राक्प्रवणता कार्या । दैवादुत्तरतः पित्र्यम् । अथ स्वयं पादौ प्रक्षाल्य द्विराचम्य दैविकमण्डले द्विजद्वयोपवेशनार्थं पीठद्वयं संस्थाप्य तदुपरि सयवौ ऋजूदगग्रौ कुशौ स्थानद्वये निदध्यात् । एवं द्वितीयेऽपि मण्डले पैतृकद्विजद्वयोपवेशनार्थं सकुशैर्यवपूर्वासनद्वयादुत्तरतः स्थापयेत् । तत एवमेवाऽऽसनद्वयं मातामहपार्वणस्य ब्राह्मणद्वयोपवेशनार्थं स्थापयेत् । अनेकब्राह्मणपक्षेऽपि एवमेव पृथक् आसनानि स्थापनीयानि । सुस्नाता ब्राह्मणाः स्वे पीठे प्राङ्मुखा उदक्संस्था उपविशेयुः । ततः स्वयं दैविकब्राह्मणद्वयस्य दक्षिणभागे उदङ्मुख उपविश्य प्रथमोपविष्टद्विजाय पाद्याद्युपचारान्दद्यात् । यथा—गन्धपुष्पाक्षतजलोपेतमञ्जलिं देवतीर्थेन क्रतुदक्षनामानः सत्यवसुनामानो वा विश्वेदेवा एतत्पादार्घ्यं वो नम इत्युक्त्वा पादयोर्निनीयाऽभिवन्द्याऽन्येन जलेन पादौ प्रक्षालयेत् । ततः कांस्यपात्रे जलकुसुमाक्षतदधीनि निःक्षिप्य क्रतुदक्षनामभ्यः सत्यवसुनामभ्यो वा विश्वेभ्यो देवेभ्यः इदमर्घ्यमित्युक्त्वाऽञ्जलावर्घ्यं दद्यात् । ततश्चन्दनेन पादजान्वंसमूर्द्धसु दक्षिणाङ्गपूर्वकम्पूजयेत् पुष्पैश्च । एवं तदुत्तरत उपविष्टं द्वितीयं ब्राह्मणं पाद्यादिभिरुपचारैरभ्यर्च्यैवमेवाऽपरं विप्रद्वयमुपवेश्य पूजयेत् । पूर्ववदुपविश्याऽञ्जलिं पूर्ववत्सम्पूर्य अमुकगोत्राः नान्दीमुखाः अस्मत्पितृपितामहप्रपितामहाः अमुकामुकामुकशर्माणः इदं वः पाद्यं इत्युक्त्वा पादयोर्निनीयाऽभिवन्द्याऽन्येन जलेन पादौ प्रक्षाल्य अर्घ्यादिभिः पूर्ववत् पूजयेत् । एवं द्वितीयम् । ततस्तदुत्तरत उपविष्टं मातामहादित्रयस्य ब्राह्मणद्वयं पूजयेत् पूर्ववत् । तत्राऽमुकगोत्राः नान्दीमुखाः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः

अमुकामुकामुकशर्माणः इदं वः पाद्यम्, इत्यादि। पूर्ववत्पूजनान्तम्। प्रतिपुरुषं विप्रद्वयकरणपक्षे अमुकगोत्र नान्दीमुखास्मत्पितरमुकशर्मन्! एतत्ते पाद्यमिति विशेषः। एवं प्रत्येकं सर्वत्र। ततो द्विजाः सर्वेमण्ड- लादुत्तरतो द्विराचामेयुः। ततः कर्त्ता अन्यस्मिन् प्रदेशे द्विजचरणक्षा- लनोदकसंसर्गमकुर्वन् स्वपादौ प्रक्षाल्य दर्भपाणिर्द्विराचम्य ब्राह्म- णानग्रतः कृत्वा तैः सह श्राद्धभूमिमागच्छेत्। ततस्तेषामुपवेशनार्थ- मासनस्थापनम्। तान्यासनान्युदगग्रदर्भोपहितान्युदक्संस्थानि दै- विकानां पैतृकाणां च। तत्र पूर्वं दैविकानुपवेशयेत्। स्वयमुदङ्मु- खाः सव्यहस्तेनाऽऽसनमालभ्य दक्षिणेन सयवेन निरङ्गुष्ठद्विजहस्त- मुपसंगृह्य 'ॐभूर्भुवः स्वः' समाध्वमित्युक्त्वा उपवेशयेत्। 'ॐसमास्महे' इति प्रतिवचनम्। एवमन्यानपि द्विजान् प्राङ्मुखानुदक्संस्था- नुपवेश्य स्वयमुदङ्मुखोपविश्याऽऽचम्य संहितात्मिकाङ्गायत्रीं तद्गा- यत्रञ्च 'सोमं राजानम्'इति च पठित्वा श्रीमद्गणपतिं कुलदेवीं च नत्वा श्राद्धमारभेत। तत्र पूर्वद्विजासनसमीपे प्रत्यासनं श्राद्धसमा- प्तिपर्यन्तं स्थापितान् दीपान् साधारान् स्थापयेत्। असम्भवे एकं वा। श्राद्धारम्भनिमित्तं विष्णुविनायकौ पञ्चोपचारैः सम्पूज्य 'इदं विष्णुः' इति द्विजाग्रे दक्षिणावर्त्तं यवान्विकीर्य्य अग्निष्वात्तादिभिर्म- न्त्रैर्ऋजुकुशाक्षतप्रक्षेपेण दिशो बध्वा रक्षोभूतादिभिर्मन्त्रैः सर्षप- प्रक्षेपेण द्वारबन्धनं कृत्वा सप्तव्याधादशार्णेष्विति श्लोकद्वयं पठेत्।

सप्तव्याधादशार्णेषु मृगाः कालञ्जरे गिरौ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे॥
तेऽपि याताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः।
प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदथ॥

ततस्ताम्रपात्रे प्रणीतासंज्ञके शुद्धोदकमापूर्य्य चन्दनपुष्पाक्ष- तांस्तत्र निःक्षिप्य कुशाग्रैस्तज्जलं संस्पृश्य दशधा गायत्रीं सञ्जप्य प्रद- क्षिणमालोडयन् 'एतोन्विन्द्रं स्तवाम्' 'तद्विष्णोः परमम्प- दम्' इति मेधातिथिनृचद्गायत्रीवैष्णवी 'एतोन्विन्द्रंस्तवाम' इत्याद्यृचः

पठित्वा ऋजुदर्भैरुपयोगक्रमेण प्रणीतास्थजलेनोपहारान् श्राद्धपाकञ्च प्रोक्षयेत्। ततोऽञ्जलिं बध्वा द्विजान् प्रार्थयेत् । भवतां प्रसादान्नान्दीश्राद्धोपहाराणां पवित्रताऽस्तु, अस्त्विति द्विजाः । ततो देशकालादिसम्पदः प्रार्थयेत् । प्रश्नेषु सर्वत्र पङ्क्तिमुख्यं पृच्छेत् सर्वान्वा । ततो देशकालौ सङ्कीर्त्याऽमुकगोत्राणां नान्दीमुखानामस्मत्पितृपितामहप्रपितामहानाम् अमुकामुकामुकशर्मणाम् अमुकगोत्राणां नान्दीमुखानामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाममुकामुकामुकशर्मणामेषामद्याऽमुककर्माङ्गनिमित्तं वा नान्दीश्राद्धं द्विपात्रेणात्मकमर्घ्यपिण्डसहितं सवैश्वदेवं युष्मदनुज्ञया अहं करिष्ये इति सङ्कल्प्याऽऽसनदानं कुर्यात् । तत्र स्वयमुदङ्मुखो दक्षिणं जान्वाच्य द्विजस्य दक्षिणभागे उपविश्य स्ववामेन तस्य दक्षिणहस्तं गृहीत्वा यवजलसहितं दर्भयुग्मं ऋज्वेवाऽऽदाय क्रतुदक्षनामभ्यः सत्यवसुनामभ्यो वा विश्वेभ्यो देवेभ्य इदमासनं स्वाहेति द्विजहस्ते तदुदकमासिच्याऽऽसनदक्षिणभागस्योपरि देवतीर्थेन तद्दर्भयुग्ममुदगग्रं क्षिपेत् । स्वासनमस्त्विति द्विजप्रत्युक्तिः । ततः पुनर्द्विजहस्ते हस्तप्रक्षालनार्थं जलमासिच्य उपग्रहविष्टरार्थाः इमे कुशा इत्युक्त्वा कुशान् दद्यादेवमेव द्वितीयदैविकाद्विजायाऽऽसनं दत्वा पितृभ्य आसनं दद्यात् । पूर्ववदुपविश्य सयवोदकं कुशौ पूर्ववदादाय अमुकगोत्रेभ्यो नान्दीमुखेभ्योऽस्मत्पितृपितामहप्रपितामहेभ्यः अमुकामुकामुकशर्मभ्यः इदमासनं स्वाहेत्युक्त्वा हस्ते जलमासिच्याऽऽसनदक्षिणभागस्योपरि देवतीर्थेन तद्दर्भयुग्ममुदगग्राङ्क्षिप्त्वा हस्तप्रक्षालनादि पूर्ववत्। द्वितीयब्राह्मणायैवमेवाऽऽसनं दत्वा मातामहेभ्य आसनं दद्यादेवमेव । अमुकगोत्रेभ्यो नान्दीमुखेभ्योऽस्मन्मातामहप्रमातामहवृद्धप्रमातामहेभ्यः अमुकामुकामुकशर्मभ्य इदमासनं स्वाहेत्यादि प्राग्वत् । प्रतिपुरुषं ब्राह्मणपक्षे तु अमुकगोत्राय नान्दीमुखायाऽस्मत्पित्रे अमुकशर्मणे इदमासनं स्वाहेत्येवं तत्तन्नामपूर्वकं सर्वत्र । ततः आवाहनम् । पूर्ववदुपविश्य गृहीतयवहस्तो विप्रस्य दक्षिणजानुं संस्पृश्य 'क्रतुदक्ष-

संज्ञान् सत्यवसुसंज्ञान् वा विश्वान्देवानावाहयिष्ये' इति पृष्ट्वा 'आवाहय'इत्यनुज्ञातो 'विश्वेदेवा स आगतेत्यादि निषीदत'इत्यन्तं(१) पठित्वा जानुमुन्मुच्य 'विश्वेदेवाः शृणुते'(२) 'ओषधये'(३) इति मन्त्रौ पठित्वा प्रदक्षिणं पुरतो यवान् विकीर्य्य कृताञ्जलिः 'आगच्छन्तु महाभागा'०(४)इति पठेत् । द्विजानेकत्वपक्षेऽपि सकृदेवाऽऽवाहनम् । यवारोपणं भेदेन । 'विश्वेदेवाः शृणुते'इत्यादिजपः सकृदेव । ततः पितॄनावाहयेत् । पूर्ववदुपविश्य यवानादाय जान्वालभ्य अमुकगोत्रान् नान्दीमुखानस्मत्पितृपितामहप्रपितामहान् अमुकामुकशर्मणः आवाहयिष्य इति पृष्ट्वा आवाहयेत्यनुज्ञातो 'उषन्तस्त्वा' इति पठेत् । द्विजबहुत्वपक्षे पित्रादीनां नामव्याहरणसमये तत्तद्विप्रं संस्पृशेत् । कर्त्रा मन्त्रे पठ्यमाने विप्राः परस्परं संस्पृष्टा भवेयुः । तत्र 'उशन्तस्त्वा' 'एत पितर' (५)इति मन्त्रद्वयं जान्वालम्भनपूर्वकं जप्त्वा जानुमुन्मुच्य यवकुशौ प्रादक्षिण्येन विकीर्य्य कृताञ्जलिः 'आयन्तु नः' (६)इति पठेत् । द्विजबहुत्वपक्षेऽपि पूर्ववत् प्रत्येकं यवप्रक्षेपादिसकृज्जपान्तम् । तत एव मातामहादीनां आवाहनं । अमुकगो-

---

(१) विश्वेदेवा स आगत शृणुता मयि मः हवम् । एदं बर्हिर्निषीदत इति मन्त्रस्वरूपमत्र बोध्यम् ।

(२) विश्वेदेवाः शृणुतेमꣳ हवं मेये अन्तरिक्षे य उपद्यविष्ठ । ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ।

(३) ओषधयः समवदन्त सोमेन सह राज्ञा, यस्मै कृणोति ब्राह्मणस्तꣳ राजन् पारयामसि ।

(४) आगच्छन्तु महाभागा विश्वेदेवा महाबलाः । ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते ।

(५) उशन्तस्त्वा निधीमह्युषन्तः समिधीमहि । उशं नु शत आवह पितॄन् हविषे अत्तवे ॥

एत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः । दत्तास्मभ्यं द्रविणेह भद्रꣳ रयिञ्च नः सर्ववीरं नियच्छत ।

(६) आयन्तु नः पितरः सोम्यासो अग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वाहया मदन्तोधि ब्रुवन्तु ते वन्त्वस्मान् ।

त्रान्नान्दीमुखानस्मन्मातामहप्रमातामहवृद्धप्रमातामहान् अमुकामुका-
मुकशर्मणः आवाहयिष्य इत्यादि प्राग्वत् । ततो 'अपहता' इति
मन्त्रेण(१) प्रदक्षिणं पुरतो यवान् विकिरेत् । तत उदकोपस्पर्शनम् ।
आवाहनोत्तरमार्षभाणि सामानि ब्राह्मणाः पठेयुः अतीषङ्गांश्च ।

यथा-रैवतर्षभस्य रुद्रो गायत्रीन्द्रः । शाक्वरर्षभस्य रुद्रःपङ्क्ति-
रिन्द्रः । अतीषङ्गानां त्रयाणां इन्द्रोनुष्टुप् गायत्रीसोमः । इन्द्र-
स्त्रिष्टुप्सोमो गायत्रीसोमः । इन्द्रोनुष्टुप्सोमो गायत्रीसोमः ।

२र १र र २१र २ र१र १ ३ २ २र १
सुरूप कृत्नुमूतये ।३। सुदुघामिव गोदुहे । जूहूमसाइ । द्याविद्य
२र १ २ १
वाइ ॥२॥ द्याविद्यवा ३१ ऊ । वा २३ । उम् । उम् । उम् ॥१॥
२र १ २ १ १ २ २ १र र
हाउ ।३। आइही ।३। आइ ।३। इया हाउ ।३। पिबासोमाम् ।
१ २ ३ ४ ५ २ १र २ १ २ ३ ४ ५ २र १
इन्द्र । मन्द तुत्वा । यन्तेसुषा । वा ३ हरि । अश्वअद्रीः । सोतु-
र २ १ २र ३ ४ ५ २र १ २
र्बाहू । भ्या ३ ऊ सुय । तो न अर्वा । हाउ । ३ । आइही । ३ ।
१ १ २ १ ९ २ ३ १ १ १ १
आइ ।३। इया हाऊ ।२। इया ३ हाऊ । वा ३ । ई २३४५ ॥२॥
२ १र र र र र र र २ १ २ १र २ १र
ओ ३१ मू ।३। स्वादोरे इत्थाए विषू एवत आ । शंयोः । शंयोः ।
१र र र र र र २ १ २ १ २ १ १र र र र र
मधोरे पिबा एन्ति गोएरिय आ । हविः । हविः । या आ एन्द्रेणा
र र र २ १ १ १ १ र र र र र
ए सया ए वरिया । सुवः । सुवः । वृष्णा ए मदा एंति शो
र २र १ १र १र १ र र र र र र
एभथा आ । ज्योतिः । ज्योतिः । वस्त्रीरे अ नु ए स्वरा ए
२ १ २ २ २ ५ १
जियमा । ओ ३१ मू । ओ ३१ मू । ओ ३१२३४ । वा । इट्
१ १ १ १ २र र २र १ र र —
ईडा २३४५ ॥३॥ ए पुरोजिती । वो अंधसः सुताय मादया २
१ १ १ २ २र १र — १ १ २
इत्न वाइ । इडा । ऊ श्वा । तेजात मा २ न्धसाः । अथा । दाइवी ।
२ १र — १ १ १र २ १ — १
सद्भूमीया २ ददाइ । अथा । ऊग्रम् । शर्म्मम हा २ इश्रवाः ।

(१) अपहता असुरा रक्षांसि वेदिषदः ।

१ २ २ २ २ १ २ २ २
अथा । अपश्वान ऽ श्नथा १ इष्टा ३ ना । सखायो दीर्घजा २३
१ २ १ १ १ १ १ १ २
होइ । ह्वायमा ३१ ऊ वा २३ । इट् ईडा २३४५ ॥४॥ ए आसा ।
१ २ २ — १ १ २ १ —
जित्रकारश्चये यथा २ जा ऊ । इडा । आसा । व्य ऽ शुम्मंदा २
१ १ १ २ २ १ २ २ २ — १ १ १ २
या । अथा । धा या । म नो ता मथमाम ना २ इ षा । इडा । आ प्सू ।
२१२ — १ १ १ २ २१२ २ २ —
दक्षोगिरा २ इष्टाः । अथा । दा शा । स्त्रसा रो आधिसानो २
१ १ २ १२ — १ १ २
अव्याइ । इडा । श्याइनो । नयोनिमा २ सदात् । अथा । मार्ज्जा ।
१ २ ^ १ १
तिवान्हि ऽ सदनेषु वा २ छा ३१ ऊ । वा २३ । इट् इडा
१ १ १ १ १ २ २ १ — १ २ —
२३४५ ॥५॥ ए आभी । न वन्त आ २ । द्रुह आ ३१ ऊवा २ ।
१ २ २२ १ २ २ १ — १ २
तरत्समन्दी धावति । मार्यं । इन्द्रस्य का २ । मिय मा ३१ ऊ
— १२ २ २ १ २ २ १ २ २ १२ — १
वा २ । धारा सुतस्यां धसः । वात्सम् । न पूर्व आ २ । युनि
२ — १ २ २२ १ २ १ —
या ३१ ऊ वा २ । तरत्समन्दी धावती । जा तं । रिहं तिमा २ ।
१ २ १ १ १ १ १
तर आ ३१ ऊ वा २३ । इट् इडा २३४५ ॥६॥

ततोऽर्घपात्राणामासादनम् । तानि च वक्ष्यमाणयाज्ञियवृक्षमयानि कार्याणि । तत्र पूर्वं विश्वेषान्देवानां पात्रद्वयं पृथगुत्तराग्रकुशद्वयोपरि उदगग्रं संस्थाप्य तस्मिन् पात्रद्वये पृथगुत्तराग्रे द्वे द्वे पवित्रे निधाय प्रणीतास्थञ्जलं ऋजुकुशमादाय 'शन्नो देवी'इति(१) मन्त्रेण देवतीर्थेन सकुशं जलं पात्रे प्रक्षिप्यैवं द्वितीयेऽपि पात्रे सकुशं जलं आसिच्य 'यवोऽसि' (२)इति मन्त्रेण प्रतिपात्रं देवतीर्थेन यवान्प्रक्षिपेत् । ततः प्रतिपात्रं तुलसीचन्दनं पुष्पाण्यपि निक्षिपेत् । ततः पित्रादीनां त्रीणि पात्राण्येकपङ्क्त्यामुदगग्रेषु कुशेषु उदक्संस्थानुदगग्राण्यासाद्य तत्पूर्वतो मातामहादीनां त्रीणि पात्राण्येवमेवाऽऽसा-

(१) शन्नो देवी रभिष्टये शन्नो भवन्तु पीतये । शं यो रभिस्रवन्तु नः ।
(२) यवोऽसि यवयास्मद्द्वेषो यवयारातीः ।

दयेत् । ततः प्रतिपात्रं द्वे द्वे पवित्रे उदगग्रे निधाय 'शन्नो देवी' इति मन्त्रेण सकुशजलासेकः प्रतिपात्रम् । ततः 'यवोसि वरुणदेवत्यो गोसवो देवनिर्मितः । प्रत्नमद्भिः पृक्तः पुष्ट्या नान्दीमुखान् पितॄन्प्रीणाहि नः स्वाहा' इति मन्त्रेण प्रतिपात्रं यवान् क्षिपेत् । ततः प्रतिपात्रं चन्दनपुष्पाणि च क्षिपेत् । ततोऽञ्जलिम्बद्ध्वा अर्घपात्राणामर्चनविधेः परिपूर्णताऽस्त्विति प्रार्थयेत् । अस्त्विति द्विजाः । ततः स्वयं दैविकद्विजद्वयस्य दक्षिणभागे उदङ्मुखो दक्षिणजान्वाच्योपविश्याऽऽसादितपात्रद्वयमध्यादेकं पात्रमादाय तयोरग्रे प्रोक्षितायां भुवि उदगग्रं पात्रं संस्थाप्य 'स्वाहार्घ्या भवन्तु' इति दैविकद्विजद्वयं प्रत्युक्त्वा निवेदयेत् । 'अस्तु स्वाहा' इति द्विजप्रत्युक्तिः । ततो दक्षिणत उपविष्टस्य हस्तमुदगुपविष्टस्य हस्तोपरि कृत्वा प्रणीतास्थं जलं हस्तप्रक्षालनाय तयोर्हस्ते दत्वा पात्रस्थं पवित्रद्वयमादाय एकीकृतं हस्तद्वयोपरि प्रागग्रन्निदध्यात् । ततश्चन्दनादिभिस्तयोः पूजां कृत्वा पात्रं हस्तद्वयेनाऽऽदाय 'या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उतपार्थिवीर्या हिरण्यवर्णा यज्ञियास्तान आपः शिवा शं स्योना सुहवा भवन्तु' इति मन्त्रं पठित्वा 'क्रतुदक्षनामानः सत्यवसुनामानो वा विश्वेदेवा एतद्वोऽर्घं स्वाहा' इत्युक्त्वा देवतीर्थेन ऋजुकुशेन तयोरेकीकृत्य हस्तद्वयोपरि सकुशन्निनयेदेवं सर्वत्र । दैविकाश्चत्वारश्चेत्तदा अपरं पात्रं अपरयोर्हस्ते देयम् । नो चेत्तदपि तयोरेव हस्ते देयम् । ततो दत्तानि पवित्राणि गृहीत्वा पात्रे स्थापयेत् सर्वत्र । ततः पितृब्राह्मणस्य दक्षिणभागे उदङ्मुखमुपविश्य 'स्वाहार्घ्या भवन्तु' इति पूर्ववत् निवेद्य 'अस्तु स्वाहा' इति ताभ्यामुक्ते पूर्ववत्तयोरेकीकृतहस्तप्रक्षालनाय जलन्दत्वा सम्पूज्य पूर्ववत्पवित्रे संन्यस्य पात्रं हस्ताभ्यामादाय 'या दिव्येति' मन्त्रं पठित्वा अमुकगोत्र ! नान्दीमुखास्मत्पितरमुकशर्मन् ! एतत्ते अर्घ्यम् । 'ये चाऽत्र त्वानुयांश्च त्वमनु तस्मै ते स्वाहा' इत्युक्त्वोभयोर्हस्तेऽर्घन्निनयेत् । एवं पितामहप्रपितामहयोः । पैतृकार्घ्यदानोत्तरं प्रत्यर्घमुद-

कस्पर्शः कार्यः। एवं तत्तन्नामग्रहणपूर्वकं मातामहादिभ्योऽर्घ्यं दत्वा सर्वपात्रस्थे द्वे द्वे पवित्रे सकुशं समादाय प्रथमे पितृपात्रे सन्न्यस्य सर्वपात्रस्थान् संस्रवान् प्रथमे पितृपात्रे समवनीय मातामहादीनामपि पात्रस्थे द्वे द्वे पवित्रे आदाय तत् प्रथमपात्रे सन्न्यस्य संस्रवानपि सर्वांस्तत्रैव कृत्वा तत्पात्रद्वयस्थान् संस्रवान्पात्रान्तरे कृत्वा तत्पात्रद्वयं उत्तरस्यान्दिशि पृथक्प्रागग्रदर्भोपरि नान्दीमुखेभ्योऽस्मत्पितृभ्यः स्थानमसीति सकुशपवित्रं प्रागग्रं न्युब्जं कृत्वा द्वितीयमपि तथैव मन्त्रपूर्वकं संन्यस्य तत्पात्रद्वयं गन्धादिभिः सम्पूज्य (विश्वेदेवानां पात्राणां?) सकुटुम्बः परमाभ्युदयकामोऽर्घवन्दनं कुर्यात्। ततः चन्दनादिभिर्ब्राह्मणानर्चयेत्। पूर्वं दैविकान्। ब्राह्मणहस्ते पूर्वं जलमासिच्य पादजान्वंसमूर्द्धसु दक्षिणाङ्गपूर्वकं चन्दनेनाऽर्चयित्वा पुष्पैरभ्यर्च्य गन्धसङ्कल्पं कुर्यात्। पूर्ववदुपविश्य स्ववामेन द्विजदक्षिणहस्तं उपसंगृह्य दक्षिणेन सकुशजलमादाय 'यथादत्तं गन्धाद्यर्चनं क्रतुदक्षनामभ्यः सत्यवसुनामभ्यो वा विश्वेभ्यो देवेभ्यः स्वाहा' इति द्विजहस्ते जलं क्षिपेत्। एवं सर्वत्र सङ्कल्पेषु। 'सुगन्धमस्तु' इति प्रत्युक्तिः। द्वितीयमप्येवं सम्पूज्य सङ्कल्पं कुर्यात्। ततो धूपदीपौ प्रत्येकं कर्तव्यौ। धूपपात्रं सनिर्धूमाङ्गारम्पुरतः संन्यस्य सघृतगुग्गुलादीन् निःक्षिप्य 'अयं वो धूपः' इत्युक्त्वा दर्शयेत्। 'सुधूपोऽस्तु' इति प्रत्युक्तिः। एवं दीपमपि सम्मुखे संस्थाप्य 'इदं वो ज्योतिः' इति दर्शयेत्। 'सुज्योतिः' इति प्रत्युक्तिः। ततो वस्त्रद्वयं सोपवीतमादाय चन्दनादिनाऽभ्यर्च्य 'सोपवीतमिदं वस्त्रयुग्मं बार्हस्पत्यं क्रतुदक्षनामभ्यः सत्यवसुनामभ्यो वा विश्वेभ्यो देवेभ्यः स्वाहा' इति सकुशजलदानपूर्वकं हस्ते 'दत्वा इदं विश्वेभ्यो देवेभ्यो न मम' इति त्यागः कार्यः। 'ॐ प्रतिगृह्णामि स्वस्तु' इति प्रत्युक्तिः। सर्वत्र द्विजान्प्येवं सम्पूज्य वस्त्रदानान्तं कृत्वा पार्वणद्वयस्य ब्राह्मणान् चन्दनादिना देववत्सम्पूज्य तथैवोपस्पृश्य सङ्कल्पान् कुर्यात्। सकुशयवजलमादाय यथादत्तं गन्धाद्यर्चनं अमुकगोत्रेभ्यो नान्दीमुखेभ्योऽ-

स्मात्पितृपितामहप्रपितामहेभ्योऽमुकामुकामुकशर्मभ्यो यथायथाविभागं वः स्वाहा' इति सकुशाक्षतं जलं क्षिपेत् । एवं सर्वेषु सङ्कल्पेषु । ततः प्रत्येकं पूर्ववत् धूपदीपौ वस्त्रदानञ्च । इदं सोपवीतं वस्त्रयुग्मं बार्हस्पत्यं गन्धाद्यर्चितम् अमुकगोत्रेभ्यो इत्यादि प्राग्वत् । पितृपितामहप्रपितामहेभ्यः इदं न ममेति । एवं अपरम् । एवमेव तत्तन्नामोच्चारणेन मातामहादिभ्यश्च पूजादिवस्त्रदानान्तम् । ततो बद्धाञ्जलिः 'अस्य नान्दीश्राद्धस्याऽर्चनविधेः परिपूर्णताऽस्तु' इति प्रार्थयेत् । 'अस्तु' इति द्विजप्रत्युक्तिः । तत आचम्य कुशांस्त्यक्त्वाऽन्यान्धारयेत् । ततो भोजनपात्राणि द्विजानामग्रतः स्थापयेत् । तानि यथाविभवं स्वर्णरूप्यकांस्यपात्राणामन्यतमस्य कर्तव्यानि । तत्र पूर्वं पात्रस्थापनार्थं मण्डलानि द्विजाग्रतो नीवारचूर्णेन चणकचूर्णेन वा पितृपूर्वं कर्त्तव्यानि । ततः पात्राणि प्रक्षाल्य हस्तेनोन्मृज्य पुनः प्रक्षाल्य प्रक्षालनजलं दैविकानां पैतृकाणां पृथक्पात्रान्तरे कृत्वा संरक्ष्य पात्राणि द्विजाग्रतो मण्डलोपरि पितृपूर्वं संन्यस्य सजातीयानि घृताद्याधारकाणि सन्न्यसेत् । अथ द्विजानां हस्तक्षालनं पितृपूर्वं कारयेत् । पात्रक्षालनोत्तरं तैः हस्तद्वयेन धारणं कार्यमासङ्कल्पान्तम् । तदुत्तरमुत्सर्गः । ततः पैतृकाणां पात्रप्रक्षालनोदकं सयवं पादप्रक्षालनदेशे देवतीर्थेन प्रक्षिप्य दैविकानामपि तथैव तेषां पादप्रक्षालनदेशे प्रक्षिपेत् । ततोऽग्नौ करणम् । ओदनादि हविष्यं कांस्यपात्रे कृत्वा घृतेनासिच्याग्नौ करिष्यामीति ब्राह्मणान्पृष्ट्वा 'कुरु' इत्यनुज्ञातो यजमानः साग्निकश्चेद्वैश्वदेववत् 'स्वाहा सोमाय पितृमते' 'स्वाहा अग्नये कव्यवाहनाय' इति जुहुयात् । अनग्निकेन पैत्र्यपङ्क्तिमूर्धन्यब्राह्मणस्य हस्ते होतव्यम् । यथा—हविष्यं तदग्रे संस्थाप्य पूर्ववदुपविश्य कृताञ्जलिर्भवत्स्वेवाग्नौकरणं करिष्यामीति पृष्ट्वा 'कुरु' इत्यनुज्ञातस्तस्य दक्षिणहस्तं भोजनपात्रे कृत्वा तत्र आहुतिद्वयं मन्त्रेण जुहुयात् । शेषं विप्रपात्रेषु देवपूर्वं दत्वा पिण्डार्थमवशेषयेत् । ततो दैवपूर्वं सर्वमन्नं सव्यान्वारब्धदक्षिणहस्तेन परिषिच्याऽन्नसङ्कल्पं

कुर्यात् । प्रणीतास्थमुदकं पात्रान्तरे कृत्वा कुशाक्षतानादाय देव-द्विजाग्रे पूर्ववदुपविश्य कुशाग्रगृहीतजलेन 'सत्यं त्वर्त्तेनाभिषिञ्चामि' इति अन्नमभ्युक्ष्य, अग्रे यवान्विकीर्य, न्युब्जाभ्यां दक्षिणोत्तर-पाणिभ्यां पात्रमालभ्य 'पृथिवी ते पात्रं द्यौः पिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा' इति मन्त्रं पठित्वा 'वैष्णवी-मृचं' जप्त्वा 'विष्णो हव्यं रक्ष' इति द्विजाङ्गुष्ठमन्ने कृत्वा वाम-हस्तेन पात्रमत्यजन् दक्षिणेन कुशोदकमादाय 'इदमन्नं यद्दत्तं यच्च दास्यमानं तत्सर्वन्तृप्तिपर्यन्तं भोजनं क्रतुदक्षनामभ्यः सत्यवसुनामभ्यो वा विश्वेभ्यो देवेभ्यः स्वाहा' इति सकुशाक्षतं जलं भूमौ निक्षिपेत्। 'इदं विश्वेभ्यो देवेभ्यो न मम' इति त्यागः। एवं द्वितीयेऽपि। एवमेव पित्रादिभ्यो मातामहादिभ्यश्चान्नऽसङ्कल्पः। अन्न-प्रोक्षणादि तृप्तिपर्यन्तं भोजनं गोत्रेभ्यो नान्दीमुखेभ्योऽस्मत्पिताम-हप्रपितामहेत्याद्युक्त्वा भूमौ जलं क्षिपेत् । इदमन्नं पितृपिता-महप्रपितामहेभ्यो न मम। इदमन्नं मातामहप्रमातामहवृद्धप्रमाता-महेभ्यो न ममेति त्यागः। ब्राह्मणभेदे पृथक्सङ्कल्पः त्यागश्च। ततो ब्राह्मणेभ्यो जलम् अपोशानार्थं हस्ते पितृपूर्वं दत्वा

१ २ ३१ २ ३ १
सव्याहृतिकं गायत्रीगानं जप्त्वा 'हस्तच्युतेभिरद्रिभिः सुतङ्
२र १ ३ १ २ ३ १ २
सोमं पुनीतन। मधावाधावतामधु। इति ऋचं 'मधुमध्वित' त्रिर्जप्त्वा "अन्नहीनं क्रियाहीनं विद्याहीनं च यद्भवेत् । तत्सर्वमच्छिद्रमस्तु, अधुना कृतसङ्कल्पसिद्धिरस्तु, अस्त्विति प्र-त्युक्ते "यथासुखं जुषध्वम्" इति तान प्रति वक्तव्यम् । ततस्ते बलिदानमकुर्वाणा अपोशानपञ्चप्राणाहुतिहोमपूर्वकं वामहस्तेन पात्र-मत्यजन्तो मौनेन भुञ्जीरन् ॥ अथाऽश्नत्सु द्विजेषु गायत्रीं सगा-यत्रीं यस्तेमद अबोध्यग्निरित्यादि अरिष्टवर्गमप्रतिरथं च जपेत् ।

३ र १ र र र — १र र
ॐ तत्सवितुर्वरेणियोम् । भार्गोदेवस्य धीमाही २ । धियो योनः
२ १ — १ २ १ १ १ ४ ५
प्रचो १११२ । हुम् । आ २ । दायो । आ २४५ ॥१॥ यस्ते मदाः ।

२ ३ २ १ २ २ २ ३ २ १
वरायिणियाः। ताइनापावा ३ स्वा ३। अंधसा । दायिवावा
२ ५ ४ ४ २ १
इरा ३४। हाउ। घशा ५६ सहा। हो ५६। डा ॥१॥ यस्ता-
४२ २५ १ २ २ २ १ २ — १
यिमा २३ दो वरे णियाः। ताइनापव। स्व आ न्धा १ सा २। दा-
— १ २ १ ५ ४ ५
इवा २ वाइरा २ ३। घशो २ ३ ४वा। सा ५ हो ६ हायि ॥२॥
५ २ २ २ ५ ४२ १२ २ २२१२ २
यस्तेमदोवरेणिया ६ ५। ते ना पवस्वान्धसा। देवावीरा २ ३।
२ १ २ १ २ २ ५
हायि। घाशा उवा। सा हाउवा ३। ऊ ३२३४ पा ॥३॥ इमानि
सामानि पठित्वा अबोध्यग्निरित्याद्यरिष्टवर्गमप्रतिरथञ्च पठेत्।

तत्र तावत् अबोध्यग्निरित्यादि सामानि पठेयुः॥ अबोध्यग्नि-रिति प्रजापतिर्ऋषिः त्रिष्टुप्छन्दः अग्निर्देवता॥ महित्रीणामिति-द्वयोः पष्ठवाड्ऋषिः गायत्रीछन्दः प्रजापतिर्देवता॥ त्वावत इति साकमश्वऋषिः गायत्रीछन्दः इन्द्रोदेवता। इन्द्रं नर इति गौरीवितऋषिः त्रिष्टुप्छन्दः इन्द्रोदेवता॥ त्यमूष्विति द्वयोस्ता-र्क्ष्यऋषिः त्रिष्टुप्छन्दः इन्द्रोदेवता॥ त्रातारमिति इन्द्र ऋषिः त्रिष्टुप्छन्दः इन्द्रोदेवता॥ सोमः पुनान इति प्रजापतिर्ऋषिः उ-ष्णिक्छन्दः सोमोदेवता॥ समुन्वेय इति भरद्वाज ऋषिः गायत्रीछ-न्दः सोमोदेवता॥ विश्वतोदावन्निति प्रजापतिर्ऋषिः विष्टारपङ्क्ति-छन्दः इन्द्रोदेवता। उदुत्तममिति वरुणगौतम ऋषिः त्रिष्टुप्छन्दः वरुणादित्यौदेवते। एतेषां साम्नां जपे विनियोगः॥

एवं ऋष्यादीन्स्मृत्वा आयुः शान्तिं जपेत्॥ तत्र सामानि॥
४ ५२ ४ १ २ १ २२१ ९ २ १ २ २
ॐ अबो धिया। ग्नाइः समिधाजना २ नाम्। प्रता इधे ३ नूम्।
२ १२ २२ २ २ २ १ ९ ^ १२ २ १ २२ २ १ २
इवायती मुषासं। य ह्वा इ ३ वा। प्रवा २ या मुज्जिहानाः। प्रभाना
२ २ १२ २ १ २ १ २ १
२३ वाः। सस्रते नाक मच्छ। इडा २३ भा ३४३। ओ २३४५ इ।
३ २ ^ ३ ५ १ — १ ३ २ ^ ३ ६
डा॥१॥ महाइन्द्रा २३४ इणाम्। अवा २ रस्तु। द्युक्षं मा २३४ इत्रा।

स्या २ र्यम्णाः । दुराधा २३४ र्षाम् । व रौ हो २३४ । वा ।
णा ५ स्यो ६ हाइ ॥२॥ महि त्रीणामवरस्तु ६ए । द्युक्षं मित्रस्या-
र्यम्णाः । दुराधा २३ र्षाम् । वरौ हो २ । हुं मा २ । ण । स्यो २ ।
या २३४ । औ हो वा । हा ओ वा । ओ वा २३४५ ॥३॥ त्वा व
तो ३ । हौ ३ हो ३१ इ । पूरू वसो ३ । हौ ३ हो ३१ इ । वय
मिन्द्रा ३ । हौ ३ हो ३१ इ । प्रणेता ३ः । हौ ३ हो ३१ इ ।
स्मासिस्थाता ३ः । हौ ३ हो ३१ इ । हरीणा ३ म् । हौ ३ हो
३१२३४५ इ । डा ॥ ४ ॥ इन्द्र न्ना २३४ रो । ने माघा २३४
इता । हवन्ता २३ इ । यत्पारा २३४ याः । युनाजा २३४ ताइ ।
धिया स्ता २३ः । शूरोना २३४ षाँ । ताश्रावा २३४ साः ।
चका मा २३ इ । आगो मा २३४ तौ । व्रजाइभा २३४ जा ।
त्वन्ना ३ उ वा ३ । ए ३ । आयू २३४५ः ॥ ५ ॥ त्यमूषु ।
वाजि । ना २३४५ म् । देवजूता २३४ म् । सहो वा नन्ता ।
रुता ३ । रथू रथा नाम् । अरिष्टना २३४ इमीम् । पूतना ३४३
ज माशुं । स्व स्त । याइ । ता र्क्ष्य मि हा ३४३ । हु ३ वा ५
इमा ६५६ ॥ ६ ॥ इयइया ३ हाइ । त्यमूषु वाजि ना ३ न्दे ३
वजू तं । इ ४ यइया । हा २३४ इ । सहो वा नं ता । रुता ३ ।
रथू रथानाम् । इयइया ३ हाइ । अरिष्टा ३ । नाइ । मी ३ म्पृत ।
नाज माशुम् । इ ४ यइया । हा २३४५ इ । स्वस्त । याइ ।
तार्क्ष्यमिहा ३४३ ॥हु ३ वा ५ इमा ६५६ ॥ ७ ॥ त्रातार मिन्द्र-

७ २ १२ र ७ २
भविता। रमी २३ न्द्राम्। हवेहवेसुहवꣳशूरꣳ। रमी २३ न्द्राम्।
१ ७ २ २१ २१ र २१ र
हुवाइनु शक्रं पुरुहू। तमी २३ न्द्राम्। इदꣳ स्वस्तिनो। मघवा।
२ २ ४ ३र ४ ५र
वा २४३ इ। तु ३ वा ५ इन्द्रा ६५६ः॥ ८॥ सोमः पुना।
२ ३४र ५ ५ १ र २ २ २ २ ३
हो। नऊर्मिणा ६ ए। अव्यंवारं विधा १ वा ३ ती। अग्रे वा २
३ ११११ २१ २ १ ३
३४५। वा २३४५ः। पव मा २३ ना ३ः। क्रा २ ना २३४
५र र २ ३ ११११ ४ ५ १र र २
औहो वा। क्रदद्दे २३४५॥ ९॥ सासु। न्त्रेयो वसू २३ नाम्।
१ — १ — र र १ २ १ २ १
योरा २ यामा २। नेताय इडा २३ नाम्। सो २३ माः। यः
२ १ ५ ५ २ऽ १ २र
सु क्षि ता २३४ इनो ६ हाइ॥ १०॥ हाउ ३ वा। विश्वतो
र १ र २ १र २ २ऽ १ र २ १र २२
दावन्विश्व तोन आभर। हाउ ३ वा। यं त्वा शविष्ठ मीमहे।
२ऽ १र २ऽ १र २ १र
हाउ ३ वा। आयुः। हाउ ३ वा। सुवः। हाउ ३ वा। ज्योतिः।
२ऽ ३ ११११ २र १र र
हाउ ३। वा ३। ई २३४५॥ ११॥ हाउ।३। आयुश्चक्षुर्ज्यो-
२र १ २ १ २ १ र २ १ २ १ र
तिः। औ हो वा। इया। उदुत्तमं वरुणपाशमा २३ स्मात्। अवा
२ १ २ १ र र २ १ २
धमंविमध्यमꣳश्रथा २३ या। अथादित्यव्रते वयन्ता २३ वा।
२ र १ र र २ १ २ २५ १र र
अनागसो अदितये सिया २३ मा ३। हाउ।३। आयुश्चक्षुर्ज्यो
२र १ २ १ ३ ५र र ३ ११११
तिः। औहोवा। इ २। या २३४। औहोवा। ई २३४५॥१२॥

आशुःशिशान इत्याद्यध्यायस्य अनादेशे अप्रतिरथऋषिः। अवसृष्टे-त्यादि चतुर्णां भरद्वाजः। त्रयोदशर्चामाद्यानां त्रिष्टुप्। प्रेताजयते-त्यादिद्वयोरनुष्टुप्, कङ्का इत्यस्यास्त्रिष्टुप्, अमित्रेत्यस्या अनु-ष्टुप्। यत्रबाणा इत्यस्याः पङ्क्तिः। विरक्षोविन इन्द्रेतिद्वयोरनुष्टुप्। इन्द्रस्यबाहूमर्माणितेति द्वयोः स्वराट्त्रिष्टुप्। अन्धा अमित्रेत्यस्या-

नुष्टुप् । योनः स्वइति पङ्क्तिः । मृगोनभद्रंकर्णेभिति द्वयोस्त्रिष्टुप् । स्वस्तिनइत्यस्याः स्वराट्त्रिष्टुप् । समस्ताध्यायस्यानादेशे इन्द्रो देवता बृहस्पतेरित्यस्या बृहस्पतिः । इन्द्रआसांनेताइत्यस्या इन्द्रबृहस्पती । देवसेनानामित्यस्या मरुतः । इन्द्रस्यवृष्णोइत्यस्याः क्रमेण वरुण आदित्या मरुतः । असौयेति मरुतः । अमीषामित्यस्या वायुः । अवसृष्टेत्यस्या इषुः । अमित्रसेनाइत्यस्या इन्द्राग्नी । यत्रबाणा इत्यस्याः क्रमेण बृहस्पतिरदितिः । मर्माणित इत्यस्याः क्रमेण सोमवरुणदेवौ । भद्रंस्वस्तिनइत्यनयोर्विश्वेदेवाः जपे विनियोगः ।

३ १ २र ३२उ ३ १ २ ३ १— २ ३ २
आशुः शिशानो वृषभो न भीमो घनाघनःक्षोभणश्चर्षणीनाम् ।
३ १ २ ३ १ २ ३ २ ३ १— २र ३ १ २र
संक्रन्दनोऽनिमिषएकवीरः शतᳬसेना अजयत्साकमिन्द्रः ॥ १ ॥
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १—
संक्रन्दनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवनेनधृष्णुना ॥ तदि-
२र ३ १ २ ३ १ २ ३ १२ ३ १ २ १ २र ३ १ २
न्द्रेणजयत तत्सहध्वंयुधोनरइषुहस्तेनवृष्णा ॥२॥ सइषुहस्तैःसनि-
३ १ २ ३ १ २र ३ २उ ३१ २ ३ १ २ ३ १ २ ३ १ २
षङ्गिभिर्वशीसᳬस्रष्टा सयुधइन्द्रोगणेन ॥ सᳬसृष्टजित्सोमपाबा-
३ २ १ २ ३ १ २ ३ १ २ १२ ३१ २ ३ १ २
हुशर्ध्युग्रधन्वाप्रतिहिताभिरस्ता ॥ ३ ॥ बृहस्पतेपरिदीया रथेन-
३ १ २र ३ १ २ ३ १ २र ३ २ ३ १ २र३ १
रक्षोहाऽमित्राᳬअपबाधमानः । प्रभञ्जन्त्सेनाःप्रमृणो युधाजयन्नस्मा-
२ ३ १ २र ३ १ २र ३ १ २ ३ १ २
कमेध्यविताराथानाम् ॥ ४ ॥ बलविज्ञायःस्थविरःप्रवीरःसहस्वान्
३ १ २र ३ २ ३ १ २ ३ १ २ ३ १ २र ३ २ ३ १ २
वाजीसहमानउग्रः । अभिवीरोअभिसत्वासहोजाजैत्रमिन्द्ररथमाति-
३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १
ष्ठगोवित् ॥ ५ ॥ गोत्रभिदंगोविदंवज्रबाहुंजयन्तमज्मप्रमृणन्तमो-
२ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
जसा । इमᳬसजाताअनुवीरयध्वमिन्द्रᳬसखायोअनुसᳬरभ-
३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १२ ३ १
ध्वम् ॥ ६ ॥ अभिगोत्राणिसहसागाहमानोऽदयोवीरःशतमन्युरि-
२ ३ १ २ ३ १ २ ३ २ २ ३ १ २ ३ २ ३ २
न्द्रः ॥ दुश्च्यवनःपृतनाषाडयुध्योऽस्माकᳬसेनाअवतुप्रयुत्सु ॥७॥

इन्द्रआसांनेताबृहस्पतिर्दक्षिणायज्ञःपुरएतुसोमः । देवसेनानाम-
भिभञ्जतीनांजयन्तीनांमरुतोयन्त्वग्रम् ॥ ८ ॥ इन्द्रस्यवृष्णोवरुण-
स्यराज्ञआदित्यानांमरुताꣳशर्द्धउग्रम् । महामनसांभुवनच्यवानां-
घोषोदेवानांजयतामुदस्थात् ॥ ९ ॥ उद्धर्षयमघवन्नायुधान्युत्सत्व-
नांमामकानांमनाꣳसि ॥ उद्वृत्रहन्वाजिनांवाजिनान्युद्रथानांजय-
तांयन्तुघोषाः ॥ १० ॥ अस्माकमिन्द्रःसमृतेषुध्वजेष्वस्माकंयाइष-
वस्ताजयन्तु । अस्माकंवीराउत्तरेभवन्त्वस्माꣳउदेवाअवताहवेषु ॥
॥ ११ ॥ असौयासेनामरुतःपरेषामभ्येतिनओजसास्पर्द्धमाना ।
तांगूहततमसापव्रतेनयथैतेषामन्योअन्यन्नजानात् ॥ १२ ॥ अमी-
षाञ्चित्तंप्रतिलोभयन्तीगृहाणाङ्गान्यप्वेपरेहि । अभिप्रेहिनिर्दहहृ-
त्सुशोकैरन्धेनामित्रास्तमसासचन्ताम् ॥ १३ ॥ प्रेताजयतानरइन्द्रो-
वःशर्मयच्छतु । उग्रावःसन्तुबाहवोऽनाधृष्यायथासथ ॥ १४ ॥
अवसृष्टापरापतशरव्येब्रह्मसꣳशिते । गच्छामित्रान्प्रपद्यस्वमा-
मीषाङ्कञ्चनोच्छिषः ॥ १५ ॥ कङ्काःसुपर्णाअनुयन्त्वेनान्गृध्राणाम-
न्नमसावस्तुसेना । मैषांमोच्यघहारश्चनेन्द्रवयाꣳस्येनाननुसंय-
न्तुसर्वान् ॥ १६ ॥ अमित्रसेनाम्मघवन्नस्माञ्छत्रुयतीमभि । उभौता-
मिन्द्रवृत्रहन्नग्निश्चदहतंप्रति ॥ १७ ॥ यत्रबाणाःसम्पतन्तिकुमाराविशि-
खाइव । तत्रानोब्रह्मणस्पतिरदितिःशर्मयच्छतुविश्वाहाशर्मयच्छतु

२उ ३ १ २र ३ २३२३१२ २३१२ ३
॥१८॥ विरक्षोविमृधोजहिविवृत्रस्यहनूरुज । विमन्युमिन्द्रवृत्रहन्न-
१२ ३१२ १२ ३१२ ३१२ ३२
मित्रस्याभिदासतः ॥१९॥ विनइन्द्रमृधोजहिनीचायच्छपृतन्यतः ।
२३१ २३२३१२ ३१२ १२ ३१ २र
योअस्मा६ँ अभिदासत्यधरङ्गमयातमः ॥२०॥ इन्द्रस्यबाहूस्थवि-
३१२ ३१२ ३१२३२ १ ३२उ ३१२३
रौयुवानावनाधृष्यौसुप्रतीकावसह्यौ । तौयुञ्जीतप्रथमौयोगआगते-
१२ ३१२र ३ १२३२ १२ ३१२
याभ्यांजितमसुराणा६ँ सहोमहत् ॥२१॥ मर्माणितेवर्मणाच्छाद-
३१२ ३२३२३१२ ३१ २र३१२
यामिसोमस्त्वाराजामृतेनानुवस्ताम् । उरोर्वरीयोवरुणस्तेकृणो-
३१२३ १२३१२ ३१२ ३१
तुजयन्तन्त्वानुदेवामदन्तु ॥ २२ ॥ अन्धाअमित्राभवताशीर्षाणो-
२ १२ ३१२ ३१२ ३१२ २३१
हयइव । तेषांवोअग्निनुन्नानामिन्द्रोहन्तुवरंवरम् ॥ २३ ॥ योनःस्वो
२३२३२ ३१२ ३१ २र ३२ ३२३१
ऽरणोयश्चनिष्ट्योजिघा६ँसति । देवास्त६ँ सर्वेधूर्वन्तुब्रह्मवर्ममम-
२र३ २३२३१ २ ३२उ ३१२३१२३ १ २३२
न्तर६ँ शर्मवर्ममान्तरम् ॥२४॥ मृगोनभीमःकुचरोगिरिष्ठाः पराव-
३१२ ३१२ ३२ ३ १२३१२ ३१ २र
तआजगन्थापरस्याः । सृक६ँ स६ँ शायपविमिन्द्रतिग्मंविशत्रूंता-
३१ २र ३१ २र ३१२ ३१२
ढिविमृधोनुदस्व ॥२५॥ भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभि-
१ २र ३१ २३२३ २र ३१२३१ २र
र्यजत्राः । स्थिरैरङ्गैस्तुष्टुवा६ँ सस्तनूभिर्व्यशेमहिदेवहितंयदायुः
३२-३ १२३१२ ३१२ ३२३ १२ ३२
॥२६॥ स्वस्तिन इन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्ति-
३२३१२ ३२३२३१२ १३२३२३१
नस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु । ॐस्वस्तिनोबृहस्प-
२
तिर्दधातु ॥ २७ ॥ इत्येतानि सामानि पठेयुः ॥

ततो द्विजतृप्तेः पूर्वं द्विजोच्छिष्टाग्रे ऋजुकुशमास्तीर्य जलाप्लावित-मन्नमादाय—

ॐ असोमपाश्च ये देवा यज्ञभागबहिष्कृताः ।
तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम् ॥

इति आस्तृतकुशोपरि तदन्नं विकिरेत् । ततो हस्तौ प्रक्षाल्याऽऽचम्य हस्तकुशांस्त्यक्त्वाऽन्यान् धारयेत् । अथ द्विजेभ्यः प्रत्यपोशानं पितृपूर्वं जलं दत्वा व्याहृत्यादिमधुमाध्वीति त्रिर्जप्त्वा आचान्तेषु द्विजेषु सम्पन्नमिति पृष्ट्वा सुसम्पन्नमिति तैरुक्ते शेषमन्नमनुज्ञाप्य इष्टैः सह भुज्यताम् इत्युक्ते पिण्डदानार्थं ब्राह्मणानामुच्छिष्टभाजनाद् भुजमात्रे प्रदेशे गोमयेन चतुरस्रं मण्डलं विधाय तदुपरि प्राक्प्रवणां सैकतां वेदीं कृत्वा श्राद्धोदकेनाऽभ्युक्ष्य पूर्वाग्रानुदक्संस्थान् स्थानद्वये त्रींस्त्रीन्कुशानास्तरेत् ।

ततः पिञ्जूलीं दक्षिणेनाऽऽदाय सव्येनाऽन्वारभ्य अपहतेति मन्त्रेणास्तृतकुशोपरि पिञ्जूल्यग्रेण रेखां कृत्वा तत्र मन्त्रः—"अपहता असुरा रक्षाꣳसि वेदिषदः" एवं तदुत्तरास्तृतकुशोपरि कृत्वा तां पिञ्जूलीं संत्यज्य 'एत पितर' इत्यारभ्य नियच्छतेत्यन्तेन पितॄनावाहयेत् । तत्र मन्त्रः—एतपितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणोभिः । दत्ताऽस्मभ्यं द्रविणेह भद्राꣳ रयिञ्च नः सर्ववीरं नियच्छत ॥ १ ॥

ततः पात्रान्तरे जलं सऋजुकुशमादाय प्राङ्मुख उपविश्य दक्षिणं जान्वाच्य कुशानां मूलमध्याग्रदेशेषु प्राक्संस्थमवनेजनं कुर्यात् । अमुकगोत्र नान्दीमुखास्मत्पितरमुकशर्मन्नवनेनिक्ष्व । येचाऽत्रत्वानुयांश्चत्वमनु तस्मै ते स्वाहेति कुशमूलेऽवनेज्याप उपस्पृश्यैवं पितामहप्रपितामहयोर्मध्यदेशेऽग्रदेशेचाऽवनेजनं कृत्वा तदुत्तरास्तृतकुशेषु तत्तन्नामोच्चारणेन पूर्ववत् मातामहादीनामप्यवनेजनं कुर्यात् । अमुकगोत्रनान्दीमुखाऽस्मन्मातामहेत्येवम् । अप उपस्पृश्यैवमपरयोः ।

ततः सर्वस्मात् श्राद्धपाकशेषात् स्तोकशः स्तोकशः पात्रान्तरेऽन्नं समादाय दधिदुग्धमधुभिरुपासिच्याऽग्नौकरणशेषयवबदरीफलैः सम्मिश्र्य पक्वबिल्वपरिमाणान्पिण्डान्दद्यात् । यथावनिक्तं

प्राङ्मुखो दक्षिणं जान्वाच्य पिण्डमादाय "अमुकगोत्र नान्दीमुखास्मत्पितरमुकशर्मन्नेतत्ते पिण्डो" 'ये चात्रत्वानु' इत्यादि स्वाहान्तेन कुशमूले पित्र्यवनेजनदेशे देवतीर्थेन पिण्डं दत्वा अप उपस्पृश्यैवं पितामहप्रपितामहयोर्मध्यदेशेऽग्रदेशे च पिण्डं दत्वा तदुत्तरास्तृतकुशेषु यथावनिक्तं मातामहादिभ्यः पिण्डान् दद्यात्। "अमुकगोत्र नान्दीमुखास्मन्मातामह अमुकशर्मन्नेष ते पिण्डो" ये चात्रत्वानु इत्यादि पूर्ववत् अप उपस्पृश्यैवमेवेतरयोः।

ततः तत्पिण्डपात्रप्रक्षालनजलेन सयवेन तत्तत्पिण्डेषु तथैव प्रत्यवनेजनं कृत्वा तत्पात्रमुत्तानं स्थापयेत्। ततोऽत्र पितरोमादयध्वमिति पठित्वा। ॐ अत्र पितरो मादयध्वं यथा भागमावृषायध्वं इति मन्त्रेण श्वासं नियम्य प्रदक्षिणावर्त्तेनोदङ्मुखीभूय पुरो श्वासात्पर्यावर्तमानो जपेत् "अमीमदन्त पितरो यथाभागमा वृषा इषतेति जपन्प्राङ्मुखो भवेत्। अथाञ्जलिकृतो जपति—नमो वः पितरः पितरो नमो व इति। गृहान्नः पितरो दत्त इति गृहावेक्षणम्(१)। सदो वः इति पितरो देष्म इति पिण्डावेक्षणम्। एतद् वः पितरो वास इति प्रतिपङ्क्ति सूत्रदानम्। ततश्चन्दनपुष्पधूपदीपैः पिण्डान्सम्पूज्यार्घं दत्वा नैवेद्यं दद्यात्। पात्रान्तरेऽन्नमादाय पिण्डाग्रे संस्थाप्य इदं नैवेद्यं अमुकगोत्रेभ्यः नान्दीमुखेभ्योऽस्मत्पितृपितामहप्रपितामहेभ्यः अमुकामुकामुकशर्मभ्यः अमुकगोत्रेभ्यः नान्दीमुखेभ्योऽस्मन्मातामहप्रमातामहवृद्धप्रमातामहेभ्यः अमुकामुकामुकशर्मभ्यो यथा यथा विभागं वः स्वाहेति जलमुत्सृजेत्। ततो बद्धाञ्जलिः 'पिण्डानामर्चनविधेः परिपूर्णताऽस्तु' इति प्रार्थयेत्। 'अस्तु' इति द्विजाः। एभिः पिण्डदानैरस्मन्नान्दीमुखानां पितॄणामक्षयातृप्तिरस्तु। वृद्धौ वृद्धौ नान्दीश्राद्धं भवतु। अनेनाभ्युदयश्राद्धेनास्मन्नान्दीमुखाः पितरः सुप्रसन्ना बहुमङ्गलप्रदा भवन्तु। भवन्त्विति द्विजाः। अथ द्विजेभ्यो

(१) 'गृहावेक्षणम्' इति स्वपत्नीमवेक्षते इत्यभिप्रायः।

मुखशुद्ध्यर्थं जलादि देयम् । स्वयं हस्तौ प्रक्षाल्याचामेत् ।

ततः सुमङ्गोक्षितमस्त्विति द्विजाग्रभूमिञ्चलेनाभिषिञ्चेत् । अस्त्विति द्विजाः । ततः सकुशोदकमादाय शिवा आपः सन्त्विति अर्घदानवद्युग्मद्विजहस्ते दद्यात् । सन्त्विति प्रत्युक्तिः । सौमनस्यमस्त्विति पुष्पाण्युभयोर्हस्ते दद्यात् । अस्त्विति प्रत्युक्तिः । अक्षतञ्चारिष्टञ्चास्त्वित्यक्षतान् प्रतिपादयेत् । ततः समाचाराद्द्विजा यजमानस्य शिरसि दीर्घमायुः शान्तिः पुष्टिस्तुष्टिश्चास्त्वित्यभिषिञ्चेयु र्यजमान दत्ताक्षतपुष्पजलैः ।

अथ सकुशं जलमादाय नान्दीमुखाः पितरः प्रीयन्तामित्युभयोर्हस्ते जलं दद्यात् । प्रीयन्तामिति प्रत्युक्तिः । एवमितरयोस्तत्तन्नाम्ना, मातामहादिभ्यश्च । ततः सौम्या नान्दीमुखाः पितरः सन्तु । सन्तु सौम्या नान्दीमुखाः पितर इति प्रत्युक्ते गोत्रं नो वर्द्धतामिति वदेत् । गोत्रं वो वर्द्धतामित्युक्ते न्युब्जपात्रद्वयाधःस्थितपवित्रसमूहं सकुशमादायोभयपिण्डपङ्क्त्युपरि आस्तीर्य्य, स्वाहां वाचयिष्ये इति पृष्ट्वा, वाच्यतामित्यनुज्ञातो गोत्रेभ्यो नान्दीमुखेभ्यः पितृभ्यः अमुकशर्मभ्यः स्वाहोच्यतामित्युक्ते अस्तुस्वाहेति द्विजाभ्यामुक्तस्तथैव पितामहेभ्यः प्रपितामहेभ्यो मातामहादिभ्यश्च स्वाहां वाचयेत् । ततो न्युब्जीकृतमर्घपात्रमुत्तानं कृत्वा, तेन प्रणीतास्थं जलमादाय, ऊर्ज्जं वहन्तीरिति मन्त्रेण पितृपिण्डपङ्क्त्युपर्य्यासिञ्चेदनेनापरेण मातामहपङ्क्त्युपर्य्यासिञ्चेत् । तत्र मन्त्रः-ॐ ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतꣳ स्वाहास्थ तर्पयत मे पितॄन् ॥ १ ॥

ततो दैविकब्राह्मणद्वयस्य हस्तोपरि जलासेकं कुर्वन्विश्वेदेवाः प्रीयन्तामिति वाचयेत् । प्रीयन्तां विश्वेदेवा इति ताभ्यामुक्ते, पिण्डान्भोजनपात्राणि च चालयेत् । ततः सुवर्णादिदक्षिणामुपकल्प्य अद्य नान्दीश्राद्धस्य कृतस्य प्रतिष्ठासिद्ध्यर्थं इदं हिरण्यमाग्नेयं

विश्वेभ्यो देवेभ्यः स्वाहेति सकुशोदकां दक्षिणां दत्त्वैवमपराय दत्त्वा पित्रादिभ्यो मातामहादिभ्यश्च दक्षिणां दद्यात्। अस्य श्राद्धस्य कृतस्य प्रतिष्ठासिद्ध्यर्थमिदमाग्नेयं हिरण्यं गोत्रेभ्यो नान्दीमुखेभ्योऽस्मत्पितृपितामहप्रपितामहेभ्य इत्यादि पूर्ववत्। एवमेव मातामहादिभ्यश्च दक्षिणां दत्त्वा प्रार्थयेत्। "दातारो नोऽभिवर्द्धन्ताम्" अभिवर्द्धन्तां वो दातारः। 'वेदाः सन्ततिरेव च' अभिवर्द्धन्तां वेदाः। अभिवर्द्धतां वः सन्ततिः। 'श्रद्धा च नो मा व्यगमत्' माविगमद्वः श्रद्धा। 'बहुदेयञ्च नोऽस्तु' अस्तु वो बहुदेयम्। 'अन्नञ्च नो बहु भवेत्' भवत्वन्नं बहु। 'अतिथींश्च लभेमहि' लभध्वञ्चातिथीन्। 'याचितारश्च नः सन्तु' सन्तु वो याचितारः। 'मा च याचिष्म कञ्चन' मा याचध्वं कञ्चन। 'एता एवाशिषः सन्तु' एताः सत्याशिषः सन्तु।

ततोऽञ्जलिम्बद्ध्वा स्वस्ति भवन्तो ब्रुवन्त्विति विप्रान्प्रार्थ्य स्वस्तीति विप्रैरुक्ते श्राद्धपरिपूर्णतां प्रार्थयेत्। अथ पूर्वोच्चरित एवं ग्रहगुणविशेषणविशिष्टायां तिथौ गोत्राणां नान्दीमुखानामस्मत्पितृपितामहेत्यादि वृद्धप्रमातामहान्तमुक्त्वा अमुककर्मणः प्रारम्भाङ्गस्य निमित्तस्य वा नान्दीश्राद्धकृतस्य विधेर्यन्न्यूनातिरिक्तं तत्सर्वं श्रीमतां प्रसादात्परिपूर्णमस्तु। अस्त्विति प्रत्युक्तिः। ततः पितृपङ्क्त्युपविष्टस्य मुख्यस्याङ्गुष्ठं गृहीत्वोत्थाप्य त्यमूषु वाजिनमिति विप्रान्सर्वान्विसृजेत्। तत्र मन्त्रः—

ॐ त्यमूषु वाजिनं देवजूतꣳ सहोवानन्तरुतारꣳ रथानाम्।
अरिष्टनेमिं पृतनाजमाशुꣳ स्वस्तये तार्क्ष्यमिहा हुवेम ॥१॥

ततस्ते सर्वे पादप्रक्षालनदेशे प्राङ्मुखास्तिष्ठेयुः। ततो यजमानः प्रणीतापात्रमादाय आमावाजस्येति पठित्वा तेषां परितः प्रदक्षिणं जलधारां दद्यात्।

ॐ आमावाजस्य प्रसवो जगम्या द्ये मे द्यावापृथिवी विश्वरूपे।

आमागन्तां पितरा मातरा चामा सोमो अमृतत्वेन गम्यात् ॥१॥

ततः स्वयमाचामेत् । ततः समाचारात्सर्वैरायुः प्रजामिति पठित्वा अक्षतदानपूर्वकमाशिषो देयाः ।

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्तु तथा राज्यं प्रीता नृणां पितामहाः ॥ १ ॥

ततो गृहसीमान्तमनुव्रज्य प्रदक्षिणीकृत्याभिवाद्य वामदेव्यं गीत्वा गृहं प्रविशेत् ।

तत्र वामदेव्यसामानि यथा—कयानश्चित्रेति वामदेवर्षिर्गायत्रीच्छन्दो विश्वेदेवा देवताः शान्त्यर्थे जपे विनियोगः ॥ ॐ का

३
२ ५ ४ २ ४र ५ १ २ २ १र २ १
५ या । नश्चा ३ इत्रा ३ आ भुवात् । ऊ । तीसदावृधः स ।
२ २ २ १ २ ३ र २ १
खा । औ ३ हो हाई । कया २३ शचाई । ष्ठयौ हो ३ । हुम्मा
— १ ^ २ २ र ५ ४ २
२ । वा २ तौं ३५ हाई ॥१॥ का ५ स्त्वा । सत्यो ३ मा ३
४र ५ १ २र १ २ १ २ र २ १
दानाम् । मा । हिष्ठो मात्सा दन्ध । सा । औ ३ हो हाई । दृढा
२ ३ र २ १ — १ ^ ५
२३ चिदा । रुजौ हो ३ । हुम्मा २ । वा २ सो ३५ हाई ॥२॥
३ र ५ ४ २ ४र ५ १ २र १ २र
आ ५ भी । षुणा ३ः सा ३ खीनाम् । आ । विता जरायितॄ ।
१ र २ १ २ ३ र २
णाम् । औ २३ हो हाई । शता २३ म्भ वा । सियौ हो ३ ।
१ — २ ^ २ १ २ ३ १— २र ३ २
हुम्मा २ । ता २ यो ३५ हाई ॥३॥ कयानश्चित्र आ भुव दूती
३ १ २ ३ १ २ २ ३ १ २ ३ २ १ २ ३ १—
सदा वृधः सखा । कया शचिष्ठया वृता ॥१॥ कस्त्वा सत्यो
२र ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २उ
मदानां म ६ हिष्ठो मत्स दन्धसः । दृढाचिदारुजे वसु ॥२॥ अभी
३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३
षुणः सखीना मविता जरि तॄणाम् । शतं भवास्यूतये ॥३॥ स्व-
२ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३
स्तिन इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्तिन

२ ३ १ २ ३ २ ३ २ ३ १ २ १ ३ २
स्ताक्ष्यों अरिष्टनेमिः स्वस्ति नो बृहस्पति र्दधातु ॥ ॐ स्वस्ति
३ २ ३ १ २
नो बृहस्पति र्दधातु ॥४॥ ॐ शान्तिः शान्तिः शान्तिः । (१)

इति गोभिलगृह्यपद्धतौ सुबोधिन्यां गणपतिमातृपूजाभ्युदय-श्राद्धादीनां प्रयोगः समाप्तः ॥

---

## अथ स्वस्तिवाचनम् ॥

तत्रादौ आचम्य प्राणानायम्य । देशकालौ संकीर्त्य, करिष्यमाणादः कर्माङ्गत्वेन स्वस्तिवाचनङ्करिष्य इति सङ्कल्प्य, स्वपुरतो दक्षिणोत्तरौ तन्दुलपुञ्जौ कृत्वा, तदुपरि उदकसंस्थकलशद्वयं स्थापयेत् । तत्र विधिः-भूमिरितीन्द्रो यजुश्छन्दः भूम्यादयो देवताः भूम्यभिमन्त्रणे विनियोगः ।

---

(१) अत्र कोकिलानुसारिणामयं विशेषः-मातामहपार्वणस्थाने मातृमातामहप्रमातामहेत्यूहः कार्यः । मातृयजनानन्तरं दैवे कर्मणि नान्दीमुखा गणपतिगोत्रजवास्तुपुरुषार्यप्रत्यार्यमातृतन्मातृदेवीश्रीजगत्स्वामिकंकोलनागातिथिसहिताः एतद्वः पाद्यम् इत्यादि अवगन्तव्यम् । एवमासनादिदाने नान्दीमुखा गणपतिगोत्रजवास्तुपुरुषार्या प्रत्यार्यामातृतन्मातृदेवीश्रीजगत्स्वामिकंकोलनागातिथिसहिता एतद्व आसनम् इत्येवं रीत्या एकेनैव तन्त्रेण सर्वत्र प्रयोगो विधेयः ।

इदन्त्वत्र न विस्मर्तव्यम्-कोकिलमतानुयायिनां श्रीमालीप्रभृतीनां श्रीमालपुराणवचनानेकप्रामाण्याद्विवाहादौ कङ्कोलनागस्य मुख्यत उपास्यत्वेन प्रतीयमानतया तस्यैव मातृयजनान्तरमर्चनं युक्ततमं, न पुनर्गणपतिगोत्रजेत्याद्युच्चारणस्य तद्दर्शितदेवताविशेषाणां पूजनादिकरणस्य च विशेषत आवश्यकत्वम् । अत एव कुत्रचित् प्रयोगे कंकोलनागाय इदमासनम्, इत्यादिरीत्या वा केवलं कङ्कोलस्यैव पूजनं दृश्यते, गणपतिगोत्रजेत्यादि न दृश्यते, तथा व्यवहारेऽपि तथैव प्रायः गुर्जरप्रान्तीय श्रीमालीब्राह्मण विवाहादावुपलभ्यते । वस्तुतस्तु मङ्गलकार्ये बहुदेवाराधनं मङ्गलायैवेति कङ्कोलनागपूजनावसरे गणपत्याद्याराधनं विशेषतो मङ्गलायैव स्यादिति गणपत्यादिपङ्क्त्युपदर्शितरीत्या पूजनादिप्रकारोऽपि साधीयानेवाऽऽभाति इति दिक् ।

१ २ २ १ २ १ २
ॐ भूमिः । ३ । अन्तरिक्षं । ३ । द्यौः । २ । द्या ३४ ।
१२ २ २२१२ १११११
औहोवा । ए ३ । भूताया २३४५ ॥ १ ॥ इति भूमिं स्पृष्ट्वाभिमन्त्रणम् ।

आविशन्निति उशना गायत्री सोमः कलशस्थापने
१२ २ ६ १
विनियोगः । ॐ आविशन्कालशं ६ सुताः । वा-
२२ १२ २ ५ २ २ १२^ ३
इश्वाअर्षन् । अभाइ श्रायाऽ२ः । ओ३हा२ । ओवा । ओ२३४
६ १ ^ १२ २ २ २ ३ ११११
हाइ । इन्दू२३ः । आर इन्द्रा२३४औहोवा । यधियते२३४५ ॥१॥
इति कलशस्थापनम् ।

अग्नं व्रतस्यापश्चित्रिष्टुप्आपः जलपूरणे विनियोगः ।
२२ १२ २ २ १ २ २
ॐ हाउ । ३ । ऐरयत् । ३ । अपः समैरयत । ३ ।
२२१२२ २ २ २ २ २ २ २ २
भूनमैरयत् । ३ । अपाङ्गर्भोऽग्निरिडा । पाङ्गर्भोऽग्निरिडा । २ । पृथि-
२ २ २ १ २ २ १ २ २ २
व्यागर्भोऽग्निरिडा । ३ । समन्यायन्त्युपयन्तिया२३न्याः । समा-
१२ २ १ २ १२ २ २ २ २ १ २
नमूर्वनद्यस्पृणा२३न्ती । तमू शुचिं ६ शुचयोदीदिवा २३६ साम् ।
१२ २ २ १ २ २२ १२ २ २ १
अपान्नपातमुपयन्तिया२३पा३ः । हाउ । ३ । ऐरयत । ३ । अपः
२ २ २२१२ २ २ २ २ २ २
समैरयत् । ३ । भूतमैरयत् । ३ । अपाङ्गर्भोऽग्निरिडा । पाङ्गर्भो-
२ २ २ २ २ २ २ २
ऽग्निरिडा । २ । पृथिव्यागर्भोऽग्निरिडा । २ । पृथिव्यागर्भोऽग्निरिडा
२ २२ १ २ १ २२ १ २ १ २२
३ । हाउवा । ए । अग्निःशिशुक्रः । ए । शुक्रःशिशुक्रः । ए ।
१२ २ १ २ १ २२ १२ २ १२ २ २२ २२ १२ २ १ २ २ १
तेजःशक्रस्यशक्रम् । ए । तेजःसमाः समीचीः । ए । तेजऊषोन-
२२१ २२ १ २ ३ ११११
जारः । ए । सुवर्ज्योति२३४५ः ॥ १ ॥ इति मन्त्रेण जलपूरणम् ।

त्वमिमा ओषधीरिति सोमस्त्रिष्टुप्सोमः ओषधिप्रक्षेपे (१) वि-

---

(१) सर्वौषधिस्तन्त्रान्तरे यथा—जटामांसी वचा कुष्ठं शैलेयं रज-

नियोगः॥ ॐ हाउ । ३ । हौवा ३ । ३ । हाइ । हौवा ३ । ३ । हौवा३ । ३ । हो३वा३४५ । २ । हो३वा३४ । आहावौ । त्वमि-माओषधीः सोमविश्वाः । त्वमपोअजनयस्त्वङ्गाः । त्वमातनोरु-र्वन्तरिक्षम् । त्वञ्ज्योतिषावितमोववर्थ । हाउ । ३ । हौवा ३ । ३ । हाइ । हौवा३ । ३ । हौवा३ । ३ । हो३वा३४५ । २ । हो३वा३४ । औहोवा । ए । जनदिवमन्तरिक्षम्पृथिवींविश्वभोज-सम्पुरूरूपा अजीजनः । इट्इडा२३४५ ॥१॥ इति ओषधिप्रक्षेपः ।

स्योना पृथिवीति मेधातिथिः परउष्णिक् पृथिवी मृत्ति-काप्रक्षेपे (१)विनियोगः । ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छानः शर्म सप्रथो देवान्मामभयादिति ॥ १ ॥ इति मन्त्रेण पञ्चमृत्तिकाप्रक्षेपः ।

चन्द्रमा अप्स्वन्तरेति त्रितः पङ्क्तिरिन्द्रः हिरण्यप्रक्षेपे विनि-योगः ॥ ॐ चन्द्रमाआउवा । प्सुवान्ताराउवा । सुपर्णोधाउवा । वतेदिवी । नवोहिराउवा । ण्यनाइमायाउवा । पदं विन्दाउवा । तिविद्युताः । वित्तंमाआउवा । स्यरोदा२३सा३४३इ । ओ२३-४५इ । डा ॥ १ ॥ इति हिरण्यादीनां प्रक्षेपः ।

परिवाजपतिरिति वामदेवो गायत्र्यग्निः पञ्चरत्नप्रक्षेपे(२) वि-नियोगः । ॐ पर्यौ । होयिवाजा । पतायिः का १ वी २ः । आग्निर्हि-

---

नीद्वयम् । शटी चम्पकमुस्तञ्च सर्वोषधिगणः स्मृतः । रजनी-हरिद्रा, दारुहरिद्रा च ।

(१) अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदादिति पञ्चमृदः।

(२) सुवर्णं रजतं मुक्ता लाजावर्त्तं प्रवालकम् । रत्नपञ्चक-माख्यातं इति ।

२ १ ७ — १ १ ^ ३ ५१ २
ष्या । नायक्रमी२तु । दधा२३३। रा २ त्ना २३४ औ होवा ।
२ १ ३ ११११
निदाशु षे २३४५ ॥ १ ॥ इति पञ्चरत्नप्रक्षेपः ।

इदंवसोरिति गरो गायत्रीन्द्रः वस्त्रवेष्टने विनियोगः ।
५ २ १ २ १ ५२ २ २ १
ॐ इदंवसाउ । सुतमा२३न्धाः । पिबा२सुपू । णमुदा२३
२ ३ २ ३ २ ४ ५ ४ ५
रा३४म् । अना३४भया३इन् । ररोवा । मा५ तो६हाइ ॥ १ ॥
इति कलशस्य कण्ठे वस्त्रवेष्टनम् । अभावे सूत्रेण वा ।

अयमूर्जेति प्रजापतिरनुष्टुप् उदुम्बरः पञ्चपल्लव(१) निधाने विनियोगः । ॐ अयमूर्जावतो वृक्ष उर्जीव फलिनी भव॥ पण वनस्पते नुत्वानुत्वा सूयताꣳरयिः॥१॥इति पञ्चपल्लव निधानम् ।

सघातमिति लुशः पङ्क्तिरिन्द्रः पूर्णपात्रनिधाने विनियोगः ।
३ ४२ ३ ४ ५ ३ २ ३२ ४२ ५ १ २ २ १ २
ॐ सघातंवृषणम् । रथा३४औहोवा । आधितिष्ठा । तिगोवा१इदा
— २ १२ १ १ ७ ^ ३ ५ २२ १ २ ^ ३
२म् । यःपात्रꣳहा । रियो२जा२३४नाम् । पूर्णमी । द्रा । चिकेता
५ १२ २ २ १ ^ ३ ५२ २ ३ ५
२३४ती । योजानू३ वा३इ । द्रा२ता २३४ औहोवा । हा२३४री
॥ १ ॥ इति साक्षत सफल पूर्णपात्रनिधानम् ।

५
यदाकदेति पञ्जो बृहती वरुणः वरुणावाहने विनियोगः । ॐ य-
२ १ ^ ३ ५२ २ ३ ५ २२ १२ १२ १ २
दाकदा । चा२मा२३४औहोवा । ढु२३४षे । स्तोताजरेतमर्त्तिया३ः ।
१ २ १ ७ ३ २ ३ २ १ २२ १ १ ^
आदिद्वन्दे । तावरुणा२३४म् । विपा३४गिरा । धात्तारांवी२३ । व्रा२-
३ ५२ २ ३ ११११
ता२३४औहोवा । ना२३४५म् ॥१॥ इति उत्तरकलशे वरुणावाहनम् ।

---

(१) अश्वत्थोदुम्बरप्लक्ष चूतन्यग्रोधपल्लवाः । पञ्चपल्लवमित्युक्तमिति ।

वाक्मनःप्राणेति ऋनवोऽनुष्टुप्सूर्यः प्रतिष्ठापने विनियोगः ।
१ २र १ २र१र२र१र २र१ २ १र २ १२१२१र २
ॐ वाक् । मनःप्राणःप्राणोपानोव्यानश्चक्षुःश्रोत्रंशर्मवर्म भूतिःप्र-
१
तिष्ठा ॥१॥ एताएव समहाव्रताः सर्वा वा एता विराजो दशिनी प्रथमा विंशिनी द्वितीया त्रिंशिनी तृतीयैषा वै परमाविराड् यच्चत्वारिंश शद्वात्रयः पङ्क्तिर्वै परमा विराट् परमायामेव विराजि प्रतितिष्ठन्ति ॥ २ ॥ अस्मिन्कलशे वरुणः सुप्रतिष्ठितो वरदो भवतु । इति मन्त्राभ्यां प्रतिष्ठापनम् ।

ततः कलशे विष्ण्वादीनामावाहनङ्कुर्यात् । तद्यथा—

कलाःकला हि देवानान्दानवानाङ्कलाःकलाः ॥
विगृह्य निर्मितो येन कलशस्तेन कथ्यते ॥ १ ॥
कलशस्य मुखे विष्णुर्ग्रीवायान्तु महेश्वरः ॥
मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणास्तथा ॥ २ ॥
कुक्षौ तु सागराः सप्त सप्तद्वीपा च मेदिनी ॥
अर्जुनी गोमती चैव चन्द्रभागा सरस्वती ॥ ३ ॥
कावेरी कृष्णवेणा च गङ्गा चैव महानदी ॥
तापी गोदावरी चैव माहेन्द्री नर्मदा तथा ॥ ४ ॥
नदाश्च विविधा जाता नद्यः सर्वास्तथापराः ॥
पृथिव्यां यानि तीर्थानि कलशस्थानि तानि वै ॥ ५ ॥
शान्तिः पुष्टिश्च गायत्री सावित्री कलशे स्थिताः ॥
ऋग्वेदश्च यजुर्वेदः सामवेदस्त्वथर्वणः ॥ ६ ॥
अङ्गैश्च सहिता ह्येते कलशन्तु समाश्रिताः ॥
सर्वे समुद्राः सरितः सरांसि च नदानि च ॥ ७ ॥
आयान्तु मम शान्त्यर्थन्दुरितक्षयकारकाः ॥

इत्यक्षतान् कलशे क्षिपेत् ।

ततो मन्त्रेण वरुणाय नम इति नाममन्त्रेण वा षोडशोपचारैः

पञ्चोपचारैर्वा पूजनम् । ततो दक्षिणभागे प्रश्नप्रतिवचनसामर्थ्यान् ब्राह्मणानुपवेश्य गन्धादिभिरभ्यर्च्य ततः कलशम्प्रार्थयेत् ।

देवदानसंवादे मथ्यमाने महोदधौ ।
उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥ १ ॥
त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।
त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ २ ॥
शिवः स्वयं त्वमेवासि विष्णुस्त्वञ्च प्रजापतिः ।
आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ ३ ॥
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदः ।
त्वत्प्रसादिमं यज्ञङ्कर्त्तुमीहे जलोद्भव ।
सान्निध्यङ्कुरु मे देव प्रसन्नो भव सर्वदा ॥ ४ ॥
सम्पूज्य गन्धमाल्याद्यैर्ब्राह्मणान्स्वस्ति वाचयेत् ।
धर्मकर्मणि माङ्गल्ये सङ्ग्रामाद्भुतदर्शने ॥ ५ ॥
पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते ॥
एतदेव निरोङ्कारं कुर्यात् क्षत्रियवैश्ययोः ॥ ६ ॥

अवनीकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना स्वर्णःपूर्णकलशं धारयित्वा आशिषः प्रार्थयेत् । तद्यथा–ॐ दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च तेनायुः प्रमाणेन पुण्याहं दीर्घमायुरस्तु इति द्विजाः । शिवा आपः सन्तु । सौमनस्यपुष्पमस्तु । अक्षतञ्चारिष्टं चास्तु । गन्धाः पान्तु । सुमङ्गल्यञ्चास्तु । अक्षताः पान्तु । आयुष्यमस्तु । पुष्पाणि पान्तु । सौश्रियमस्तु । ताम्बूलानि पान्तु । ऐश्वर्यमस्तु । दक्षिणाः पान्तु । बहुदेयञ्चास्तु । दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं बहुधनञ्चायुष्यञ्चास्तु । (अत्र सर्वत्र ब्राह्मणैरस्तु पान्तु सन्तु इत्यादि प्रत्युत्तरं देयम् ) । यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमोङ्कारमादिं कृत्वा ऋग्यजुःसामा-

यन्नाशीर्वचनं बहुर्षिमतं संविज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये । वाच्यताम् इति प्रत्युक्तिः । एवं उत्तरत्रापि प्रत्युत्तरं यथायोग्यं दद्यात् ।

ऋक्—

ॐ द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्रयं सत् ।
द्रविणोदा वीरवतीमिषं नो द्रविणोदा रासते दीर्घमायुः ॥ १ ॥
सवितापश्चातात्सविता पुरस्तात्सवितोत्तरात्तात्सविता धरात्तात् ।
सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥२॥
नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो विदधात्यायन्प्रचन्द्रमास्तिरते दीर्घमायुः ॥ ३ ॥
उच्चादिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सहते सूर्येण ।
हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोमप्रतिरन्त आयुः ॥ ४ ॥

यजुः—

ॐ द्रविणोदाः पिपीषति जुहोतप्रचतिष्ठत । नेष्ट्रादृतुभिरिष्यत ॥ १ ॥
सविता त्वा सवानांꣳसुवतामग्निर्गृहपतीनाꣳसोमो वनस्पतीनाम् । बृहस्पतिर्वाचऽइन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो वरुणो धर्मपतीनाम् ॥ २ ॥
न तद्रक्षाꣳसि न पिशाचास्तरन्ति देवानामोजः प्रथमजꣳह्येतत् । यो बिभर्ति दाक्षायणꣳ हिरण्यꣳ स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः ॥ ३ ॥
उच्चा ते जातमन्धसो दिवि सद्भूम्याददे । उग्रꣳशर्म महि श्रवः ॥ ४ ॥ (१)

साम—

६१४ २ ४ ५२ २२१२ २ २ १ २ १ २
ॐ देवो ३ वो ३ द्रविणोदाः । पूर्णांविवष्ट्वासिचम् । उद्वा

(१) अत्र केचिदिमं मंत्रमपि पठन्ति, यथा—उपास्मै गायता नरः पवमाना येन्दवे । अभिदेवाꣳइयक्षते ॥ १ ॥

१ सिश्रा २ । ध्वमुपवापृणध्वम् । आदिद्वोदेर। वओहते । इडा२३
भा ३४३। ओ२३४५इ । डा ॥ १ ॥

अग्नो देव सवितः । औहोवा । इहश्रुधाइ । प्रजावा २३
त्सा । वीः सौभगाम् । पराहु २३ वा ३ । होवा२
३ हा । प्तियर्ठसू २३४५ वा ६५६ । दक्षा ३ या २३४५॥२॥

चन्द्रमाआउवा। प्सुवान्ता राउवा। सुपर्णो धाउवा। वतेदिवि ।
नवोहिराउवा । ण्यनायिमायाउवा । पदं विन्दाउवा । तिविद्युताः।
वित्तम्मा आउवा । स्यरोदा २३ सा ३४३ यि । ओ २३४५
इ । डा ॥ ३ ॥

उच्चाता ३ यिजातमन्धसाः । दिवाइसा १ द्रू २ । मिया
२३ ददायि । उग्रंशर्म्मा । महा २३ यिश्रवाउ । वा ३ । स्तौषे
२३४५ । ॥ ४ ॥

(उपाऽ५स्मै । गा३या३तानाराः । पा३वामा३ना । या२३
आ । हुम्मायि । दा३वायि । आभिदेवांइया२क्षताउ ।
वा २३४५ ॥ ५ ॥ )

अथर्वणः—

ॐ धातारातिः सवितेदं जुषन्तां प्रजापतिर्निधिपतिर्नो
अग्निः ॥ त्वष्टा विष्णुः प्रजया संरराणो यजमानाय द्रवि-
णन्दधातु ॥ १ ॥

येन देवं सवितारम्परि देवा अधारयन् ॥
तेनेदम्ब्रह्मणस्पते परि राष्ट्राय धत्तन ॥ २ ॥

अहोरात्राभ्यां नक्षत्रेभ्यः सूर्याचन्द्रमसाभ्याम् ॥

भद्राहमस्मभ्यं राजञ्छकंधूमत्वं कृधि ॥ ३ ॥

उच्चापतन्तमरुणं सुपर्णं मध्येदिवस्तरणिं भ्राजमानम् ।

पश्याम त्वा सवितारं यमाहुरजस्रं ज्योतिर्यदविन्ददत्रिः ॥४॥(१)

इत्येता ऋचः पुण्याहे ब्रूयात् । व्रत नियमतपः स्वाध्याय-क्रतुदमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् । समाहितमनसः स्मः । प्रसीदन्तु भवन्तः । प्रसन्नाः स्मः । शान्तिरस्तु । पुष्टिरस्तु । तुष्टिरस्तु । वृद्धिरस्तु । अविघ्नमस्तु । आयुष्यमस्तु । आरोग्यमस्तु । शिवमस्तु । शिवं कर्मास्तु । कर्मसमृद्धिरस्तु । पुत्रसमृद्धिरस्तु । वेदसमृद्धिरस्तु । शास्त्रसमृद्धिरस्तु । धनधान्यसमृद्धिरस्तु । इष्टसम्पदस्तु । अनिष्टनिरसनमस्तु । यत्पापं रोगमशुभमकल्याणं तत् दूरे प्रतिहतमस्तु । यच्छ्रेयस्तत्तदस्तु । उत्तरेकर्मण्यविघ्नमस्तु । उत्तरोत्तरमहरहरभिवृद्धिरस्तु । उत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम् । तिथि-करण-मुहूर्त-नक्षत्र-ग्रह-लग्न-सम्पदस्तु । तिथिकरण-मुहूर्त-नक्षत्र ग्रहलग्नाधिदेवताः प्रीयन्ताम् । तिथिकरणे समुहूर्त्ते सनक्षत्रे सग्रहे सलग्ने सदैवते प्रीयेताम् । दुर्गापाञ्चाल्यौ प्रीयेताम् । अग्निपुरोगा-विश्वेदेवाः प्रीयन्ताम् । इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम् । शची-

(१) अत्र केचिद्येन देवादिमन्त्रत्रयस्थाने एतान् मन्त्रान् पठन्ति । ॐ अभयं द्यावापृथिवी इहास्तु नोऽभयं सोमः सविता नः कृणोतु । अभयं नोऽस्तुर्वन्तरिक्षं सप्तऋषीणाञ्च हविषाभयं नो अस्तु ॥१॥ नवो नवो भवसि जायमानोऽन्हां केतु रुषसामेष्यग्रम् । भागं देवेभ्यो विदधात्यायन्प्रचन्द्रमस्तिरसे दीर्घ मायुः ॥२॥ उच्चैर्घोषोदुन्दुभिः सत्वनायन्वानस्पत्यः संभृत उस्रियाभिः।वाचं क्षुण्वानो दमयन्त्सपत्नान्सिंह इव ज्येष्यन्नभितं स्तनीहि ॥

पुरोगा देवपत्न्यः प्रीयन्ताम् । ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम् । विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम् । माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम् । वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम् । अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम् । ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् । श्रीसरस्वत्यौ प्रीयेताम् । श्रद्धामेधे प्रीयेताम् । भगवती कात्यायनी प्रीयताम् । भगवती माहेश्वरी प्रीयताम् । भगवती वृद्धिकरी प्रीयताम् । भगवती ऋद्धिकरी प्रीयताम् । भगवती पुष्टिकरी प्रीयताम् । भगवती तुष्टिकरी प्रीयताम् । भगवन्तौ विघ्नविनायकौ प्रीयेताम् । सर्वाः कुलदेवताः प्रीयन्ताम् । सर्वा ग्रामदेवताः प्रीयन्ताम् । सर्वा-इष्टदेवताः प्रीयन्ताम् । हताश्च ब्रह्मद्विषः । हताश्च परिपन्थिनः । हताश्च विघ्नकर्त्तारः । हताश्च विघ्नकराः । शत्रवः पराभवं यान्तु । शाम्यन्तु घोराणि । शाम्यन्तु पापानि । शाम्यन्त्वीतयः । शुभानि वर्द्धन्ताम् । शिवा आपः सन्तु । शिवा ऋतवः सन्तु । शिवा अग्नयः सन्तु । शिवा आहुतयः सन्तु । शिवा ओषधयः सन्तु । शिवा वनस्पतयः सन्तु । शिवा अतिथयः सन्तु । अहोरात्रे शिवे स्याताम् ।

ऋक्—

शंवः कनिक्रदद्देवः पर्जन्यो अभिवर्षत्वोषधयः प्रतिधीयताम् ।
शन्नो द्यावापृथिवी शम्प्रजाभ्यः शन्नो अस्तु द्विपदे शञ्चतुष्पदे ॥२॥

यजुः—

निकामे निकामेनः पर्जन्यो वर्षतु फलवत्यो न ओष-धयः । पच्यन्तां योगक्षेमो नः कल्पताम् ॥ १ ॥

साम—

३ २       १ २ ५     ४ ५   २ १ २   २ १
त्वष्टा ३४ । नोदैवियम् । वचाः । पर्जन्यो ब्रह्मणस्पा
२   १२ २       ३ १२     २   १     २
२३ तीः । पुत्रै र्भ्रातृभिरदितिर्नु पातु २३ नाः । दुष्टारा २३ न्त्रा ।

१ २ १
मणंवा २३ चा ३४३ः। ओ २३४५ इ।डा॥ १ ॥

अथर्वणः—

गणास्त्वोपंगायन्तुमारुंताः पर्जन्यघोषिणः पृथक् ॥
सर्गा वर्षस्य वर्षतो वर्षन्तु पृथिवीमनुं ॥ १ ॥(१)

शुक्राङ्गारक बुध बृहस्पति शनैश्चर राहु केतु सोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम्। भगवान् नारायणः प्रीयताम्। भगवान् पर्जन्यः प्रीयताम्। भगवान्स्वामी महासेनः प्रीयताम्। पुरोनुवाक्यया यत्पुण्यं तदस्तु। याज्यया यत्पुण्यं तदस्तु। वषट्कारेण यत्पुण्यं तदस्तु। प्रातः सूर्योदये यत्पुण्यं तदस्तु। एतत्कल्याणयुक्तं पुण्यं पुण्याहं वाचयिष्ये। वाच्यताम्।

ब्राह्मं पुण्यं महर्यच्च सृष्ट्युत्पादनकारकम्।
वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः॥

भो ब्राह्मणाः मम सकुटुम्बस्य सपरिवारस्य गृहेऽमुककर्मणि पुण्याहं भवन्तो ब्रुवन्तु। ३। पुण्याहम्। ३।

ऋक्—

उद्गातेवं शकुने सामं गायसि ब्रह्मपुत्र इंव सवनेषु शंससि। वृषेव वाजी शिशुंमतीरपीत्यां सर्वतो नः शकुने भद्रमा वंद विश्वतों नः शकुने पुण्यमावंद ॥ १ ॥

यजुः—

पुनन्तुं मा देवजनाः पुनन्तु मनसा धियः।
पुनन्तु विश्वाभूतानि जातवेदः पुनीहि मां ॥ १ ॥

साम—

२ २ २ १ ५ १ २ २ २
पुनानः सोमा ३ धारा २३४ या। आपो वसानो अर्ष-

(१) अत्र केचिदिमं मन्त्रं पठन्ति—त्वष्टां मे दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः। पुत्रैर्भ्रातृभिरदितिर्नुपातु नो दुष्टरं त्रायमाणं सहः॥ १ ॥

२ २ १ ^ ३२ १२ २ १ २
स्यारत्वया योनिमृतस्यसा २ यिद्माथि । ओहा ३ उवा । उत्सो·
२ २ १ २ २ १ २ ४ ५ ४
देवोहिरा २३ हायि । ओहा ३ उवा । णयया । औ ३ होवा । हो
५इ । डा ॥ १ ॥

अथर्वणः—

पुनन्तु मा देवजनाः पुनन्तु मनवो धिया ।
पुनन्तु विश्वा भूतानि पवमानः पुनातु मा ॥ १ ॥
पृथिव्यामुद्धृतायान्तु यत्कल्याणं पुरा कृतम् ।
ऋषिभिः सिद्धगन्धर्वै स्तत्कल्याणं ब्रुवन्तु नः ॥ १ ॥

भो ब्राह्मणाः मम सकुटुम्बस्य सपरिवारस्य गृहे अस्मिन्नमुक-कर्माणि कल्याणं भवन्तो ब्रुवन्तु । ३ । कल्याणम् । ३ ।

ऋक्—

अपाः सोममस्तमिन्द्र प्रयाहि कल्याणीर्जायासुरणं गृहे ते ।
यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत्॥१॥

यजुः—

यथेमां वाचं कल्याणीमावदानि जनेभ्यः । ब्रह्मराज-न्याभ्याꣳ शूद्राय चार्याय च स्वाय चारणाय च । प्रियो देवा-नान्दक्षिणायै दातुरिह भूयासमयं मे कामः समृध्यताम् (मुपमा-दोनमतु ) ॥ १ ॥

साम—

३ ५ ४ २ ४२ ५ १ २
का ५ या । नश्चा ३ यित्रा २ आभुवात् । ऊ । ती
२१२ २ १ २ २२ १ २ ३२
सदावृधः स । खा । औ ३ होहोयि । कया २३ शचायि । ष्ठयौ·
२ १ — १ ^ २
हो ३ । हुम्मा २ । वा २ र्त्तो ३५ हायि ॥ १ ॥

अथर्वणः—

विश्वजित्कल्याण्यै मापरि देहि । कल्याणि द्विपाच्च सर्वं नो

रक्ष चतुष्पाद्यच्च नस्त्वम् ॥ १ ॥

सागरस्य तु या ऋद्धिर्महालक्ष्म्यादिभिः कृता ।
सम्पूर्णा सुप्रभावा च तामृद्धिं प्रब्रुवन्तु नः ॥ १ ॥

भोब्राह्मणाः मम सकुटुम्बस्य सपरिवारस्य गृहे अमुककर्मणि ऋद्धिं भवन्तो ब्रुवन्तु । ३ । ऋद्ध्यतामिति त्रिर्विप्राः ॥

ऋक्—

ऋध्याम स्तोमं सनुयाम वाजमानो मन्त्रं सरथे होपयातम् ।
यशो न पक्वं मधुगोष्वन्तरा भूतांशो अश्विनोः काममप्राः ॥ १ ॥

यजुः—

सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता ऽअभूम । दिवम्पृथिव्या अध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः ॥ १ ॥

साम—

औहोवा औहोवा औहो३वा । अगन्म ज्योतिः । २ । अगन्म ज्योतिः । अमृता अभूम । अमृता अभूम । अमृता अभूमा । तरिक्षम्पृथिव्या अध्यारुहामा । २ । तरिक्षम्पृथिव्या अध्यारुहाम । दिवमन्तरिक्षादध्यारुहाम । ३ । अविदामदेवान् । ३ । समुदेवैरगन्महि । ३ । औहोवा औहोवा औहो३वा । ए । सुवर्ज्योति २३४५ः ॥ १ ॥

अथर्वणः—

ऋधङ्मन्त्रो योनिय आबभूवामृतासु वर्द्धमानः सुजन्मा ।
अदब्धासुभ्राजमानो हेवात्रितो धर्ता दाधार त्रीणि ॥ १ ॥

स्वस्तिर्या ह्यविनाशाख्या पुण्यकल्याणवृद्धिदा ।
विनायकप्रिया नित्यन्तां स्वस्ति प्रब्रुवन्तु नः ॥ १ ॥

भोब्राह्मणाः मम सकुटुम्बस्य सपरिवारस्य गृहेऽस्मिन्नमुककर्मणि स्वस्ति भवन्तो ब्रुवन्तु । ३ । स्वस्तीति त्रिः ॥

ऋक्—

स्वस्तिरिद्धि प्रपथे श्रेष्ठारेक्णस्वस्त्यभियावा ममेति ।
सा नो अमासो अरणे निपातु स्वावेशा भवतु देवगोपा ॥ १ ॥

यजुः—

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ १ ॥

सामवेदः—

२२ १२ ७ २ १ २ २ ७
त्रातारमिन्द्रमविता । रमी२३न्द्राम् । हवेहवेसुहव२ꣳशु । रमी-
२ १ ७ २ २ १ २ १ २
२३न्द्राम् । हुवाइ नु शक्रं पुरुहू । तमी२३न्द्राम् । इदꣳस्वस्तिनो
२ १ २ २ २ ४
मघवा । वा३४३इ । तू२वा५इन्द्रा६५६ः ॥ १ ॥

अथर्वणः—

स्वस्ति मात्र उत पित्रे नो अस्तु स्वस्ति गोभ्यो जगते
पुरुषेभ्यः । विश्वं सुभूतं सुविदत्रं नो अस्तु ज्योगेव दृशेम सूर्यम् ॥१॥

मृकण्डसूनोरायुर्यद्ध्रुवलोमशयो स्तथा ।
आयुषा तेन संयुक्ता जीवेम शरदः शतम् ॥ १ ॥

शतं जीवन्तु भवन्त इति विप्राः ।

ऋक्—

शतञ्जीव शरदो वर्द्धमानः शतं हेमन्ताञ्छतमु वसन्तान् ।
शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥१॥

यजुः—

शतमिन्नु शरदो अन्ति देवा यत्रानश्चक्रा जरसन्तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मानो मध्या रीरिषतायुर्गन्तोः ॥ १ ॥

सामः—

२र र र र र १ २
हाउ । ३ । यशो हाउ । ३ । वर्चो हाउ । ३ । आस्मिन्
१ १ २ — १र २र १ २
हायि । २ । आस्मिन् हा ३ १ उ वा २ । तवे दिन्द्रावमं वसु ।
१ २ १ २१र २ १ २र १
त्वं पुष्यसि मध्यमम् । सत्रा विश्वस्य परमस्य राजसि । नकि-
२र १र २ र २र र र र र
ष्ट्वा गोषु वृण्वते । हाउ । ३ । यशो हाउ । ३ । वर्चो हाउ
१ २ १ १ २ —
। ३ । आस्मिन् हायि । २ । आस्मिन् हा ३१ उ । वा २ ।
१र र र २ र १र २१२ १ र २१र
आयुर्विश्वायुर्विश्वं विश्वमायुरशीमहि प्रजान्त्वष्टरधि निधेह्यस्मे
२ १ र २र १ २र १ ३ १ १ १ १
शतञ्जीवेम शरदो वयन्ते २३४५ ॥ १ ॥

अथर्वणः—

आयुरस्मै धेहि जातवेदः प्रजां त्वष्टरधि निधेह्यस्मै । राय-स्पोषं सवितरासुवास्मै शतञ्जीवाति शरदस्तवायम् ॥ १ ॥

शिवगौरीविवाहे या या श्री रामे नृपात्मजे ।
धनदस्य गृहे या श्रीरस्माकं साऽस्तु सद्मनि ॥ १ ॥

इति यजमानः । अस्तुश्रीरिति विप्राः ।

ऋक्—

श्रिये जातः श्रिय आनिरियाय श्रियं वयो जरितृभ्यो दधाति । श्रियं वसाना अमृतत्वमायन्भवन्ति सत्या समिथामितद्रौ ॥१॥

यजुः—

मनसः काममाकूतिं वाचः सत्यमशीय ।
पशूनाꣳ रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा ॥१॥

साम—

५र ५ १ — १ — १ — १
श्रायन्त इवसू४रायाम् । विश्वा२इदिन्द्रा२ । स्यभा२क्षाता ।
१ २ २ १र २र २ १ २ — १ २र १ ९र र
वासूनि जातो जनिमा । नियोजा१ सा२ । प्रतिभागन्नदी२धिमः ।

१ २ १र २ २ १र ३ २ १ ५ २
प्रा२३ती । भागान्ना३दा । हुम् । धिमा३ः । ओ २३४वा । श्रि-
ये १ ॥ १ ॥

अथर्वणः—

एहयातु वरुणः सोमो अग्निर्बृहस्पतिर्वसुभिरेह यातु । अस्य श्रियमुपसंयात सर्वं उग्रस्य चेत्तुःसं मनसः सजाताः ॥ १ ॥

प्रजापतिर्लोकपालो धाता ब्रह्मा च देवराट् ।
भगवान् शाश्वतो नित्यं स नो रक्षतु सर्वतः ॥ १ ॥
भगवान्प्रजापतिः प्रीयताम् ।

ऋक्—

प्रजापते नत्वदेतान्यन्यो विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ १ ॥

यजुः—

प्रजापते नत्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव । यत्कामास्ते जुहुम स्तन्नो अस्त्वयममुष्य पितासावस्य पिता वयꣳ स्याम पतयो रयीणाꣳ स्वाहा ॥ १ ॥

साम—

२र १ र १ र २र
हाउ । ३ । इमाः । ३ । प्रजाः । ३ । प्रजापते ।
१ र २र २ — २र १ २ २र
होइ । २ । प्रजापते । हा३१उवा२ । ए । हृदयम् । २ । ए ।
१ २ — २ १र र २र १ १ १ १ १
हृदया३१उ । वा२ । प्रजारूपमजीजने३ । इट्इडा२३४५ ॥ १ ॥

अथर्वणः—

प्रजापतेरावृतो ब्रह्मणा वर्मणाहं कश्यपस्य ज्योतिषा वर्चसा च । जरदष्टिः कृतवीर्यो विहायाः सहस्रायुः सुकृतश्चरेयम् ॥ १ ॥

आयुष्मते स्वस्तिमते यजमानाय दाशुषे ।
श्रिये दत्ताशिषः सन्तु ऋत्विग्भिर्वेदपारगैः ॥ १ ॥

आयुष्मते स्वस्ति ॥

ऋक्—

स्वस्तये वाजिभिश्च प्रणेतः संयन्महीरिषं आसत्सिपूर्वीः ।

रायो वन्तारो बृहतः स्यामास्मे अस्तु भग इन्द्र प्रजावान् ॥१॥(१)

यजुः—

प्रतिपन्थामपद्महि स्वस्ति गामनेहसम् ।

येन विश्वाः परिद्विषो वृणक्ति विन्दते वसु ॥ १ ॥

साम—

५ १ २र १ १ १ २र र ३ ५ र ३र २ १

त्यमूषू । वाजि । ना३४५म् । देवजूता२३४म् । सहोवानन्ता ।

२ २ ३ ४ ५ २ ३ ५ २ २ ३र

रुता३ । र२थानाम् । अरिष्टना२३४इमीम् । पृतना२४३ जमा-

५ ३ १ र २ ३ २ २ ४

शुम् । स्वस्त । याइ । ताक्ष्यमिहा२४३ । हू३वा५इमा ६५६ ॥ १ ॥

अथर्वणः—

वेदः स्वस्तिर्द्रुघणः स्वस्ति परशुर्वेदिः परशुर्नः स्वस्ति ।

हविष्कृतो यज्ञिया यज्ञकामास्ते देवासो यज्ञमिमं जुषन्ताम् ॥१॥(२)

शान्तिर्या सह देवैश्च ब्राह्मणैः परिपठ्यते ।

ऋषिभिर्गीयते या च तां तां शान्तिं ब्रुवन्तु नः ॥१॥ शान्तिरस्तु ।

शं वो भूमिः शं व आपः शं वो भवन्तु मरुतः स्वर्काः ।

शं वः प्रजाभ्यः शमु यन्तु पापं शं वः पर्जन्यो अभिवर्षतु ॥ १ ॥

शं व इन्द्रः शं ताता शं वो भवन्तूषसो विभातीः ।

---

(१) अत्र केचित्—ॐ स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः । बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥१॥ इति पठन्ति ।

(२) अत्र केचित्—ॐ त्यमूषु वाजिनं देवजूतं सहोवानन्त रुतारं रथानाम् । अरिष्टनेमिं पृतना जिमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥१॥ इति पठन्ति ।

शं वो वसंवो रुद्रा आदित्या सदन्तु शं वो मित्रावरुणावश्विना शम् ॥२॥
शं वो विष्णुः प्रजया संरराणो नु स्वधा कृणुहि लोके अस्मिन् ।
शं वो भवतुभुवनस्य यस्पतिः शं वो भव द्विपदे शं चतुष्पदे ॥३॥

यजुः—

द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरो-षधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शा-न्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सामा शान्तिरेधि ॥ १ ॥

स्वस्तिपुण्याहवाचनकर्मसमृद्धिरस्तु ॥

तत उत्तरकलशं दक्षिणहस्ते दक्षिणकलशं वामहस्ते गृहीत्वा ताभ्यां धाराद्वयं सततं पात्रे निषिञ्चेद्वास्तोष्पते प्रतिजानीति मन्त्रेण । वास्तोष्पत इति वसिष्ठो जगती वास्तोष्पतिः धाराद्वय-निषेचने विनियोगः ।

ॐ वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशो अनमीवो भवानः ।
यत्त्वे महे प्रति तन्नो जुषस्व श न्नो भव द्विपदे शं चतुष्पदे ॥१॥

ततः कर्त्तुर्वामतः पत्नीमुपवेश्य पात्रपातितजलेन पल्लवदूर्वा-भिरुदङ्मुखा विप्रा अभिषिञ्चेयुस्तिष्ठन्तः शन्नो देव्यादिमन्त्रैः ।

२ २ ३ २ ३ १ २ ३ १ २ ३ १ २ २उ ३ १ २
ॐशन्नो देवीरभिष्टये शन्नो भवन्तु पीतये । शं यो रभि स्रवन्तु नः ॥१॥
२ ३ १— २२ ३ २ ३ १ २ २ १ २ ३ १— २२ ३ १ २
आपो हि ष्ठा मयो भुव स्तान ऊर्जे दधातन । महे रणाय चक्षसे ॥२॥
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १२ ३ १२
यो वः शिवतमो रसस्तस्य भाजयते ह नः । उशतीरिव मातरः ॥३॥
२ ३ १ २ ३ २ ३ १ २ ३ १ २ १ २ ३ १२
तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥४॥

तत उपास्मै गायतेत्यादिस्नानविधिमन्त्रैरभिषिञ्चेयुः ।

१ २ ३ १ २ ३ १ २ ३ २ ३ १— २२
ॐउपास्मै गायता नरः पवमानायेन्दवे । अभि देवाꣳ इयक्षते ॥१॥

३ २ ३ १ २ ३ १— २र ३२ ३ १ २ ३ २
अभिते मधुना पयो थर्वाणो अशिश्रयुः । देवं देवाय देवयु ॥२॥
१ २ ३ २उ ३ १— २र ३ १—२र १ २ ३ १ २
स नः पवस्व शं गवे शं जनाय शमर्वते । शंᳪ राजन्नोषधीभ्यः ॥३॥
१ २ ३ १ २ ३ १ २ ३ २ १ २ ३ १— २र
दवि द्युतत्या रुचा परिष्टोभन्त्या कृपा । सोमाः शुक्रा गवा शिरः ॥४॥
३ २ ३ १ २ ३ १— २र ३क २र १ २ ३ १ २
हिन्वानो हेतृभिर्हित आवाजं वाज्यक्रमीत् । सीदन्तो वनुषो यथा॥५॥
३ १ २ २ १ २ ३ २ ३ १ २ १ २ ३ १ २ ३ २
ऋधक्सोम स्वस्तये सञ्जग्मानो दिवाकवे । पवस्व सूर्यो दृशे ॥६॥
१ २ ३ २ ३ १ २ १२ ३ १ २ ३ १ २
पवमानस्य ते कवे वाजिन्त्सर्गा असृक्षत । अर्वन्तो न श्रवस्यवः॥७॥
२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ १ २ ३ १ २
अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये । अवावशन्त धीतयः॥८॥
१ २ ३ २उ ३ २ ३ २ ३ २ ३ १ २ १ २ ३ २ ३ २ ३ २
अच्छा समुद्रमिन्दवो स्तं गावो न धेनवः । अग्मं नृतस्य योनिमा॥९॥
२ ३ २ ३ १ २ ३ १ २ ३ १— २र १ ३ २ ३ १ २
तरत्समन्दी धावति धारा सुतस्यान्धसः । तरत्समन्दी धावति॥१०॥
३ १ २ ३ १ २ ३ १ २ ३ १ २ २ ३ २
उस्रा वेद वसूनां मर्तस्य देव्यवसः । तरत्स० ॥११॥
३ १ २ ३ २ ३ २ ३ १ २ २ ३ २
ध्वस्रयोः पुरुषं त्योरा सहस्राणि दद्महे । तरत्स० ॥१२॥
१— २र ३ २ ३ १ २ ३ १ २ ३ १ २ २ ३ २
आययोस्त्रिᳪशतं तना सहस्राणि च दद्महे । तरत्स० ति ॥१३॥

२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
ॐएतोन्विन्द्रᳪ स्तवाम शुद्धᳪ शुद्धेन साम्ना ।
३ २ ३ १ २ ३ २ २ ३ २ ३ १ २
शुद्धैरुक्थैर्वा वृध्वाᳪसᳪ शुद्धैराशीर्वान्ममत्तु ॥१४॥
१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
इन्द्र शुद्धो न आगहि शुद्धः शुद्धाभिरूतिभिः ।
२ ३ ३ १— २र ३ १ २
शुद्धो रयिं निधारय शुद्धो ममद्धि सोम्य ॥१५॥
१ २ ३ १— २र ३ २ ३ १— २र ३ १ २
इन्द्र शुद्धो हि नो रयिᳪ शुद्धो रत्नानि दाशुषे ।
३ २ ३ १ २ ३ १— २र
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजᳪसि पाससि ॥१६॥

१२ ३२उ ३ १ २ ३ १ १ ३२
तमुष्टवामयं गिर इन्द्रमुक्थानि वावृधुः ।
३ १ २ ३ २ ३ १ २
पुरूण्यस्य पौँ स्या सिषासन्तो वनामहे ॥१७॥
१ २ ३ १—२र ३ १— २र २ ३२उ ३ २
नकि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन् । न क्येवं यथा त्वम् ॥१८॥
३ १२ ३ १ २ ३ १— २र ३ १ २ ३ १ २
पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
१ २ ३२उ ३ १ २ ३ २ ३ १—२र ३ १— २र
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्त सन्तदाशत ॥१९॥
१ २ ३ २ ३ १२ ३ २ ३ १ २ ३ १ २ ३क २र
तपोष्पवित्रं विततं दिवस्पदेर्चन्तो अस्य तन्तवो व्यस्थिरन् ।
१२ ३ १ २ ३ १ २ ३२ ३१— २र ३ १२
अवन्त्यस्य पवितारमाशवो दिवः पृष्ठमधिरोहन्ति तेजसा ॥२०॥
१२ ३ २ ३ १ २ ३ २ ३ १ २ ३ १२ ३२
अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु वाजयुः ।
३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमादधुः ॥२१॥

इति वेदोक्तमन्त्रैरभिषेकं कृत्वा समाचारात् सुरास्त्वेति अभिषेकलिङ्गकमन्त्रैः अभिषिञ्चेयुः ।

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥ १ ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विभवाय ते ।
आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥ २ ॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहिताश्चैते दिक्पालाः पान्तु वः सदा ॥ ३ ॥
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ।
बुद्धिर्लज्जा वपुः शान्तिर्माया निद्रा च भावना ॥ ४ ॥
एतास्त्वामभिषिञ्चन्तु पुष्टिः कान्तिः क्षमा तथा ।
आदित्यश्चन्द्रमा भौमो बुधो जीवः सितोऽर्कजः ॥ ५ ॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च पूजिताः ।

देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥ ६ ॥
ऋषयो मुनयो गावो देवमातर एव च ।
देवपत्न्यो ध्रुवा नागा दैत्याश्चाप्सरसां गणाः ॥ ७ ॥
अस्त्राणि सर्वशास्त्राणि राजानो वाहनानि च ।
ओषधानि च रत्नानि कालस्यावयवाश्च ये ॥ ८ ॥
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ।
एतास्त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ ९ ॥
अमृताभिषेकोऽस्तु ॥

इति स्वस्तिवाचनप्रयोगः समाप्तः ।

## अथ कौतुकबन्धः ।

आचार्यो दर्भमयकूर्चे उदकुम्भं निधाय तदुत्तरतः साक्षतं कांसपात्रं निधाय तत्र पञ्चगुणीकौसुम्भरञ्जितं सूत्रं निधाय तत्समीपे प्राङ्मुखं यजमानमुपवेश्य कुशहस्तः कुशोदकेन मन्त्रैः सूत्रमभिषिञ्चेत् । तत्र मन्त्राः—

१ २उ ३क २र १ २ ३१—२र ३ १ २ ३ १ २
पूर्वं गायत्र्या—ॐ भूर्भुवः स्वः । तत्सवितुर्वरेण्यं भर्गो देवस्य
२ ३ १ २ ३ १ २
धीमहि । धियो यो नः प्रचोदयात् ॥ १ ॥

ऋक्—

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ २ ॥

यजुः—

इषेत्वोर्जेत्वा वायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा मावस्तेन ईशत माघशंसो ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि ॥ २ ॥

साम—

२ ३ १ २ ३ १ २ ३ २ ३ १ २ १— २२
अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि
३ १ २
बर्हिषि ॥३॥
२ ३ २ ३ १ २ ३ १ २ ३ १ २ २३ ३ १ २
शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये । शंयोरभिस्रवन्तु नः ॥ ४ ॥
२ ३ १— २२ ३ २ ३ १ २ ३ १ २ ३ १— २२ ३ १ २
आपो हिष्ठा मयो भुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥५॥
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
यो वः शिवतमो रस स्तस्य भाजयते ह नः । उशतीरिव मातरः ॥६॥
२ ३ १ २ ३ २ ३ १ २ ३ १ २ १ २ ३ १ २
तस्मा अरंगमामवो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥७॥
२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
एतोन्विन्द्रꣳ स्तवाम शुद्धꣳ शुद्धेन साम्ना । शुद्धै रुक्थैर्वा
३ १ २ ३ २ ३ १ २
वृध्वाꣳ सꣳ शुद्धैराशीर्वान्ममत्तु ॥ ८ ॥

ऋतं च सत्यं चाभीद्धा त्तपसोऽध्यजायत ।

ततो रात्र्यजायत ततः समुद्रो अर्णवः ॥

समुद्रादर्णवादधि संवत्सरो अजायत ।

अहो रात्राणि विदधद्विश्वस्य मिषतो वशी ॥

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।

दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः ॥ १ ॥
५ र २ ४र ५र ४ ५ १ र २ १ २
अग्नेरा ३ क्षाणो अꣳ हसाः । प्रतिस्म देव रिषा २३ ताः ।
२ १ २ २ १र २ १
तपायिष्ठा २३ यि रा । जरो दा २३ हा ३४३ । ओ २३४५ इ । डा ॥१॥

कृणुष्वपाजꣳ प्रसितिन्न पृथ्वीं याहिराजे वामं वाँ २S इभेन ।
तृष्वीमनुप्रसितिन्द्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैꣳ ॥ १ ॥

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । सभूमिꣳ सर्वतं-
स्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ २ ॥

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो मआवह ॥३॥
यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति ।
दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनः शिवसङ्कल्पमस्तु ॥४॥

एवं सूत्रमभिषिच्य जातवेदस इति मन्त्रेण चन्दनेन सूत्रं विलिप्य—

ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
सनः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥१॥

त्वं यविष्ठ रक्षत नो रक्षितार इति मन्त्राभ्यां यजमानस्य पत्न्याश्च हस्ते बध्नीयात् । तत्र मन्त्रौ—

१ २ ३ २ ३ १ २ ३ १— २र १ २ ३ २ ३ १— २र
त्वं यविष्ठ दाशुषो नॄं ऊः पाहि शृणुही गिरः । रक्षा तोकमुतत्मना॥१॥
२र १ २ र २ र २ र १ २र र र र १ २
ए । रक्षत नो रक्षितारो गोपायत गोपायितारः ।२। ए । रक्षत
र र र र र १ २र र र र ३ १ १ १ १
नो रक्षितारो गोपायत गोपायितारा २३४५ः ॥ २ ॥

ततः कर्मसादगुण्यार्थं दक्षिणां दद्यात् ।

## इति कौतुकबन्धः ।

ततः फलहस्तो यजमान आचार्यादीन् ऋत्विजः प्रार्थयेत् ।
ब्राह्मणाः सन्तु मे शान्ताः पापात्पान्तु समाहिताः ।
देवानाञ्चैव दातारस्त्रातारः सर्वदेहिनाम् ॥ १ ॥
जपयज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः ।
देवानां च पितॄणां च तृप्त्यर्थं याजकाः कृताः ॥ २ ॥
येषां देहे स्थिता देवाः पावयन्ति जगत्त्रयम् ।
रक्षन्तु सततं ते मां जपयज्ञे व्यवस्थिताः ॥ ३ ॥
अमुककर्मणि जपे पूज्याः सन्तु मे नियमान्विताः ।
अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः ।

रुद्रध्यानपरा नित्यं प्रसन्नमनसः सदा ॥ ४ ॥
दुरितौघप्रशमनाः सर्वाभीष्टस्य साधकाः ।
माऽश्लीलभाषिणः सन्तु मा सन्तु परनिन्दकाः ।
ममापि नियमा विप्रा भवन्तु भवतामपि ॥ ५ ॥
एवं द्विजान् सम्प्रार्थ्य फलमग्रे निधाय प्रणमेत् ।

इति कौतुकबन्धप्रयोगः समाप्तः ॥

## अथाधानप्रयोगः ।

तत्रादावन्त्यसमिदाधानकालीनमाधानम् । तत्र पूर्वं वक्ष्यमाणविधिना ब्राह्मणवरणम् । पात्राणां मानपूजने । पात्रप्रदानम् । पात्रस्वीकारः । ब्रह्माऽहतेन वाससा आच्छादितानि पात्राणि समादाय स्मार्त्तकर्मसाधनभूतानीमानि पात्राणि प्रतिगृह्यताम् इति । ततो यजमानः स्मार्तकर्मसाधनभूतानीमानि पात्राणि मया परिगृहीतानि । तत्रेयं स्रुक् एवं व्यपदेशपूर्वकं स्वीकारः । कृतसंस्कारपूर्वकमग्निं संस्थाप्य आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य अस्याग्नेर्गृह्याग्नित्वसिद्ध्ये अन्त्यसमिदाधानमहं करिष्य इति सङ्कल्प्य नित्यवत्समिद्धोमः । ततः समावर्त्तनं कृत्वा वृद्धिश्राद्धपूर्वकं सायमादि होमारम्भः कार्यः । विवाहाऽर्वाग्वाग्दानप्राप्तकन्यामरणे तेनैवाग्निना अन्यामुद्वहेत् । कन्यान्तराप्राप्तौ प्राजापत्यं स्थालीपाकं निरूप्य तदन्ते तमग्निमात्मनि समारोप्य चतुर्थाश्रमी स्यात् । इति अन्त्यसमिद्धोमकालीनाधानप्रयोगः ॥

## अथ पाणिग्रहणकालीनाधानप्रयोगः ॥

तत्र ब्रह्मवरणादि सर्वम् । प्रतिगृहीतायामस्यां भार्यात्वसिद्ध्ये गृह्याग्नित्वसिद्ध्ये च विवाहाङ्गहोममहं करिष्य इति सङ्कल्पः । ततो वैवाहिकं कर्म पाणिग्रहणजपान्तम् । स्वकाले श्राद्धपूर्वकं होमारम्भः । अत्र आधानद्वयेऽपि ब्राह्मणराजन्यवैश्याम्बरीषाणामन्यतमस्य गृहादग्निमानीयाधानं कर्म कर्त्तव्यम् । इति विवाहकालीनाधानप्रयोगः ॥

## अथ पितृमरणकालीनाधानप्रयोगः ॥

तच्च एकादशेऽन्हि एकादशाहश्राद्धात्पूर्वं भवति । तत्र पूर्वं ब्रह्मवरणादि । उभयोरहतवस्त्रधारणं अग्न्याहरणं स्थापनं आज्यतन्त्रेणासादनम् । मम सपत्नीकस्य आत्मसंस्कारार्थं स्मार्त्ताग्न्याधानसिद्धये पूर्णाहुतिहोममहं करिष्य इति सङ्कल्प्य ततो वक्ष्यमाणविधिना पूर्णाहुतिहोमान्ते ब्रह्मणे गोदानम् । परिहिताहतवस्त्रदानञ्च । तत ऐकादशाहिकं कर्म । एकादशाहे दर्शश्चेत्सपिण्डीकरणं तद्दिने एव कृत्वा पिण्डपितृयज्ञः कार्यः । नात्र वृद्धिश्राद्धम् । ततः स्वकाले होमारम्भः । इति पितृमरणकालीनाधानप्रयोगः ॥

## अथ प्रायश्चित्तप्रयोगः ॥

ततः प्रायश्चित्तग्रहणदिवसात्पूर्वेऽहनि चतुरस्त्रीनेकं वाऽध्यात्मविदं पर्षत्त्वेनोपवेश्याभुञ्जानः सचैलं स्नात्वा क्लिन्नवासा पर्षदं प्रदक्षिणीकृत्य साष्टाङ्गं प्रणमेत् । ततस्तैः—

किं ते कार्यं वदास्माभिः किं वा मृगयसे द्विज ।
तत्त्वतो ब्रूहि तत्सर्वं सत्यं हि गतिरात्मनः ॥ १ ॥
अस्माकं चैव सर्वेषां सत्यमेव परं बलम् ।
यदि चेद्वक्षसे सत्यं नियतं प्राप्स्यसे शुभम् ॥ २ ॥
यथागतोऽस्यसत्येन न त्वं शुध्यसि कर्हिचित् ।
उत्तिष्ठ भो हि किं कार्यं विश्रब्धं ब्रूहि मानव ॥ ३ ॥

इत्यादि पृष्टे पर्षदग्रे गोवृषयोः प्रत्येकं प्रत्याम्नायत्वेन यथाशक्ति स्वर्णरूप्ययोर्निष्कं तदर्द्धं तदर्द्धं वा निधाय, तदशक्तौ गोर्द्वात्रिंशत्ताम्रपणान् वृषस्य च षण्णवतिपणान्निधाय सङ्कल्पं कुर्यात् । प्रायश्चित्ताङ्गमिदं गोमिथुननिष्क्रयद्रव्यं सभ्येभ्योऽहं सम्प्रददे इति । अत्र "वृषे षट्कार्षापणका" इति वृषमूल्योक्तेस्तस्य षण्णवतिपणा भवन्ति । षोडशाभिः पणैः कार्षापणः। एवं सङ्कल्पा-

नन्तरं 'अमुकस्य मे जन्मप्रभृत्यद्यदिनं यावत् ज्ञानाज्ञान-कामाकामसकृदसकृत्कायिक-वाचिक-मानसिक-सांसर्गिक-स्पृष्टास्पृष्ट-भुक्ताभुक्त-पीतापीत-सकलपातकातिपातकोपपातक—लघुपातक सङ्करीकरण-मलिनीकरणापात्रीकरण-जातिभ्रंशकर-प्रकीर्णपातकादीनां निरासार्थमनुग्रहं कृत्वा प्रायश्चित्तमुपदिशन्तु भवन्तः । तत्र प्रार्थना ।

सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः ।
मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः ॥ १ ॥
मया कृतं महाघोरं ज्ञातमज्ञातकिल्बिषम् ।
प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छथ ।
पूज्यैः कृतपवित्रोऽहं भवेयं द्विजसत्तमैः ॥ २ ॥

एवं प्रार्थयित्वा 'मामनुगृण्हन्तु भवन्त' इत्युक्त्वा प्रणमेत् ।

अस्मिन्काले प्रायश्चित्ती चन्दनपुष्पादिभिः पुस्तकपूजां सभ्यानुवादकपूजाञ्च विधाय निबन्धपूजाङ्गत्वेन किञ्चिद्द्रव्यं निधाय कृताञ्जलिपुटोननस्तिष्ठेत् । अनुवादकाय भृतिरूपां दक्षिणां दद्यात् ।

ततस्ते तमुत्सार्य तस्य द्रव्यादिशक्त्या उत्तममध्यमादि पक्षांश्च विचार्यास्मिन्पक्षे अयं शक्त इति निश्चित्य पुस्तक वाचनपूर्वकं कथयेयुः । अनुवादकस्याग्रे प्रत्याम्नायाश्च यथाशक्त्या कथयेयुः । ततोऽनुवादकः 'पूर्वोक्तविशेषणविशिष्टानां महापातकव्यतिरिक्तानां क्षयोऽनेन पर्षदुपदिष्टेन प्रायश्चित्तेनामुकप्रत्याम्नायद्वारा प्राच्योदीच्याङ्गसहितेनाचीर्णेन तव शुद्धिर्भविष्यति तेन त्वं कृतार्थो भविष्यसि' इत्युपदिशेत् । एवं त्रिः । ततो निवेदितं प्रायश्चित्तं भवदनुग्रह इत्यङ्गीकृत्य सन्मानपूर्वकं प्रणम्य पर्षदं विसर्जयेत् । अयं विधिस्त्वाधानाङ्गप्रायश्चित्तादन्यत्र ज्ञेयः ।

आधानाङ्गे तु पर्षदं प्रदक्षिणीकृत्य उपायनं दत्त्वा वदेत् । मम आवसथ्याधानस्य मुख्यकालातिक्रान्तैतावद्वर्षनिरग्नित्वजनितदु-

रितक्षयाय प्रायश्चित्तमुपादिशन्तु भवन्त इति । ततस्ते अतिक्रान्त वत्सरसंख्यया प्राजापत्यानि मुख्यविधिना, तदशक्तौ पूर्वोक्तानां प्रत्याम्नायानां मध्येऽन्यतमं शक्त्यनुसारतो निश्चित्य कथयेयुः । अस्मिन्नहनि शक्तौपवासः कार्यः । इतरेण हविष्याशनम् । ततः कस्यांश्चिद्रिक्तायां तिथौ प्रायश्चित्तोपदेशादपरेद्युर्वा अशक्तमग्ने ग्रामाद्बहिस्तडागादौ पुण्यालये वा गत्वा प्रायश्चित्तसङ्कल्पं कुर्यात् । दिवसस्यान्ते मुहूर्त्तत्रयं सायङ्कालः । तीर्थादौ गत्वा कुशपाणिः कृताचमनो देशकालौ सङ्कीर्त्य अमुकशर्मणो मम जन्मप्रभृत्याद्यभिधाय पातकानां निरासार्थं देहशुद्ध्यर्थं श्रीपरमेश्वरप्रीतये वा अमुकप्रायश्चित्तममुकप्रत्याम्नायेन प्राच्योदीच्याङ्गसहितं यथाशक्त्यहं करिष्य इति सङ्कल्पं कुर्यादन्यप्रायश्चित्ते । आधानाङ्गे तु 'मम आवसथ्याधानस्य मुख्यकालातिक्रान्तैतावद्वर्षनिरग्नित्वजनितदुरितक्षयाय एतावन्ति प्राजापत्याम्नायत्वेन प्रतिप्राजापत्यमेकैकां गां ब्राह्मणेभ्योऽहं सम्प्रदास्ये'। ब्राह्मणभोजनपक्षे 'प्राजापत्यप्रत्याम्नायत्वेन एतावतो ब्राह्मणान् भोजयिष्ये' । प्राजापत्यप्रत्याम्नायत्वेन गायत्र्या एतावन्त्ययुतानि जपिष्यामि । एवमेतावन्ति तिलाहुतिसहस्राणि होष्यामि । एवमन्येष्वपि प्रत्याम्नायेषु ऊहः । एवं सङ्कल्पानभिधाय प्राच्याङ्गानि करिष्य इति सङ्कल्प्य वपनं कारयेत् । तत्र अभ्युदयार्थेषु नैत्र वपनमिति विज्ञानेश्वरः । वपनपक्षे वपनमन्त्रः—

यानि कानि च पापानि ब्रह्महत्यासमानि च ।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान्वपाम्यहम् ॥

इति मन्त्रेण दक्षिणकर्णादारभ्य उदक्संस्थं शिखाकक्षोपस्थ वर्जं केशश्मश्रुनखरोमाणि वापयित्वा, शुद्ध्यर्थं स्नात्वा, शास्त्रविहितं द्वादशाङ्गुलमष्टाङ्गुलं वा दन्तकाष्ठं गृहीत्वा प्राङ्मुख उपविश्य—

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।

ब्रह्म प्रज्ञां च मेधां च त्वं नो धेहि वनस्पते ॥

इति मन्त्रेण दन्तकाष्ठस्याग्रभागं किञ्चिद्भक्षयित्वा तेनैव प्रदेशेन दन्तान्संशोध्य तावत्प्रमाणकाष्ठान्तरेण जिह्वामुल्लिख्य प्रक्षाल्य काष्ठद्वयं किञ्चिद्भग्नं कृत्वा विसृज्याचम्य भस्मादिदश स्नानानि कुर्यात् । तत्र भस्मस्नानमन्त्रः—

ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् । इति मन्त्रं पठित्वा मस्तकादारभ्याङ्घ्रिपर्यन्तं नाभेरधोभागे वामहस्तेन, नाभेरूर्द्ध्वं दक्षिणहस्तेन लापयित्वा प्रणवेन सर्वाङ्गे लापयेत् । एवं भस्मना स्नात्वा गोमयेन स्नायात्-

१ १ २ ३क २ ३ २ ३ १ २
ॐ गावश्चिद्घासमन्यवः सजातेन मरुतः सबन्धवः ।
३ १ २ ३ १ २ ३ २
रिहते ककुभो मिथः ॥

इति गोमयेन स्नानम् । अथ मृत्तिकया । सहस्रशीर्षेति मृत्तिकामादाय—

३ १ २ ३ १ २ ३ २ ३ १ २
ॐ सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् ।
१— २र ३ १ २ ३ १ २ ३ २
स भूमिꣳ सर्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

ॐ अमोसि प्राण तदृतं ब्रवीम्यमाह्यासि सर्वमनुप्रविष्टः ।
स मे जराꣳ रोगमपमृज्य शरीरादपाम एधि मामृथान इन्द्र ॥२॥

एतावत्यशक्तौ अश्वक्रान्तेति मन्त्रेण सर्वाङ्गोद्वर्तनम् ।

ॐ अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।
मृत्तिके हर मे पापं यन्मया पूर्वसञ्चितम् ॥ १ ॥

ततस्तीर्थप्रार्थना—

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिङ्कुरु इति ।

तत आपोहिष्ठेति तृचेन मार्जनं कृत्वा—

२ ३१— २र ३२३१२ ३१२ ३१— २र ३१२

ॐ आपोहिष्ठा मयोभुवस्तान ऊर्जेदधातन। महेरणाय चक्षसे ॥ १ ॥

१ २ ३ १२३२३ १ २ ३१२ ३१ २ ३१२

योवः शिवतमोरस स्तस्य भाजयते हनः। उशति रिव मातरः ॥ २ ॥

२ ३ १२ ३ २ २१२३ १ २ १२३१२

तस्मा अरङ्ग मा मवो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः ॥३॥

ऋतञ्चेति ऋचञ्जपन्नघमर्षणं कुर्यात्।

ॐ ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत।

ततो रात्र्यजायत ततः समुद्रो अर्णवः।

समुद्रादर्णवादधि संवत्सरो अजायत।

अहोरात्राणि विदधद्विश्वस्य मिषतो वशी।

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।

दिवञ्च पृथिवीञ्चान्तरिक्ष मथो स्वः ॥

ततः प्रवाहाभिमुखस्त्रिवारं मज्जेत्। तत आपोहिष्ठेति तृचेन शुद्धोदकस्नानम्। ततः पञ्चगव्यस्नानानि। गायत्र्या गोमूत्रेण—

१२३१— २र ३ १२ ३१२ २ ३ १ २

ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः

३१२

प्रचोदयात् ॥

गावश्चिद्धास इति गोमयेन—

१ २ ३क २र ३२३ १२ ३१२

ॐ गावश्चिद्धासमन्यवः सजात्येन मरुतः सबन्धवः। रिहते

३१ २३२

ककुभो मिथः ॥

चक्रं यदस्येति गोक्षीरेण—

३१— २र ३ १— २र ३१— २र३ १— २र

ॐ चक्रं यदस्याप्स्वानिषत्त मुतोतदस्मै मध्विच्चच्छद्यात्।

३ १— २र ३ २उ३ २३ १— २र ३ १२

पृथिव्यामतिषितं यदुधः पयो गोष्वदधा ओषधीषु ॥

दधिक्राव्ण इति दध्ना—

३ १ २ ३ १— २र ३ १ २

ॐ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।

३ १ २ ३ १ २ ३ २ ३ १ २

सुरभिनो मुखाकरत्प्रन आयूꣳषि तारिषत् ॥

घृतवती इति घृतेन ।

३ १२ ३ १ २ ३ २ ३ २ ३ १ २ ३१२ ३ १२

ॐ घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा ।

१ २ ३ १— २र ३ १२३ १ २ ३ २ ३ १ २

द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरि रेतसा ॥

देवस्य त्वेति कुशोदकेन स्नानम् । देवस्य त्वेति मन्त्रे अभिषिञ्चामीत्यन्ते प्रयोज्यम् ।

ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामभिषिञ्चामि ।

स्त्रीशूद्राणाममन्त्रकाणि स्नानानि । एवं दश स्नानानि विधाय स्नानाङ्गतर्पणं कृत्वा, धौते वाससी परिधाय, द्विराचम्य सङ्कल्पश्राद्धविधिना वैष्णवश्राद्धं कृत्वा, विष्णूद्देशेन त्रिभ्योऽधिकान्युग्मान्ब्राह्मणान्पूजापूर्वकं भोजयेत् । आमान्नं वा दद्यात् । ततः—

गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।

यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥

इति मन्त्रेण गोदानं प्रत्यक्षं निष्क्रयद्वारा वा कार्यम् । ततोऽग्निस्थापनपूर्वकं क्षिप्रहोमन्यायेनाष्टोत्तरशतमष्टाविंशतिर्वा तिलाहुतिं गायत्र्या जुहुयात् । ततः पञ्चगव्यं कार्यम् । सुवर्णादिपात्रे ताम्राया गोमूत्रं त्रिपलं गायत्र्या प्रणवेन वाऽऽदाय । गोमूत्रार्द्धप्रमाणं श्वेताया गोमयं गावश्चिदिति मन्त्रेणादाय—

१ २

ॐ गावश्चिद्धास मन्यवः० ( पृष्ठ ५६, पङ्क्ति १७ )

कपिलाया पयः सप्तपलमाप्यायस्वेति मन्त्रेणादाय ।

ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवावाजस्य सङ्गथे ॥

नीलायाः सप्तपलं दधि दधिक्राव्ण इति मन्त्रेणादाय ।

३ १ २ ३ १— २२ ३ १ २
ॐ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
३ १२ ३ १ २ ३ २३ १ २
सुरभिनो मुखाकरत्प्रन आयूꣳषि तारिषत् ॥

कृष्णाया घृतमेकपलं घृतवती ( पृ० ५७, पं० ) त्यादाय ।

एकपलं कुशोदकमापोहिष्ठेत्यादाय ( पृ० ५६, पं० २ ) ।

प्रणवेनालोड्य प्रणवेनैव यज्ञियकाष्ठेन निर्मथ्य, प्रणवेनाभिमन्त्र्य सप्तपत्रैर्हरितकुशैर्दशाहुतीर्जुहुयादेभिर्मन्त्रैः । स्योना पृथिविनो भवेति प्रथमा ।

ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छानः शर्म सप्रथो देवान्मा भयादिति स्वाहा । इदं पृथिव्यै न मम ।

इदं विष्णुरिति द्वितीया ।
३ २उ ३ १ २ ३ १— २र ३ २
ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
१ २ ३ २
समूढमस्य पाꣳसुले स्वाहा । इदं विष्णवे न मम ॥

मानस्तोक इति तृतीया ।

ॐ मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः ।

वीरान्मा नो रुद्र भामिनो वधीर्हविष्मन्तः सदमित्वा हवामहे स्वाहा । इदं रुद्राय न मम ॥

ब्रह्म जज्ञानमिति चतुर्थी ।
१ २ ३ १ २३१ ३२ ३ १ २ ३ २ ३ १ २ ३ १ २
ॐ ब्रह्मजज्ञानं प्रथमं पुरस्ता द्विसीमतः सुरुचो वेन आवः ।
२ ३क २र ३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
सबुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा ॥

इदं ब्रह्मणे० । ॐ अग्नये स्वाहा । इदमग्नये० । ॐ सोमाय स्वाहा । इदं सोमाय० । गायत्र्या हुत्वा , इदं सूर्याय० । प्रणवेन हुत्वा, इदं प्रजापतये० । ॐ भूर्भुवःस्वः स्वाहा । इदं प्रजापतये० । अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते० ।

ततः समिद्धोमानुपर्युक्षणादि तन्त्रं समाप्य, व्रतग्रहणं करिष्य इति द्विजान्पृष्ट्वा, तैः कुरुष्वेत्यनुज्ञातः प्रणवेन सर्वं पिबेत् । एतच्च ग्रामाद्बहिर्नद्यादेस्तीरेष्वानक्षत्रदर्शने कार्यम् । अशक्तौ च गोमूत्रादिकं स्वल्पं ग्राह्यं, सर्वस्य पेयत्वात् । अस्मिन्दिने उपवासः शक्तस्य, अशक्तस्य हविष्याशनम् । एवं पञ्चगव्यं प्राश्य, गृहे आगत्य, विष्णुं स्मरन् प्रायश्चित्तं सङ्कल्पानुसारेण प्रत्याम्नायद्वारा वा कृत्वा उत्तराङ्गानि कुर्यात् । पूर्ववद्व्याहृतिभिराज्यं हुत्वा, प्रायश्चित्ताङ्गं वैष्णवं श्राद्धं पूर्ववत् कृत्वा, अन्ते गोदानं पूर्ववच्चरेत् । अस्य मलवाक्यानि मिताक्षरा महार्णव–नारायणभट्ट्यादिषु द्रष्टव्यानि । इति प्रायश्चित्तग्रहणविधिः ॥

एवं कृतप्रायश्चित्तो हौम्यं दद्यात् ॥

आचम्य प्राणानायम्य । देशकालौ सङ्कीर्त्य "मम आवसथ्याधानमुख्यकालातिक्रान्तैतावद्दिनसम्बन्धि सायम्प्रातर्होमद्रव्यं पयो वा दधि वा एतावत्परिमितान्यवान्वा तण्डुलान्वा तन्निष्क्रयद्रव्यं वा ब्राह्मणेभ्योऽहं सम्प्रदास्ये" इति सङ्कल्पं कुर्यात् । हौम्यं दद्यादिति वचनादितरपक्षाद्यादिकर्म-द्रव्यदान-निवृत्तिः। अन्ये तु हौम्यं दद्यादिति वचनात् पक्षादेरपि जुहोतित्वेन होमरूपत्वात् द्रव्यदानमपीच्छन्ति । यजमानोऽपि तदकरणजन्यदोषक्षयकामी तदा तदपि दद्यात् । तत्रैवं प्रयोगः—

देशकालौ सङ्कीर्त्य सकुशोदकमादाय "मम सपत्नीकस्यात्मसंस्कारार्थं स्मार्ताग्न्याधानाधिकारासिद्धये स्वाधिकारादिमारभ्य अहुतानां सायम्प्रातर्होम द्वितीय–वैश्वदेव पिण्डपितृयज्ञ दर्शपूर्णमास श्रवणाकर्मोपाकर्म नवयज्ञाश्वयुज्याग्रहायणीकर्मान्वष्टकानां अकरणजन्यदोषक्षयाय तत्तत्कर्मोक्तहोमद्रव्यपर्याप्तयवव्रीह्याज्यानि तन्निष्क्रयद्रव्यं वा अग्न्यादिदेवताप्रीत्यै कस्मैचिद्ब्राह्मणाय बहुभ्यो वा अहं दास्ये" । तेन भगवान्सर्वदेवमयो यज्ञपु-

रूपः प्रीयताम् । अनेन मम होमाद्यकरणदोषनिवृत्तिरस्तु । इति होमीयद्रव्यदानम् ।

## अथ आधानविधिप्रयोगः ॥

तत्र पूर्वं पौर्णमासवद्वपनं कारयित्वा, यज्ञियदारुमयमासन-मुदगग्रं सकुशं संन्यस्य, प्रक्षालितपाणिपादस्तस्मिन्नासने उपवि-श्य, सोपग्रह आचम्य, गुर्वादीन्नत्वा, स्वस्त्युक्त्वा, देशकालौ सङ्की-र्त्य 'ममात्मसंस्कारार्थं स्मार्ताग्न्याधानमहं करिष्ये' इति सङ्कल्पं कृत्वा, मातृपूजाभ्युदयिके कुर्यात् । तत्रैवं प्रयोगः—देश-कालौ स्मृत्वा 'स्मार्ताग्न्याधानाङ्गं मातॄणां पूजनमहं करिष्ये' इति सङ्कल्प्य, मातृपूजां कृत्वा, वैश्वदेवं विधाय, आयुःशान्तिं पठि-त्वा नान्दीश्राद्धं कुर्यात् । तत्र 'स्मार्ताग्न्याधानाङ्गं नान्दीश्राद्धमहं करिष्ये" इति सङ्कल्प्य यथाविधिना नान्दीश्राद्धं कुर्यात् ।

ततोऽग्न्यागारे अरत्निमात्रं समचतुरस्रं पूर्वनतमुत्तरनतं समं वा कुण्डं निःपादयेत् । ततः पूर्वोक्तासने प्रागग्रे उदङ्मुखं ब्रह्माणमुपवेश्य स्वयं प्राङ्मुख उपविश्य तं वृणुयात् । अक्ष-तानादाय ब्रह्मणो दक्षिणं जान्वालभ्य "अमुकगोत्रं अमुकशर्माणं स्मार्ताग्निमहमाधास्ये तत्र कृताऽकृतावेक्षणकत्वेन एभिश्चन्दना-दिभिर्ब्रह्मत्वेन त्वामहं वृणे" । वृतोऽस्मीति तेन वाच्यम् । अत्र केचिद्ब्रह्माणं मधुपर्केणार्चयन्ति ऋत्विक्त्वाविशेषात् । नोचेत्पा-द्यादिभिरुपचारैरभ्यर्च्य, समाचारात् वरणश्राद्धं विधाय, वस्त्रादि-भिस्तमर्चयेत् ।

अथ ब्रह्मा परिधानोत्तरीयवासोयुगमादाय कुङ्कु-मेनाभ्यर्च्य, कुङ्कुमतिलकपूर्वकं यजमानाय दद्यात् । एवमेव वासोयुगं पत्न्यै देयम् । ततो यजमानोऽहतवासः परिधायोत्तरीयं धृत्वा द्विराचामेत् ।

ततोऽग्नेराहरणम् । तत्र यजमानः सपत्नीकः कुङ्कु-माक्षतफलशरावद्वयं कांस्यादिसुपात्रे कृत्वा शान्तिकमन्त्रघोष

मङ्गलगीतवाद्यजनितोत्साहो वैश्यकुलाम्बरीषब्राह्मणराजन्यानाम-न्यतमस्य गृहे गत्वा, श्रीफलाद्यग्रतो मुक्त्वा, अग्निं प्रणम्य, ततोऽग्निमादाय, शरावे कृत्वाऽन्येनापिधाय गृहीत्वा, गृहमागत्य, कुण्डाग्रतो निधाय, वक्ष्यमाणविधिना पञ्चभूसंस्कारान्विधाय तमग्निं स्थापयेत् । ततस्तस्मिन्नग्नौ पक्त्वा पौर्णमासवदुव्रत्याशनं कृत्वाऽस्तमयसमीपे अरणिप्रदानं कार्यम् ।

तत्र यजमान आचम्य अग्न्यायतनस्य पश्चात्प्राङ्मुख उपविशेत्, दक्षिणतः पत्नी च । उपविश्यारण्योः पात्राणां मानं कुर्यात् । पूर्वाग्रमरणिद्वयं निधाय प्रथम-द्वितीय—तृतीय—क्रमेण चतुर्विंशतिरङ्गुलानि मिमीयात् । विस्तारे षट् । चत्वार उच्छ्राये । एवमधरां मित्वैवमेवोत्तरां मिमीयात् । चात्रोवीलिकयुग्मं द्वादशाङ्गुलम् । नेत्रं व्याममप्रमाणम् । बाहुमात्रा स्रुक् । द्विवितस्तिः स्रुवः । द्वादशाङ्गुलः शङ्कुः उपवेषश्च । प्रादेशप्रमाणं मेक्षणं दर्वी च । मुसलोलूखलयोः इच्छाप्रमाणत्वान्न मानं शूर्पस्य च । प्रादेशमितश्चमसः । एवं मानं विधायारण्योः पात्राणाञ्च पूजनम् । अत्र मानपूजने आचारात् कर्त्तव्ये । देशकालौ स्मृत्वा 'स्मार्तकर्मसाधनभूतस्याग्नेर्योनिरूपयोररण्योः पूजनमहं करिष्ये' इति सङ्कल्प्य, अरण्योर्निहित इत्यरण्योस्तूष्णीं पात्राणाञ्च पूजनम् । चन्दनपुष्पादिभिरभ्यर्च्य अर्चनपरिपूर्णतां प्रार्थयेत् ।

अरण्योरिति साम्नो भरद्वाजस्त्रिष्टुबग्निररणिपूजने विनि-

५ २ र २ ३र५र ३ ४ ३र

योगः । ॐ अरण्योः । निहितोजा २४२ तवेदाः । गर्भ [illegible]त्सु-

४ ५र ३ ५ २ १र र र ७ २ ^

भृतोग । भिणा२३४ यिभीः । दिवेदिव ईड्योजागृवा २३ ह्वीः ।

३ ५ ३ ५ ४र ४ ५र

हा २३४ वी । ष्मा२३४ह्वीः । मनुष्ये ५ भिरग्निः । एहिया ६

५ ४

हा । हो ६ ई । डा ॥ १ ॥

अथ ब्रह्माऽहतेन वाससा अरणीं आच्छाद्य, स्मार्तकर्मसाधन

भूतस्याग्नेर्योनिरूपे इमे अरणी युवाभ्यां परिगृह्येतामित्युक्त्वा उत्तरां यजमानायाधरां पत्न्यै प्रयच्छेत् । ततो यजमानः स्मार्तकर्मसाधनभूतस्याग्नेर्योनिरूपे इमे अरणी आवाभ्यां परिगृहीते तत्रेयमधरा, इयमुत्तरा, इमानि स्मार्तकर्मोपयोगीनि पात्राणि परिगृहीतानि । तत्रायं चत्रः । इयमोवीली । इदं नेत्रम् । इयं स्रुक् । अयं स्रुवः । अयमुपवेषः । अयमूलूखलः । इदं मुसलम् । इदं मेक्षणम् । इयं दर्वी । अयं शङ्कुः । अयं चमसः । इदं शूर्पम् । एवं पात्राणि स्वीकृत्य पुण्याहवाचनं कुर्यात् आशिषश्च । ततो ब्रह्मणो भोजनम् । रात्रौ आहृतस्याग्नेर्धारणम् । दम्पत्योर्निशि जागरणं वा । व्यतीतायां रात्रौ तस्याग्नेरुपशमनम् ।

उषःकाले उत्थाय नद्यादौ प्रातःस्नानादि विधाय, जलाशयाद्वस्त्रादिभिराच्छादिता आप आहृत्य, ताभिरद्भिर्मृद्गोमयामिश्रिताभिरग्न्यायतनमुपलिप्य, प्रक्षालितपाणिपाद आचान्तः कुण्डस्य पश्चादुपविशति यजमानः पत्नी च । तावुभौ पूर्णाहुत्यनन्तरं करिष्यमाणहोमान्तं यावत्कृतमौनावुपविशेयाताम् ।

ततोऽग्निमन्थनम् । तत्र उदगग्रामधरारणिं निधाय अवयवकल्पनां कुर्यात् । यथा अरण्यग्रभागादारभ्य मस्तक-नयन-श्रवण-मुख-ग्रीवाः । पञ्चैतान्येकैकाङ्गुष्ठमानानि । व्यङ्गुष्ठं वक्षः । हृदयमेकाङ्गुष्ठम् । अङ्गुष्ठमुदरम् । एकाङ्गुष्ठा कटिः । व्यङ्गुष्ठा बस्तिः । व्यङ्गुष्ठं गुह्यम् । उरू चतुरङ्गुष्ठमिते । अङ्गुष्ठमिते जङ्घे । पादावेकाङ्गुष्ठौ । एवं अवयवकल्पनां कृत्वा, मूलादष्टमेऽङ्गुष्ठे देवयोनेश्चिन्हं कृत्वा, तत्पूर्वस्यामुत्तरारणिमुत्तराग्रां संन्यस्य, उत्तराग्रस्थापिताया एवोत्तरारणेरीशानात्प्रमन्थमादाय, तस्याग्रं चत्रबुध्नगर्ते दृढं निवेश्य, प्रमन्थस्य बुध्नमधरारणेर्देवयोन्यां स्थापयेत् । ततश्चत्राग्रनिवेशितकीलोपरि उदगग्रामोवीलीं संन्यस्य, प्राङ्मुखोपविष्टो यजमानः सुनिश्चलं मन्थनयन्त्रं धारयेत् । ततः पत्नी नेत्रं समादाय, चत्रं प्रदक्षिणं त्रिरावेष्ट्य तथा

मन्थेद्यथा प्राच्यामग्नेर्निःसरणं भवति । अनेकपत्नीके यजमाने सर्वाः पत्न्यो मन्थनयन्त्रमन्वारभेयुः । पत्नीयजमानयोर्मन्थनधारणासमर्थयोः समीपस्थोऽन्यो मन्थेद्धारयेच्च । जातेऽग्नौ वरदानम् । "जातस्याग्नेः समृद्ध्यर्थं वरो दक्षिणा ब्रह्मन्तुभ्यमहं सम्प्रददे" इति सङ्कल्पः ।

अथ उद्भूतमग्निं शुष्कगोमयचूर्णयुक्ते नवे शरावे कृत्वा, उक्तलक्षणे कुण्डे पञ्चभूसंस्कारान्कुर्यात् । ते यथा—त्रीन्कुशानादाय कुण्डस्य पश्चिमभागादारभ्य प्राञ्चं त्रिवारं तृण काष्ठ-शकल-पांसूनामपसारणं कुर्वन्समृज्यात् । ततो गोमयेन कुण्डं पश्चिमत आरभ्य प्रागपवर्गं त्रिवारमुपलिम्पेत् । ततो वामहस्तं रेखाकरणमारभ्याग्निनिधानपर्यन्तं कुण्डे स्थण्डिले वा निधाय, दक्षिणहस्तेन कुशमादाय, तन्मूलेन कुण्डस्य स्थण्डिलस्य वा सार्द्धाङ्गुष्ठमितां भूमिं दक्षिणतस्त्यक्त्वा, मध्यदेशाद्द्वादशाङ्गुलमितां प्रागतां पार्थिवीं ध्यातशुक्लवर्णां रेखामुल्लिख्य, तन्मूललग्नामुदग्दिशिगतामेकविंशत्यङ्गुलां आग्नेयीं ध्यातरक्तवर्णां रेखामुल्लिख्य, पार्थिवीरेखाया उत्तरस्यां सप्ताङ्गुलमन्तरंत्यक्त्वा, आग्नेयीसंलग्नां प्रादेशमितां पूर्वगामिनीं प्राजापत्यां ध्यातकृष्णवर्णां रेखामुल्लिखेत्ततस्तदुत्तरस्यां तावदन्तरं त्यक्त्वा आग्नेयीसंलग्नां प्रादेशमितां पूर्वगामिनीं ध्यातनीलवर्णामैन्द्रीं विलिख्य, तदुत्तरस्यां तावदन्तरं त्यक्त्वा आग्नेयीसंलग्नां दशाङ्गुलां द्वादशाङ्गुलां वा रेखां प्रागतां सौमीं ध्यातपीतवर्णां उल्लिख्योल्लिखनक्रमेण प्राञ्चमुदञ्चमुत्खाताश्च मृदमनामिकाङ्गुष्ठाभ्यामुद्धृत्य, कुण्डादैशान्यां दिशि अरत्निमात्रे प्रदेशे निःक्षिपेत् । ततः शुद्धोदकेनाधोमुखहस्तेन स्वाभिमुखन्ताः सहैवाभ्युक्षेत् ।

ततोऽस्फुटित-प्रक्षालित-कांस्यपात्रेण तदभावे नूतनास्फुटितमृन्मयशरावेणाविच्छिन्नमकृशमनल्पमग्निं दक्षिणेनादाय, ॐ भूर्भुवः स्वरितिमन्त्रान्ते स्वाभिमुखं तमग्निं "भवनामान-

मग्निं प्रतिष्ठापयामीति" कुण्डे स्थापयेत् । एषः पञ्चभूसंस्कारो यत्र यत्राग्नेः स्थापनं तत्र तत्र भवति । तत आधानासिद्ध्यर्थं सतन्त्रां पूर्णाहुतिं जुहुयात् । तत्र पदार्थं क्रमः—आचम्य प्राणमायम्य देशकालौ सङ्कीर्त्य "ममात्मसंस्कारार्थं स्मार्त्ताग्न्याधानासिद्ध्यर्थं पूर्णाहुतिहोमं करिष्ये" इति सङ्कल्प्य अग्नौ तूष्णीं समिधं हुत्वा, यथाविधिना न्यञ्चकर्मपरिसमूहने कृत्वा ब्रह्माणमुपवेशयेत् । अत्र मुख्यकार्यत्वाच्छत्रादीनामभावः ।

ततः पात्रासादनम् । शुद्धोदकपूर्णं जलपात्रम् । मुष्टित्रयं बर्हिः । प्रादेशद्वयमितो विंशतिकाष्ठक इध्मः । घृतम् । आज्यस्थाली । समिद्द्वयम् । सम्मार्गकुशाः । स्रुक् स्रुवौ । उष्णोदकम् । गोनिष्क्रयद्रव्यम् । एतान्यासाद्याभिमन्त्रितोदकेन पात्राणि-प्रोक्ष्य, यथाविधिनाग्नेः परिस्तरणं कुर्यात् । ततश्चमसं शुद्धोदकेनापूर्य, अग्नेरुत्तरतः स्थाप्य, आसादितमिध्म प्रोक्ष्याग्नौ मनसा प्रजापतये स्वाहेतिहुत्वा आज्यं संस्कुर्यात् । तत्संस्कृतमाज्यं आत्माग्न्योरन्तरालदेशे संस्थाप्य, अदितेऽनुमन्यस्वेत्यादिमन्त्रैरग्निं प्रासिञ्च्य—

ॐ देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिम्भगाय ।
दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु ॥

इति पर्युक्ष्य प्रपदवैरूपाक्षं जपेत् । तपश्चेति वसिष्ठ ऋषिः यजुः कालाग्निरुद्रो देवता जपे विनियोगः । तपश्चेत्यारभ्य भूर्भुवःस्वरोमिति यावत् श्वासं नियमेत् ।

ॐ तपश्च तेजश्च श्रद्धा ह्रीश्च सत्यश्चाक्रोधश्च त्यागश्च धृतिश्च धर्मश्च सत्यश्च वाक्च मनश्चात्मा च ब्रह्म च तानि प्रपद्ये तानि मामवन्तु भूर्भुवः स्वरोम् महान्तमात्मानं प्रपद्ये । विरूपाक्षोऽसि दन्ताञ्जिस्तस्य ते शय्यापर्णे गृहा अन्तरिक्षे विमितᳪ हिरण्मयं तद्देवानां हृदयान्ययस्मये कुम्भे अन्तः सन्निहितानि तानि बलभृच्च बलसाच्च रक्षतो प्रमनी अनि-

मिषतः सत्यं यत्ते द्वादश पुत्रास्ते त्वा संवत्सरे संवत्सरे काम-प्रेण यज्ञेन याजयित्वा पुनर्ब्रह्मचर्यमुपयन्ति त्वं देवेषु ब्राह्मणो-ऽस्यहं मनुष्येषु ब्राह्मणो वै ब्राह्मणमुपधावत्युप त्वा धावामि जपन्तं मा मा प्रतिजार्षीर्जुह्वन्तं मा मा प्रतिहौषीः कुर्वन्तं मा मा प्रति-कार्षीस्त्वां प्रपद्ये त्वया प्रसूत इदं कर्म करिष्यामि तन्मे राध्यतां तन्मे समृध्यतां तन्म उपपद्यतां समुद्रो मा विश्वव्यचा ब्रह्मानुजा-नातु तुथो मा विश्ववेदा ब्रह्मणः पुत्रोऽनुजानातु श्वात्रो मा प्रचेता मैत्रावरुणोऽनुजानातु तस्मै विरूपाक्षाय दन्ताञ्जये समुद्राय विश्व-व्यचसे तुथाय विश्ववेदसे श्वात्राय प्रचेतसे सहस्राक्षाय ब्रह्मणः पुत्राय नमः ॥

इत्यन्तम्पठित्वा अक्षतमग्नौ प्रादक्षिण्येन समाचाराद्ब्र-ह्मणे दत्वा, तथैव हस्तं परावर्त्याग्नौ समिधं प्रक्षिपेत् । ततः स्रुक्स्रुवयोः सम्मार्गः । व्याहृतित्रयहोमः । तत आज्यस्थालीतः स्रुवत्रयं सकृच्छयापूर्वकं स्रुचि गृहीत्वा चतुर्थग्रहणार्थं स्रुवं सव्येनादाय स्रुच्युपरि स्रुवं सन्धार्य, दक्षिणहस्तेनाज्यस्थाली-मादाय, आज्यं स्रुवोपरि तथा निनयेद्यथा स्रुक्पूरणं भवति । ततः आज्यस्कन्दनमकुर्वन्दक्षिणेन स्रुचमादाय प्रजापतिं मनसा ध्या-यन्स्वाहान्तेन जुहुयात् । इदं प्रजापतये न ममेति मनसैव त्यागः कार्यः । ततो व्याहृतिचतुष्टयं पुनस्त्रयञ्च हुत्वा, समिद्धोमानुप-र्युक्षणप्रसेकान्विधाय यज्ञवास्तु कुर्यात् । ततो वस्वाहुतिः । ततः प्रदक्षिणागमनादि पुनःपूरणान्तं कृत्वा, समाचारात्सुसम्प्रोक्षि-तमस्त्वित्यादि कार्यम् ।

ततः आधानसिद्ध्यर्थं गोनिष्क्रयद्रव्यं शक्त्या स्वर्ण-रूप्ययोर्निष्कं तदर्द्धं तदर्द्धं वाऽभावे द्वात्रिंशत्ताम्रपणान्गृहीत्वा प्रणीतास्थं सकुशं जलमादाय स्वसव्यहस्तेन ब्रह्मणो दक्षि-णहस्तं गृहीत्वा 'कृतस्यास्य स्मार्त्ताग्न्याधानकर्मणः साङ्गता-सिद्ध्यर्थं गोनिष्क्रयभूतमिदं हिरण्यं आग्नेयं अमुकगोत्रो-

ऽहं अमुकशर्माऽहं अमुकगोत्रायामुकशर्मणे तुभ्यमहं सम्प्रददे न ममेति' सकुशजलां दक्षिणां दद्यात् । 'ॐ प्रतिगृह्णामि स्वस्ति' इति ब्रह्मा वदेत् । ततः स्वधृतं वासोयुगं पत्न्याश्च दद्यात् । 'इदं वासोयुगं बार्हस्पत्यं च ब्रह्मन्तुभ्यमहं सम्प्रददे' । कृतस्ये-त्याद्युच्चार्य 'कर्माङ्गदेवताप्रीत्यर्थं ब्राह्मणमेकं भोजनेनाऽहं तर्प-यिष्ये' । कृतस्येत्यादि उच्चार्य 'स्मार्ताग्न्याधानकर्मणः साङ्गता-सिद्ध्यर्थं त्र्यधिकत्रिशतसङ्ख्याकान्ब्राह्मणान्भोजनेनाहं तर्प-यिष्ये' । तत आशिषो नैगमाः । ततो वामदेव्यं गायेत् । कयानश्चित्र इति वामदेव ऋषिः गायत्री छन्दः विश्वेदेवा-देवताः । आपो वा ऋत्वियमार्छंदिति ब्राह्मणम् । उपमन्त्रयते स हिङ्कार इति रहस्यब्राह्मणम् शान्त्यर्थे विनियोगः । वामदेव्यं गीत्वा चतुर्भिश्चेत्यग्निं प्रणमेत् ।

ततस्तदानीमेव सायंप्रातर्होमौ तन्त्रेण कर्त्तव्यौ । तत्र पात्रद्वये पृथगेकैकाहुतिपर्याप्तं होमीयं प्रक्षिप्य, तृतीये पात्रे आहुतिद्वयस्य प्रक्षिप्य, भूजपादिसमिद्धोमान्ते अग्नये स्वाहेति हुत्वा, पुनः सूर्याय स्वाहेति हुत्वा, त्यागं पृथग्विधाय, प्रजापतये स्वाहेति तन्त्रेण हुत्वा, पुनः समिद्धोमादि कृत्वा वामदेव्यं गायेत् । ततः पाकपूर्वकं वैश्वदेवाङ्गं नान्दीश्राद्धं विधाय वैश्वदेवस्याहुतिद्वयं हुत्वा, बलिकर्माङ्गं नान्दीश्राद्धं विधाय, बलिकर्म निर्वर्त्य, होमाङ्गमाभ्युदयिकं विधाय, ब्राह्मणान् भोजयित्वा स्वयं भुक्त्वा, सायङ्काले सायंहोमं कृत्वा, पुनः पाकपूर्वकं वैश्वदेवं कुर्यात् । ततः प्रथमोपस्थितायां पौर्णमास्यां दर्शपौर्णमासाङ्गं नान्दीश्राद्धं विधाय प्रातः प्रतिपदि वक्ष्यमाणविधिना पक्षादि-स्थालीपाकः कार्यः ॥

इत्यारणेयपक्षे आधानप्रयोगः ॥

## अथ आहरणपक्षे विशेषः ॥

तत्र आधानस्य मुख्यकालातिक्रमे उक्तविधिना प्रायश्चित्तं

होम्यदानं च कृत्वा, नान्दीश्राद्धं विधाय, पूर्ववद्ब्रह्मवरणं कृत्वा अहते वाससी परिधाय अग्निमाहरेत् । ततः संस्कृते कुण्डे तस्याग्नेः स्थापनम् । तमग्निमुद्धृत्य पाकं विधायोभयोरौपवसथिकाशनम् । ततः सायङ्काले पात्राणां मानपूजने । ततः पात्रप्रदानम् । ब्रह्मा अहतेन वाससा वेष्टितानि पात्राण्यादाय, स्मार्त्तकर्मसाधनभूतानि पात्राणि युवाभ्यां परिगृह्येतामित्युक्त्वा यजमानाय दद्यात् । ततो यजमानः 'स्मार्तकर्मसाधनभूतानि पात्राणि आवाभ्यां परिगृहीतानीति' वदेत् । ततः पात्राणां व्यपदेशः पूर्ववत् । ततः पुण्याहवाचनम् । रात्रावाहृतस्याग्नेर्धारणं व्युष्टायां रात्रावुपशमनम् । ततः प्रातः स्नानादि विधाय, अग्न्यागारमुपलिप्य, ब्राह्मणराजन्यवैश्याम्बरीषाणामन्यतमस्य गृहे वेदघोष–मङ्गलगीत–वाद्यादिजनितोत्साहस्तैः सह कांस्यपात्रे स्थापितश्रीफलकुङ्कुमाक्षतशरावद्वयं गृहीतया पत्न्या च सह गत्वा, तद्गृहस्थमग्निं विधूमाङ्गारं सुप्रसन्नं नारिकेलाद्युपायननिवेदनपूर्वकं प्रणम्य, शरावे तं अग्निं निधाय, द्वितीयेन शरावेण पिधाय, स्वगृहमागत्य, अग्न्यायतनसमीपे सशरावं तमग्निं निधाय, पूर्वोक्तप्रकारेण सम्मार्जनादिभिः सुसंस्कृते कुण्डे 'भवनामानमग्निं प्रतिष्ठापयामि' इति तमग्निं संस्थाप्य, समिद्धोम ब्रह्मोपवेशनादि पूर्णाहुतिहोमसायंप्रातर्होमान्तमुक्तवत्कार्यम् । ततो नान्दीश्राद्धपूर्वकं वैश्वदेवाद्युक्तवत्सर्वम् । इत्याहरणपक्षे विशेषः ।

## अथ आहरणपक्षेऽग्निनाशे प्रायश्चित्तहोमप्रयोगः ।

तत्र पूर्वं यथाविधिना भूसंस्कारं कृत्वा, अग्निं संस्थाप्य द्रव्याण्यासादयेत् । तत्र क्रमः । पवित्रच्छेदनार्थं यवाः । व्रीहयो वा । पवित्रे । आज्यस्थाली । घृतम् । सम्मार्गकुशाः । स्रुवः । समिद्द्वयम् । अग्नेरुदगपां पूर्णश्चमसः । एतान्यासाद्य आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य 'मम स्मार्त्ताग्निनाशदोषपरिहारार्थं प्रायश्चित्तहोममहं करिष्ये' इति सङ्कल्प्य इदं भूमेरिति

भूमिजपं कृत्वा, यथाविधिना आज्यं संस्कृत्य, स्रुवं सम्मार्ज्य अदितेऽनुमन्यस्वेत्यादिमन्त्रैः प्रसिच्य, देवसवितरिति पर्युक्ष्य, समिद्धुत्वा, स्रुवेण व्याहृतिचतुष्टयम् प्रजापते न त्वदेतामित्यनेनैकाहुतिं वा; अपि वा ज्ञातमित्येतेनैकाहुतिं वा हुत्वा, पुनः समिद्धोमानुपर्युक्षणप्रसेकान्विधाय, चमसं निनीय पुनः सम्पूर्य, वामदेव्यं गीत्वा चतुर्भिश्चेत्यग्निं प्रणमेत् । प्रजापते नत्वदेतामिति प्रजापत्यो मन्त्रः । अपि वा ज्ञातमाग्नेयः । अतस्तथैव त्यागः ।

ॐ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयंस्याम पतयो रयीणांस्वाहा ।

अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु ।

अग्ने तदस्य कल्पय त्वंँ हि वेत्थ यथातथंँस्वाहा ॥

इत्यनुगतेऽग्नौ प्रायश्चित्तहोमप्रयोगः ।

इति शुक्लविश्रामात्मज शिवराम विरचितायां गोभिलगृह्यपद्धतौ सुबोधिन्यां प्रथमप्रकाशपद्धतिः समाप्तः ॥

---

## अथ उपवीतकरणप्रयोगः ॥

तत्र अनध्यायवर्जितेऽहनि स्वाध्याये प्रातः स्नातः सन्ध्याहोमादिकं विधाय, अभुञ्जानो मध्यान्हादर्वाग् द्विजस्त्री निर्मितं द्विजनिर्मितं वा सूत्रं प्रक्षालितपाणिपाद आचान्तः शुचौ देशे प्राङ्मुख उदङ्मुखो वा उपविश्य, वामहस्तस्याङ्गुष्ठवर्जिता अङ्गुलयः संहताः सरलाः कृत्वा, दक्षिणहस्तेन सूत्रं समादाय, सूत्रोत्पादने ब्रह्माणं ध्यात्वा, अङ्गुलीनां मूले षण्णवतिसंख्यया आवेष्ट्य, त्रिगुणीकरणे विष्णुं ध्यात्वा, तदेव यत्नतस्त्रिगुणीकृत्य, आपोहिष्ठेत्यादितिसृभिर्ऋग्भिः प्रक्षाल्य अधोवृतं वलयित्वा । तत्र मन्त्रः—( पृ० ५६, पं० १ )

पुनस्तत्सावित्रीं जपंस्त्रिगुणीकृत्य ऊर्द्ध्ववृतं वलयित्वा. उपवि-

ष्य प्रदक्षिणं त्रिरावेष्ट्य, ग्रन्थिबन्धने रुद्रं ध्यात्वा, स्वगोत्रोत्थप्रवर संख्यया आवृत्य दृढं बध्वा, दशकृत्वो गायत्र्याभिमन्त्रिताभिरद्भिः सम्प्रोक्षयेत् । एवं सम्पादितमुपवीतं पूर्वधृतोपवीतनाशे अधोयाते वा अन्यद्धारयेत् । तत्र धारणविधिः ।

प्रक्षालितपाणिपादः प्राङ्मुख उदङ्मुखो वा उपविश्याचम्य, हस्ताभ्यामुपवीतमादाय, हरिब्रह्मेश्वरान्नत्वा, गायत्र्याभिमन्त्र्य, धारणमन्त्रस्य ऋष्यादीन्स्मृत्वा, यज्ञोपवीतमसीति मन्त्रेण व्याहृत्या वा यज्ञोपवीतं परममित्यादिना वा दक्षिणहस्तप्रवेशपूर्वकं दक्षिणहस्तेनैव शिरोपरि नीत्वा, वामांसे स्थापयेत् । एवमन्यान्युपवीतानि मन्त्रवत्परिधाय द्विराचामेत् । अस्मद्देशीयास्तु यज्ञोपवीतमसीति मन्त्रेण परिधाय—

ॐ यज्ञोपवीतमसि यज्ञस्य त्वा उपवीतेनोपनह्यामि ॥ १ ॥

आचम्य यज्ञोपवीतं परमं इति पश्चात् पठन्ति ।

ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥१॥

विनष्टमधोयातमुपवीतं अप्सु प्रक्षिपेत् ।

मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्येद्विनष्टानि गृह्णीतान्यानि मन्त्रत ॥
इति मनुवाक्यात् ॥

स्वधृतोपवीतनाशे परधृतमुपवीतं न धार्यम् ।
उपानहौ च वस्त्रं च धृतमन्यैर्न धारयेत् ।
उपवीतमलङ्कारं स्रजं करकमेव च ॥ इति मनूक्तेः ।

इत्युपवीतकरणप्रयोगः ॥

## अथ प्रातरादिक्रमेण आन्हिकप्रयोगः प्रारभ्यते ॥

ब्राह्मे मुहूर्त्ते उत्थाय, परमेश्वरं स्मृत्वा, रोचनादीनवलोक्य, श्रोत्रियादीन् दृष्ट्वा, नमस्कृत्य, मूत्रपुरीषोत्सर्गार्थं नैर्ऋत्यां ग्रामात्क्रमशतं नगराच्चतुर्गुणं गत्वा, वस्त्रेण सघ्राणास्यं शिरः संवेष्ट्य,

अयज्ञियतृणैर्भूमिमाच्छाद्य, यज्ञोपवीतं दक्षिणकर्णेऽवलम्ब्य, ष्ठीवनोच्छ्वासरहितः सन्नहनि उदङ्मुखो; रात्रौ दक्षिणामुखो मूत्रपुरीषे कुर्यात् । ततः सकृन्मृदमादाय, लिङ्गं प्रक्षाल्य, मृदादानपूर्वकं पञ्चकृत्वो गुदं प्रक्षाल्य, दशकृत्वः सव्यहस्तं मृद्ग्रहणपूर्वकं प्रक्षाल्यैवं सप्तवारं करावामणिबन्धं प्रक्षाल्य, त्रिवारं मृद्ग्रहणेनगुल्फं पादौ प्रक्षालयेत् ॥

इति शौचविधिः ॥

अथाचमनम् ॥

( आचमनात्पूर्वं गण्डूषानाहाचार्यः—

कुर्याद्द्वादशगण्डूषान्पुरीषोत्सर्जने द्विजः ।
मूत्रे चत्वारि गण्डूषान्भोजनान्तेषु षोडश ॥
भक्ष्यभोज्यावसाने तु गण्डूषाष्टौ विधियते । इति । )

अग्निसाध्यकर्मणि तत्प्रारम्भे मध्ये वा आचमननिमित्तपातेऽग्नेरुत्तरतो गत्वा, अन्यस्मिन्कर्मणि आचमननिमित्तपाते तदुत्तरतो गत्वा, प्राङ्मुख उदङ्मुखो वा उपविश्य, जानुमध्यकृतकरोऽनुष्णाभिरफेनाभिर्दक्षिणहस्ते गोकर्णाकृतिवत्संलग्नाङ्गुलित्रयं मुक्तकनिष्ठिकं साङ्गुष्ठं कृत्वा, माषमितसुवर्णमणिमज्जनमात्रमुदकमादाय वामहस्तेन दक्षिणं संस्पृश्य, अङ्गुष्ठमूलभवब्राह्मतीर्थेन त्रिराचामेत् । आचम्य सलोमभागेऽङ्गुष्ठमूलेन मुखं द्विः प्रमृज्य, पादावभ्युक्ष्य, जलान्तरेण शिरोऽभ्युक्ष्य, प्रतीन्द्रियं जलमादाय मिलिततर्जनीमध्यमानामाभिः संहतं मुखं संस्पृश्य, तर्जन्यङ्गुष्ठाभ्यां नासापुटे स्पृष्ट्वा, अनामिकाङ्गुष्ठाभ्यां नेत्रे संस्पृश्य, ताभ्यामेव कर्णौ स्पृष्ट्वा, कनिष्ठाङ्गुष्ठाभ्यां नाभिं संस्पृश्य, हस्ततलेन हृदयं स्पृष्ट्वा, सर्वाङ्गुलीभिः शिरः, सर्वाङ्गुल्यग्रेण बाहुमूलं स्पृशेत् । ततः किञ्चिदुदकं भूमौ स्रावयेत् । एवमाचमनं सर्वत्र ॥

इत्याचमनम् ॥

अथ दन्तधावनविधिः ॥

कण्टकीक्षीरवृक्षादिभवमष्टाङ्गुलं दन्तकाष्ठमादाय, प्राङ्मुख ईशानदिगभिमुखो वाऽन्तर्जानुकृतकर उपविश्य, शुद्धोदकेन दन्तकाष्ठं प्रक्षाल्य ।

आयुर्बलं यशो वर्चः प्रजां पशून् वसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो धेहि वनस्पते ॥

इति मन्त्रेणाभिमन्त्र्य, वाग्यतोऽग्रेण पर्वार्द्धमितं कूर्चं कृत्वा, दन्तान्संघृष्य, जिह्वामुल्लिख्य, पुनस्तत्काष्ठं प्रक्षाल्य, भङ्क्त्वोत्सृजेत् । ततो मुखशुद्ध्यर्थं गण्डूषान्कृत्वा, मुखनासाक्षीणि मलापकर्षणपूर्वकं संशोध्य, मुखं प्रक्षाल्याचम्य, सर्वेश्वरं स्मृत्वा नमस्कुर्यात् ।

इति दन्तधावनविधिः ॥

अथ प्रातः स्नानम् ॥

रात्रिधृतं वासः परित्यज्यान्यच्छुद्धं परिधाय, गृहीतमृत्कुशोदकपात्रो नद्यादौ गत्वा, प्रक्षालिताङ्घ्रिकरः शिखां बध्वा, आचम्य, तटं प्रक्षाल्य, दर्भादीन्निधाय, नद्यां प्रवाहाभिमुखस्तडागे सूर्याभिमुखस्तूष्णीं स्नात्वा, द्विराचम्य, बहिर्जलसमीप उपविश्य, कुशपाणि देशकालौ सङ्कीर्त्य 'श्रीपरमेश्वरप्रीतये प्रातःस्नानमहं करिष्ये' इति सङ्कल्प्य मृतिकामादाय, इदं विष्णुरित्यादिशग्मन्त्रेण अभिमन्त्र्य मस्तकाद्यङ्गेषु तां मृदमालिप्य ।

३ २उ ३ १ २ ३ १— २र ३ २ १ २
ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य
३ २
पाꣳसुले ॥ १ ॥

१ २ ३ १— २र ३ १ २ ३ १— २र २ ३ १ २
त्रीणि पदा विचक्रमे विष्णु र्गोपा अदाभ्यः । अतो धर्माणि
३ १ २
धारयन् ॥ २ ॥

२ ३ १ २ ३ १ २ ३ १ २ ३ २ १ २ ३ २ ३
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः
१ २
सखा ॥ ३ ॥

१— २र ३ २ ३१— २र ३ १ २ ३ २ ३ २ ३
तद्विष्णोः परमं पद꣡ꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षु-
२ २
राततम् ॥ ४ ॥

१— २र ३ १ २ ३ २ २ १ २ २ ३ १ २ ३ २
तद्विप्रासो विपन्युवो जागृवाꣳसः समिन्धते । विष्णोर्यत्परमं
३ २
पदम् ॥ ५ ॥

१ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ २३ ३
अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्या अधि
१ २
सानवि ॥ ६ ॥

आपोहिष्ठेत्यादि तिसृभिर्ऋग्भिर्मार्जयित्वा । (पृ० ५६ पं० १)

अन्तर्जले ऋतञ्चेत्यघमर्षणं कृत्वा ।

ऋतञ्चेत्यघर्षणोऽनुष्टुप् भाववृतः अघमर्षणे विनियोगः । ( पृ० ५६ पं० ६ )

स्नात्वा पुनरापोहिष्ठेत्यादिभिर्मार्जयित्वा, आचम्य कुशोदकेन स्नानाङ्गतर्पणं कुर्यात् । यथा—

ॐब्रह्मादयो देवास्तृप्यन्तु । देवपत्न्यस्तृप्यन्तु । देवसुतास्तृप्यन्तु । देवगणास्तृप्यन्तु ॥ गौतमादय ऋषयस्तृप्यन्तु । ऋषिपत्न्य० । ऋषिसुतास्तृ० ऋषिगणा० ।

अपसव्येन द्विगुणदर्भैः—

कव्यवालादयः पितरस्तृप्यन्तु । पितृपत्न्यस्तृप्यन्तु । पितृसुताः० । पितृगणाः० ।

निवीती कुशमध्यैः ।

सनकादयो मनुष्यास्तृप्यन्तु । मनुष्यपत्न्यः० । मनुष्यसुताः० । मनुष्यगणाः० ।

एवं सन्तर्प्य सव्येन वक्ष्माणं तर्पयेत् । तत्र मन्त्रः—

यन्मया दूषितं तोयं मलैः शारीरसम्भवैः ।

तस्य पापस्य शुद्ध्यर्थं यक्ष्माणं तर्पयाम्यहम् ॥

तत आचम्य, धौते वाससी परिधायाचम्य, कृततिलकः शुद्धासने उपविश्य सन्ध्यां कुर्यात् ।

इतिप्रातःस्नानम् ।

अथ प्रातःसन्ध्या ।

तत्र सव्यहस्ते कुशत्रयं दक्षिणहस्ते कुशद्वयं धृत्वा आचम्य 'मम उपात्तदुरितक्षयार्थं ब्रह्मवर्चसकामार्थं प्रातःसन्ध्योपासनमहं करिष्ये' इति सङ्कल्प्य, दक्षिणहस्तेन जलमादाय, प्रदक्षिणं परितः सिञ्चन्नात्मरक्षां कुर्यात् । ततः ऋष्यादीन् संस्मृत्य मार्जनं कुर्यात् । ॐकारस्य ब्रह्मा ऋषिः दैवी गायत्री छन्दः अग्निर्देवता सर्व कर्मारम्भे विनियोगः । व्याहृतीनां विश्वामित्र–जमदग्नि–भरद्वाजा गायत्र्युष्णिगनुष्टुबग्निवायुसूर्याः, तत्सवितुर्विश्वामित्रो गायत्री सविता, आपोहिष्ठेति तिसृणां सिन्धुद्वीपो गायत्र्यापः मार्जने विनियोगः । ततो दक्षिणहस्ते कुशत्रयमादाय, नद्यादौ जलाशयस्थं स्थले पात्रस्थं वामहस्तस्थं वा कुशाग्रैर्जलमादाय, मार्जनं कुर्यात् ।

ॐभूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ॐआपो हि ष्ठा मयो भुवः । ॐता न ऊर्जे दधातन । ॐ महे रणाय चक्षसे । ॐ यो वः शिवतमो रसः । ॐ तस्य भाजयते हनः । ॐ उशतीरिव मातरः । ॐ तस्मा अरङ्गमामवो । ॐ यस्य क्षयाय जिन्वथ । ॐ आपो जनयथा च नः ।

एभिर्मन्त्रैः शिरसि मार्जनं कृत्वा ध्यानावाहने कुर्यात् ।

पूर्वा सन्ध्या तु गायत्री रक्ताङ्गी रक्तवाससा ।
अक्षसूत्रधरा देवी कमण्डलुसमन्विता ॥
हंसस्कन्धसमारूढा तथा च ब्रह्मदैवता ।
कुमारी ऋग्वेदमुखी ब्रह्मणा सह आवह ॥
आयाहि वरदे देवि त्र्यक्षरे ब्रह्मवादिनि ।
गायत्रि च्छन्दसां मातर्ब्रह्मयोने नमोऽस्तु ते ॥

ततः प्राणायामः। भूरादीनां विश्वामित्र-जमदग्नि-भरद्वाज गौतमाऽत्रिवसिष्ठ—कश्यपाः गायत्र्युष्णिगनुष्टुप्बृहतीपङ्क्ति त्रिष्टुबूजगत्योऽग्निवायु-सूर्य्य-बृहस्पतिवरुणेन्द्रविश्वेदेवाः, तत्स-वितुर्विश्वामित्रो गायत्री सविता, आपो ज्योतिः प्रजापतिर्यजु ब्रह्माग्निवायुसूर्याः प्राणायामे विनियोगः। ततोऽङ्गुष्ठतर्जनीभ्यां नासापुटद्वयं धृत्वा, मुखनासासञ्चारिणं वायुं निरुध्य, मनसा भूरादि जपन्प्राणायामं कुर्यात्।

ॐ भूः ॐभुवः ॐस्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। ॐ आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्।

एवं त्रिरावृत्या एकः प्राणायामः। इत्थं प्राणायामत्रयं कृत्वा आचमनं कुर्यात्।

सूर्यश्चेति नारायण ऋषिः प्रकृतिश्छन्दः सूर्यो देवता आचमने विनियोगः। ततो हस्ते जलमादाय।

ॐसूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यद्रात्र्या पापमकारिषं मनसा वाचा हस्ताभ्यां पद्भ्यामुद-रेण शिश्ना रात्रिस्तदवलुम्पतु यत्किञ्च दुरितं मयि इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा। इति मन्त्रेणाचम्य-तूष्णीं द्विराचामेत्।

ततोऽञ्जलिप्रक्षेपः। हस्तेनैकेन जलमादाय, ऋतञ्चेघमर्षणोऽ तुष्टुभावृतः अश्वमेधावभृथे विनियोगः।

ॐ ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत।
ततो रात्र्यजायत ततः समुद्रो अर्णवः॥
समुद्रादर्णवादधि संवत्सरो अजायत।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी॥
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।
दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः॥

इमं मन्त्रमायतासुः सकृदनायतासुर्वा त्रिः पठित्वा, जलं प्रक्षिप्योत्थाय, हस्ताभ्यां जलमादाय, सप्रणवव्याहृतिकां गायत्रीमुच्चार्य सूर्याभिमुखोऽञ्जलित्रयं प्रक्षिपेत् ।

ततः प्रदक्षिणमावृत्याचम्य, स्वस्तिकाकृतिकृतहस्तः सूर्यमुपतिष्ठेत् । उदुत्यं प्रस्कण्वो गायत्री सूर्यः, चित्रङ्कुत्सस्त्रिष्टुप् सूर्यः उपस्थाने विनियोगः ।

ॐ उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ १ ॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याऽग्नेः । आप्राद्यावापृथिवी अन्तरिक्ष ँ सूर्य आत्मा जगतस्तस्थुषश्च ॥ २ ॥

ततः प्रणवव्याहृतिगायत्रीणामृष्यादीन्पूर्ववत्स्मृत्वा 'जपेविनियोगः' इत्युक्त्वा, करमालया नाभौ उत्तानधृतकरो मौनी प्रणवव्याहृतियुतां गायत्रीमष्टोत्तरशतमष्टाविंशति वा सञ्जप्य सङ्कल्पं कुर्यात् । 'अनेन गायत्र्या मत्कृतेन जाप्येन ब्रह्मात्मा रविः प्रीयताम्' । ततः—

उत्तरे शिखरे जाता भूम्यां पर्वतवासिनी ।
ब्रह्मणा समनुज्ञाता गच्छ देवि यथासुखम् ॥

इति विसृज्य द्विराचामेत् ॥

इति प्रातःसन्ध्या ॥

## अथ प्रातर्होमः ॥

तत्रासादनक्रमः । स्वदक्षिणे शुद्धोदकपात्रम् । पुरतः समिद्द्वयम् । होम्यश्च । अग्नेरुत्तरतो जलपूर्णं चमसम् । एवमेतान्यासाद्याचम्य प्राणानायम्य, गायत्र्याभिमन्त्रितजलेन हौमीयमभ्युक्ष्य, देशकालौ सङ्कीर्त्य 'मम आत्मसंस्कारार्थं श्रीपरमेश्वरप्रीत्यर्थं नित्यविधिरूपं प्रातर्होममहङ्करिष्ये' इति सङ्कल्प्य, इन्धनप्रक्षेपेणाग्निं सन्धिध्य, विक्षिप्तावयवमेकीकृत्य, दक्षिणं जान्वाच्य, वामहस्ताद्गृहीतो दक्षिणं हस्तमात्माभिमुखाङ्गुल्यग्रं कुण्डस्य वायुकोणे संन्यस्य, वामं

निर्ऋतिकोणे अग्न्यभिमुखाङ्गुल्यग्रं संन्यस्य । इदं भूमेरिति परमेष्ठी प्रजापति ऋषिः अनुष्टुप्छन्दः अग्निर्देवता न्यञ्चकरणे विनियोगः।

ॐ इदं भूमेर्भजामह इदं भद्रꣳसुमङ्गलम् । परा सपत्नान् बाधस्वाऽन्येषां विन्दते धनम् ॥ १ ॥

ततश्चमसस्थमुदकमञ्जलिनादाय । अदितेऽनुमन्यस्वेति प्रजापति ऋषिरेकपदा गायत्री छन्दोऽग्निर्देवता अञ्जलिप्रसेचने विनियोगः। ॐ अदितेऽनुमन्यस्वेति मन्त्रान्ते कुण्डस्य निर्ऋतिकोणादारभ्य प्राक्संस्थमाग्नेय्यन्तमुदकं सिञ्चेत् ।

पुनर्जलमादाय । अनुमतेरित्यस्य अनुमतिर्देवता विशिष्टं विनियोगाद्युच्चार्य, ॐअनुमतेऽनुमन्यस्वेति निर्ऋतिकोणादारभ्य उदक्संस्थं वायव्यन्तं प्रसिञ्चेत् ।

पुनर्जलमादाय । सरस्वत्येत्यस्य पूर्ववदृषिच्छन्दसी उच्चार्य, सरस्वती देवता, विनियोगः प्राग्वत् । ॐ सरस्वत्यनुमन्यस्वेति मन्त्रान्ते वायुकोणात् प्राक्संस्थमैशान्यन्तं प्रसिञ्चेत् ।

पुनर्जलमादाय, देव सवितरिति परमेष्ठी प्रजापतिस्त्रिष्टुप् सविता पर्युक्षणे विनियोगः ।

ॐ देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय ।

दिव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाचं नः स्वदतु ॥

इति मन्त्रान्ते पर्युक्षणारम्भकोटेर्बाह्यतः समाप्तिकोटिं कुर्वन्होमीयद्रव्यं पर्युक्षणधारया अभ्यन्तरतः कुर्वन्प्रदक्षिणमग्निं सकृत्त्रिर्वा पर्युक्षिपेत् ।

ततः समिधमादाय तूष्णीमग्नौ प्रक्षिप्य । कठिनं पाणिना द्रवञ्चेत्कꣳसादिना होमद्रव्यमादाय। सूर्याय स्वाहेति परमेष्ठी प्रजापतिर्यजुः सूर्यो देवता होमे विनियोगः । 'ॐ सूर्याय स्वाहा' इति मध्ये जुहुयात् । इदं सूर्याय न ममेति त्यागः ।

पुनर्द्वितीयामाहुतिमादाय । प्रजापतय इत्यस्य प्रजापतिऋषिः यजुः प्रजापतिर्देवता होमेवि० । 'ॐ प्रजापतये स्वाहेति' ऐशान्यां

जुहुयात् । इदं प्रजापतये न ममेति त्यागं विधाय तूष्णीं द्वितीयां समिधमग्नौ प्रक्षिप्य । देवसवितरित्यनेन पूर्ववत्पर्युक्ष्य । 'ॐ अदितेऽन्वमꣳस्था' इति दक्षिणतः, 'ॐ अनुमतेऽन्वमꣳस्था' इति पश्चिमस्यां, 'ॐ सरस्वत्यन्वमꣳस्था इत्युत्तरतः पूर्ववत्प्रसिञ्चेत् । ततोऽग्निं प्रदक्षिणीकृत्य चमसं निनीय पुनः पूरयित्वा स्वदेशे संस्थाप्य वामदेव्यं गीत्वा चतुर्भिश्चेत्यग्निं प्रणमेत् ।

ॐ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।

हूयते च पुनर्द्वाभ्यां तस्मै यज्ञात्मने नमः ॥ १ ॥

ततो यद्द्यकेति शाकलं साम । शकल ऋषिः गायत्री छन्दः इन्द्रो देवता शान्त्यर्थे गाने वि० । इति स्मृत्वा यद्द्येति साम पठेत् ।

ॐ यद्द्यका ५ च्चवृत्रहान् । उदगा अभि सूरा२इया । सावौ२म् । तादिन्द्रतायेर । हुम् । वा२३४५ ओ६हायि ॥ १ ॥

इति प्रातर्होमः ।

## अथ माध्यान्हिकस्नानविधिः ॥

तत्र स्नानार्थं नद्यादौ गत्वा जलेन तटं संशोध्य मृद्गोमयतिलकुशाक्षतानुपकल्प्य तडागञ्चेत्तडागात्पञ्च मृत्पिण्डान्बहिर्निःक्षिपेत् । ततः पावकान इत्यस्य मधुच्छन्दा ऋषिः गायत्री छन्दः सरस्वती देवता तीर्थनमस्करणे वि० ।

ॐ पावकानः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धिया वसुः ॥

इति मन्त्रेण 'तीर्थदेवताभ्यो नम' इति नमस्कृत्य । मृज्जलाभ्यां पादावारभ्य गात्राणि प्रक्षालयेत् । तत्र वामहस्तेन पादौ । ततो लिङ्गम् । ततो गुदम् । ततो हस्तौ । ततो दक्षिणहस्तेन कुक्षौ हृदयं शिरश्च प्रक्षाल्य, निमज्य तीरं आगत्योपविश्य । मा नस्तोक इति कुत्सो जगती रुद्रः शिखाबन्धने वि० ।

ॐ मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः ।

वीरान्मा नो रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥

इति मन्त्रेण वामपार्श्वे शिखां बध्वा । यज्ञोपवीती कुशहस्तः प्राङ्मुख उदङ्मुखो वा उपविश्याचम्य देशकालौ च सङ्कीर्तयित्वा 'सकलपापक्षयकामः परमेश्वरप्रीतये अस्यां नद्यां अस्मिन्तडागे वा स्नानमहं करिष्ये' इति सङ्कल्प्य । ततो जलं दक्षिणहस्तेनादाय । सप्तव्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमाऽत्रिवसिष्ठकश्यपा ऋषयः, गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छन्दांसि, अग्निवायुसूर्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवताः जलाभिमन्त्रणे वि० । इति ऋष्यादिकं स्मृत्वा "ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं" इति सप्त व्याहृतयः सप्तकृत्वः सञ्जप्य । ततो गायत्र्या विश्वामित्रो गायत्री सविता देवता जलाभिमन्त्रणे वि० । ॐ तत्सवितुर्वरेण्यमिति सकृद्गायत्र्या चाभिमन्त्रितजलेन आचम्य ततस्तूष्णीं द्विराचामेत् । ततः परमेश्वरं वरुणं च स्मृत्वा(१) ततः सहस्रशीर्षाघृतवत्यश्वक्रान्तेति मन्त्रत्रयान्ते मृत्तिकामादाय, सहस्रशीर्षेति नारायणोऽनुष्टुप्पुरुषः, घृतवतीति मन्त्रस्य भरद्वाजऋषिः जगती छन्दः द्यावापृथिव्यौ देवते, अश्वक्रान्तेति वामदेवऋषिरनुष्टुप्छन्दः मृत्तिका देवता मृत्तिकाग्रहणे वि० ।

३ १ २ ३ १ २ ३ २ ३ १ २

ॐ सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् ।

---

(१) अत्र समाचारात् यदाकदेति ऋचं पठित्वा नमस्कुर्वन्ति । तद्यथा--यदाकदेति वसिष्ठो बृहती वरुणः स्मरणे वि० ।

२ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २र ३ १ २

ॐ यदा कदा च मीढुषे स्तोता जरेत मर्त्यः । आदिद्वन्देत वरुणं

३ २ ३ २ ३ २ ३ १ २

विपा गिरा धर्तारं विव्रतानाम् ॥ १ ॥

१— २र ३ १ २ ३ १ २ ३ २
स भूमिꣳ सर्वतो स्पृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥
३ १ २ २ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
ॐ घृतवती भुवनामभिश्रियोर्वी पृथ्वी मधु दुघे सुपेशसा ।
३ २ ३ १— २र ३ १ २ ३ १ २ ३ २ ३ १ २
द्यावा पृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा॥२॥

ॐ अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।
मृत्तिके हर मे पापं यन्मया पूर्वसञ्चितम् ।
त्वया हतेन पापेन सर्वपापैः प्रमुच्यते ॥ ३ ॥

एभिर्मन्त्रैः मृत्तिकामादाय । इदं विष्णुरिति षण्णां मेधातिथि-गायत्री विष्णुः मृत्तिकासमूहने वि० ।

३ २उ ३ १ २ ३ १— २र ३ २
ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
१ २ ३ २
समूढमस्य पाꣳसुले ॥ १ ॥
१ २ ३ १— २र ३ १ २ ३ १— २
त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः ।
२ ३ १ २ ३ १ २
अतो धर्माणि धारयन् ॥ २ ॥
२ ३ १ २ ३ १ २ ३ १ २ ३ २
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
१ २ ३ २ ३ १ २
इन्द्रस्य युज्यः सखा ॥ ३ ॥
१— २र ३ २ ३ १— २र ३ १ २
तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः ।
३ २ ३ २ ३ १ २
दिवीव चक्षुराततम् ॥ ४ ॥
१र २र ३ २ ३ २ ३ १ २
तद्विप्रासो विपन्युवो जागृवाꣳसः समिन्धते ।
२ ३ १ २ ३ २ ३ २
विष्णोर्यत्परमं पदम् ॥ ५ ॥
१ २ ३ १ २ ३ २ ३ १ २ ३ २
अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
३ २उ ३ १ २
पृथिव्या अधि सानवि ॥ ६ ॥

इति षड्भिर्मन्त्रैर्जलेन तां मृदं आलोडयेत् ।

तत उद्वयन्तेति प्रस्कण्व ऋषिः पङ्क्तिश्छन्दः सूर्यो देवता। उदुत्तममिति शुनःशेपस्त्रिष्टुप् वरुणादित्यौ सूर्यावेक्षणे वि०।

ॐ उद्वयन्तमसस्परि ज्योतिः पश्यन्त उत्तरꣳस्वः पश्यन्त उत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ १ ॥

१ २ ३ १ २ ३ १ २ ३ १ – २र ३ १ – २र ३ १ २

ॐ उदुत्तमं वरुणपाशमस्मदवा धमं विमध्यमꣳश्रथाय।

१ २ ३ २ ३ १ – २र ३ २ ३ १ २

अथादित्य व्रते वयं तवानागसो अदितये स्याम ॥ २ ॥

एवं ऊर्ध्वौ पाणी कृत्वा उभाभ्यां मन्त्राभ्यां आदित्यं विलोकयेत्। तत उद्धृतासीति वामदेवोऽनुष्टुप् पृथिवी, अमोसीति प्रजापतिस्त्रिष्टुबिन्द्रः मृदालेपने वि०।

ॐ उद्धृतासि वराहेण कृष्णेन शतबाहुना।
मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिवन्दिता ॥ १ ॥

ॐ अमोसि प्राण तदृतं ब्रवीम्यमाह्यसि सर्वमनुप्रविष्टः।
स मे जराꣳ रोगमपमृज्य शरीरादपाम एधि मा मृथान इन्द्र॥२॥

आभ्यां मन्त्राभ्यां तया मृदा शिरःस्कन्धपार्श्वोरुजङ्घाङ्घ्रिषु प्रातिलोम्येन विलिम्पेत्। पुनरनेनैव विधिना मृत्तिकाग्रहणाद्यङ्ग-स्पर्शनान्तं कुर्यात्।

ततो गोमयेन। गावश्चिदिति सौभरिः ककुबुष्णिक् मरुतः (१)गोमयलेपने विनि०।

१ २ ३क २र ३ २ ३ १ २ ३ १ २

ॐ गावश्चिद्घासमन्यवः सजात्येन मरुतः सबन्धवः। रिहते

---

(१) अस्याग्रे सदागावमानस्तोके इति मन्त्रद्वयमप्याचारात् पठन्ति। तयोर्ऋष्यादयो यथा–"सदागाव इति वाकपङ्क्तिर्वाक्, मानस्तोक इति कुत्सो जगती रुद्रः"इति। ततो गावश्चिदिति मन्त्रान्ते–

२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

ॐ सदा गावः शुचयो विश्वधायसः सदा देवा अरेपसः ॥ १ ॥

ॐ मानस्तोके तनये मान आयौ मानो गोषु मानो अश्वेषु रीरिषः। वीरान्मानो रुद्रभामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ इति ॥२॥

३ १ २ ३ २
ककुभो मिथः ॥ १ ॥

ततो ऋतञ्चेत्यघमर्षणोऽनुष्टुप् भाववृतः अघमर्षणे विनियोगः। तर्जन्यङ्गुष्ठाभ्यां नासापुटे वायुनिरोधाय संगृह्य, ऋतञ्च सत्यञ्चेति त्रिः पठेत् ।

ॐ ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत । ततो राज्यजायत ततः समुद्रो अर्णवः । समुद्रादर्णवादधि सम्वत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी । सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः ॥ १ ॥

ततोऽभिमतदेवतां स्मृत्वा, नाभिमात्रे जले प्रविश्य, वक्ष्यमाणाभिर्ऋग्भिः कुशैर्मार्जयेत् । शन्नो देवीति सिन्धुद्वीपो गायत्र्यापः, आपोहिष्ठेति तिसृणां सिन्धुद्वीपो गायत्र्यापः, उपास्मा इत्यादि सामत्रयस्य असितकश्यपवैखानसा गायत्री सोमः, तरत्समन्दीत्यवत्सारो गायत्री सोमः, एतोन्विन्द्रेति तिसृणां तिरश्च्यनुष्टुबिन्द्रः, तमुष्टवामेति तिरश्च्यनुष्टुबिन्द्रः, नकिइन्द्रेति वामदेवो गायत्रीन्द्रः, पवित्रन्त इति तिसृणां पवित्रो जगती सोमः मार्जने विनियोगः ॥

ततः शन्नोदेव्यापोहिष्ठादिभिस्तिसृभिरुपास्मा इत्यादि नवभिस्तरत्समन्दीत्यादिचतुर्भिरेतोन्विन्द्रेति तिसृभिस्तमुष्टवाम नाकिइन्द्र पवित्रन्तेति तिसृभिर्ऋग्भिः प्रत्यृचमृगन्ते मार्जयेत् ।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ २उ ३ १
ॐ शन्नो देवी रभिष्टये शन्नो भवन्तु पीतये । शंयोरभि
२
स्रवन्तु नः ॥ १ ॥

२ ३ १— २२ ३ २ ३ १ २ ३ १ २ ३१—२२ ३ १ २
ॐ आपोहिष्ठा मयोभुवस्ता न ऊर्जे दधातन। महेरणाय चक्षसे॥२॥
१ २ ३ १२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः॥३॥
२ ३ १ २ ३ २ ३ १ २ ३ १ २ १ २ ३ १
तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जन

२
यथा च नः ॥ ४ ॥

१ २ ३ १२ ३ १२ ३ १ ३ १२ २र
ॐ उपास्मै गायता नरः पवमानायेन्दवे। अभिदेवाँ इयक्षते।५

३ २ ३ १ २ ३ १र २र ३ २ ३ १ २ ३ २
अभिते मधुना पयोथर्वाणो अशिश्रयुः। देवं देवाय देवयु॥६॥

१ २ ३ २उ ३ १र २र ३ १र २र १ २ ३ १ २
स नः पवस्व शङ्गवे शञ्जनाय शमर्वते। शꣳ राजन्नोषधीभ्यः॥७॥

१ २ ३ १ २ ३ १ २ ३ २ १ २ ३ १र २र
दविद्युतत्या रुचा परिष्टोभन्त्याकृपा। सोमाः शुक्रा गवा
शिरः ॥ ८ ॥

३ १ २ ३ १ २ ३ १र २र ३क २र १ २ ३ १ २
हिन्वानो हेतृभिर्हित आवाजं वाज्यक्रमीत्। सीदन्तो वनुषो
यथा ॥ ९ ॥

३ १ २ ३ १ २ ३ २ ३ १ २ १ २ ३ १ २
ऋधक्सोम स्वस्तये सञ्जग्मानो दिवा कवे। पवस्व सूर्यो

३ २
दृशे ॥ १० ॥

१ २ ३ २ ३ १ २ १ २ ३ १ २ ३ १ २
पवमानस्य ते कवे वाजिन्त्सर्गा असृक्षत। अर्वन्तो न श्रवस्य वः।११।

२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ १ २ ३ १ २
अच्छाकोशं मधुश्च्युतमसृग्रं वारे अव्यये। अवावशन्त धीतयः१२

१ २ ३ २उ ३ २ ३ २ ३ २ ३ १ २ १ २ ३ २ ३
अच्छा समुद्रमिन्दवोऽस्तं गावो न धेनवः। अग्मन्नृतस्य

२ ३ २
योनिमा ॥ १३ ॥

२ ३ २ ३ १ २ ३ १ २ ३ १— २र २ ३ २ ३ १
तरत्समन्दी धावति धारा सुतस्यान्धसः। तरत्समन्दी

२
धावति ॥ १४ ॥

३ १ २ ३ १ २ ३ १ २ ३ १ २ २ ३ २ ३ १ २
उस्रा वेद वसूनां मर्तस्य देव्यवसः। तरत्समन्दी धावति॥१५॥

३ १ २ ३२ ३ २ ३ १ २ २ ३ २ ३ १ २
ध्वस्रयोः पुरुषं त्योरासहस्राणि दद्महे। तरत्समन्दी धावति १६

१— २र ३ २ ३ १ २ ३ १ २ ३ १२ २ ३ २ ३ १
आययोस्त्रिꣳशतन्तना सहस्राणि च दद्महे। तरत्समन्दी

२
धावति ॥ १७ ॥

एतोन्विन्द्रꣳ स्तवाम शुद्धꣳ शुद्धेन साम्ना ।
शुद्धैरुक्थैर्वावृध्वाꣳ सꣳ शुद्धैराशीर्वान्ममत्तु ॥ १८ ॥
इन्द्र शुद्धो न आगहि शुद्धः शुद्धाभिरूतिभिः ।
शुद्धो रयिं निधारय शुद्धो ममद्धि सोम्य ॥ १९ ॥
इन्द्र शुद्धो हि नो रयिꣳ शुद्धो रत्नानि दाशुषे ।
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजꣳ सिषाससि ॥ २० ॥
तमुष्टवाम यं गिर इन्द्रमुक्थानि वावृधुः ।
पुरूण्यस्य पौꣳस्या सिषासन्तो वनामहे ॥ २१ ॥
नकि इन्द्रत्वदुत्तरं नज्यायो अस्ति वृत्रहन् । नक्येवं
यथा त्वम् ॥ २२ ॥
पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्नतदामो अश्नुते शृतास इद्वहन्तः सन्तदाशत ॥२३॥
तपोष्पवित्रं विततं दिवस्पदेऽर्चन्तो अस्य तन्तवो व्यस्थिरन् ।
अवन्त्यस्य पविता रमाशवो दिवः पृष्ठमधिरोहन्ति
तेजसा ॥ २४ ॥
अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु वाजयुः ।
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमा
दधुः ॥ २५ ॥

ततः ॐ भूः पुनातु । ॐ भुवः पुनातु । ॐ स्वः पुनातु । ॐ भूर्भुवः स्वः पुनात्विति समाचारान्मार्जयेत् ॥

ततो भूरादिभिस्त्रिः प्राणायामं कृत्वा, त्रिर्निमज्य । सहस्रशीर्षेत्यादि तिसृणां नारायणोऽनुष्टुप् पुरुषः अघमर्षणे विनियोगः ।

३ १ २ ३ १ २ ३ २ ३ १ २
ॐ सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् ।
१— २२ ३ १ २ ३ १ २ ३ २
स भूमि ꣳसर्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥
३ २ ३ २उ ३ १ २ ३ १ २ ३ १ ९ ३ १ २
त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहा भवत्पुनः ।
२ ३ २ ३ २२ ३ २ ३ २
तथा विश्वꣳ व्यक्रामदशनानशने अभि ॥ २ ॥
१२ ३ ःउ ३ २ ३ २उ ३ १ २
पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम् ।
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥

एतदृक्त्रयं प्राणायामवद्वायुं निरुन्धयन् जलमग्ननासा सञ्जप्य पुनस्त्रिर्निमज्याचम्य, शन्नोदेव्यादिभिर्मन्त्रैः पुनर्मार्जयित्वा, स्नानाङ्गतर्पणं कुशोदकैः पूर्ववत् कुर्यात् । ततो जलाद्बहिर्निर्गत्याचम्य, कृततिलको मध्याह्नसन्ध्यां कुर्यात् ।

इति स्नानविधिः ।

## अथ मध्याह्न-सन्ध्या ॥

तत्र प्रातःसन्ध्यावत्सर्वम् । विशेषो यथा—'मध्याह्नसन्ध्योपासनमहं करिष्ये' इति सङ्कल्पे ॥

मध्यान्हे वै तु या सन्ध्या श्वेताङ्गी श्वेतवाससा ।
वृषस्कन्धसमारूढा तथा च रुद्रदैवता ॥ १ ॥
युवा यजुर्वेदमुखी रुद्रेण सह आवह ।
आयाहि वरदे देवि त्र्यक्षरे रुद्रवादिनि ॥ २ ॥

सावित्रि च्छन्दसां माता ब्रह्मयोने नमोऽस्तु ते ॥

इत्यावाहनम् । ततः प्राणायामः पूर्ववत् । आचमनं—आपः पुनन्त्विति वामदेवोऽनुष्टुबाप आचमने विनियोगः ।

ॐ आपः पुनन्तु पृथिवीं पृथ्वी पूता पुनातु माम् ।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् ॥
यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम ।
सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहं स्वाहा ॥

अनेनाचम्य तूष्णीं द्विराचम्य । ऋतञ्च सत्यञ्चेत्यनेनाघमर्षणान्तं पूर्ववत् । तत उत्थाय, सूर्याभिमुखो गायत्र्यैकाञ्जलिं प्रक्षिप्य, प्रदक्षिणं कृत्वा, आचम्य सूर्यमुपतिष्ठेत् ।

भूम्यलग्नपादद्वयगुल्फ, एकपादस्थो वा एकपादेनाप्यर्द्धपादस्थो वा उर्द्धबाहुरुदुत्यं चित्रन्देवानामिति ऋग्द्वयोपस्थानानन्तरं विभ्राड् बृहत्पिबत्वित्यादि इच्छया जपेद्यावद्दशतिसमाप्तिरर्वाग् वा । विभ्राडिति सूर्यो जगती सूर्यः, चित्रं कुत्सो जगती ( त्रिष्टुप् ) सूर्यः, आयङ्गौरिति तिसृणां सर्पा गायत्री सूर्यः, अपत्येता इत्याद्यष्टर्चस्य प्रस्कण्वो गायत्री सूर्यः उपस्थाने विनियोगः ।

२ ३ २ ३ १२ ३ १ २ ३ १ २ ३ १— २२ ३ १ २
ॐ उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् १
३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १२ ३ २
ॐ चित्रं देवाना मुदगादनीकं चक्षुर्मित्रस्य वरुणस्याऽग्नेः ।
२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १— २२ ३ १
आप्राद्यावा पृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थु-
२
षश्च ॥ २ ॥

३ २ ३ १ ३ २उ ३ १ २ ३ १ २ ३ १ २
ॐ विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ।
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १— २२
वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा विराजति ॥ ३ ॥

३ १ ३ २ ३ १२ ३ १२ ३ १२ ३२ ३ १२ ३२
चित्रं देवाना मुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याऽग्नेः ।
२ ३ १ २ ३ २ ३ १२ ३ १ २ ३ १— २२ ३ १
आ प्राद्यावा पृथिवी अन्तरिक्ष्ँ सूर्य आत्मा जगतस्तस्थु-
२
षश्च ॥ ४ ॥
१— २२ ३ १ २ ३ १ २ ३२ ३ १ २ ३ १
आयङ्गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरञ्च प्रय-
२
न्त्स्वः ॥ ५ ॥
३ १ २ ३ २ ३ ३ १ २ ३ २ १ २ २ ३ १—
अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो
२ २
दिवम् ॥ ६ ॥
३ २ ३ १ २ ३ १ २ ३ १ २ २ ३ २ ३
त्रिँशद्धाम विराजति वाक्पतङ्गाय धीयते । प्रतिवस्तो
२ ३ १ २
रहद्युभिः ॥ ७ ॥
२ ३ २ ३ १ २ ३ १ २ ३ १ २ १ २ ३ १
अपत्येता यवो यथा नक्षत्रायन्त्यक्तुभिः । सूराय विश्व-
२
चक्षसे ॥ ८ ॥
१ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ १ २ ३ १
अदृश्रन्नस्य केतवो विरश्मयो जनाँ अनु । भ्राजन्तो अग्न-
२
यो यथा ॥ ९ ॥
३१ २ ३ १ २ ३ १ २ २ ३ १ २
तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमाभासि रो-
३ २
चनम् ॥ १० ॥
३ २ ३ २ ३ १ २ ३ १— २२ ३ १ २ २ ३ ३ ३क
प्रत्यङ्देवानां विशः प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ्विश्वं
२२ ३ २
स्वर्दृशे ॥ ११ ॥
१ २ ३ १ २ ३ २ ३ २ ३ १ २ १ २ ३ १
येना पावक चक्षसा भुरण्यन्तञ्जनाँ अनु । त्वं वरुण प-
२
श्यसि ॥ १२ ॥

१— २ १ २ ३ २ ३ १ २ ३ १ २ २ ३ १ २
उद्यामेषि रजः पृथ्वहा मिमानो अक्तुभिः । पश्यञ्जन्मानि सूर्य ॥ १३ ॥

१ २ ३ २ ३ २ ३ २ ३ १ २ ३क २ १ २ ३ १ २
अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः। ताभिर्याति स्वयुक्तिभिः ॥ १४ ॥

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षण ॥ १५ ॥

सूर्यमुपस्थाय तर्पणं कुर्यात् । प्राङ्मुखः पातितदक्षिणजानुर्दक्षिणहस्ते धृतकुशत्रयः शुक्लैस्तिलैः कुशाग्रैर्देवतीर्थेन देवान् जलाशयात्प्रादेशमात्रहस्ताञ्जलिमुद्धृत्य तर्पयेत् ।

ॐ नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नम आचार्येभ्यो नम ऋषिभ्यो नमो देवेभ्यो नमो वेदेभ्यो नमो वायवे च मृत्यवे च विष्णवे च नमो वैश्रवणाय चोपजाय च । इति कृताञ्जलिः पठित्वा अग्न्यादींस्तर्पयेत् । आदौ प्रणवमन्ते च तृप्यत्विति सर्वत्र योज्यम् । (१) ॐ अग्निस्तृप्यतु । ॐ प्रजापति० । ॐ विश्वेदेवास्तृप्यन्तु० । ॐ ॐकार० । ॐ वषट्कारस्तृप्य० । ॐ महाव्याहृतयस्तृप्यन्तु । ॐ गायत्री तृ० । ॐ ब्रह्मा तृ० । ॐ विष्णुस्तृ० । ॐ वेदास्तृप्यं० । ॐ देवास्तृप्यं० । ॐ ऋषयस्तृप्यं० । ॐ मुनयस्तृप्यं० । ॐ आचार्यास्तृप्यं० । ॐ पुराणानि तृप्यं० । ॐ छन्दांसि तृ० । ॐ यज्ञास्तृप्य० । ॐ अध्ययनं तृ० । ॐ द्यावापृथिव्यौ तृप्येताम् । ॐ अन्तरिक्षं तृ० । ॐ अहोरात्राणि तृप्यं० । ॐ मासास्तृप्यं० । ॐ ऋतवस्तृप्यं० । ॐ संवत्सरस्तृ० । ॐ वरुणस्तृ० । ॐ समुद्रास्तृप्यं० । ॐ नद्यस्तृं० । ॐ गिरयस्तृप्यं० । ॐ क्षेत्राणि तृप्यं० । ॐ वनानि तृ० । ॐ ओषधयस्तृप्यं० । ॐ वनस्पतयस्तृप्यं० । ॐ

---

(१) निराग्निश्चेत् 'तृप्यतु' इति पदस्थाने "तृप्यताम्" इति पदं एकवचनान्तं बहुवचनान्तं वा यथावसरं योजयेदिति विशेषः ।

पशवस्तृप्यं० । ॐ नागास्तृप्यं० । ॐ उरगास्तृप्यं० । ॐ सुपर्णास्तृ० ॐ वयाꣳसि तृ० । ॐ गावस्तृप्यं० । ॐ वसवस्तृप्यं० । ॐ रुद्रास्तृप्यन्तु । ॐ आदित्यास्तृ० । ॐ मरुतस्तृ० । ॐ सिद्धास्तृ० । ॐ साध्यास्तृ० । ॐ गन्धर्वास्तृ० । ॐ पिशाचास्तृ० । ॐ यक्षास्तृ० । ॐ रक्षाꣳसितृ० । ॐ भूतानि तृ० । ॐ नक्षत्राणि तृ० । ॐ अश्विनौ तृप्येताम् । ॐ अप्सरसस्तृ० । ॐ चतुर्विधभूतग्राम० । ॐ मरीचि० । ॐ अत्रि० । ॐ आङ्गिरा० । ॐ पुलस्त्य० । ॐ पुलह० । ॐ क्रतु० । ॐ प्रचेता० । ॐ वसिष्ठ० । ॐ भृगु० । ॐ नारद० । ॐ सप्तर्षयस्तृप्यं० । ॐ अरुन्धती तृ० । एवमादयः एते मे स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्पिताः ॥

एवमेकैकाञ्जलिना देवान्सन्तर्प्य, अपसव्येन दक्षिणाभिमुखः पातितवामजानुः पितृतीर्थेन द्विगुणदर्भैः कृष्णैस्तिलैः पितॄन्स्तर्पयेत् ॥

ॐकारो महाव्याहृतयो गायत्री ब्रह्मा वेदा देवा ऋषयः पितरश्छन्दांसि स्याचार्यास्तृप्यन्ताम् । एवं त्रिः ।

ॐ राणायनिस्तृप्यतु । ॐ शाट्यमुग्रस्तृ० । ॐ व्यासस्तृ० । ॐ भागुरिस्तृ० । ॐ औगुण्डिस्तृ० । ॐ गौल्गुलविस्तृ० । ॐ भानुमानौपमन्यवस्तृ० । ॐ काराटिस्तृ० । ॐ मशको गार्ग्य० । ॐ वार्षगण्य० । ॐ कौथुमिस्तृ० । ॐ शालिहोत्र० । ॐ जैमिनि० । त्रयोदशैते सामगाचार्याः स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्पिताः ॥

ॐ शटिस्तृ० । ॐ भाल्लववि० ॐ काल्लविस्तृ० । ॐ ताण्ड्य० । ॐ वृषाणक० । ॐ रुरुकि० । ॐ शमबाहु० । ॐ अगस्त्य० । ॐ बष्काशिरा० । ॐ हूहूस्तृ० । दशैते मे प्रवचनकर्त्तारः स्वस्ति कुर्व० ॥

ॐ कव्यवाडस्तृ० । ॐ नल० । ॐ सोम० । ॐ यम० । ॐ

अर्यमा० । ॐ अग्निष्वात्तास्तृप्यन्तु । ॐ सोमपीथास्तृप्यं० । ॐ बर्हिषद० । ॐ यम० । ॐ धर्मराज० । ॐ मृत्यु० । ॐ अन्तक० । ॐ वैवस्वत० । ॐ काल० । ॐ सर्वभूतक्षय० । ॐ औदुम्बर० । ॐ दध्न० । ॐ नील० । ॐ परमेष्ठी० । ॐ वृकोदरस्तृ० । ॐ चित्र० । ॐ चित्रगुप्त० ।

अथ स्वपितृन्नामगोत्रपूर्वकं प्रतिपुरुषमञ्जलित्रयेण तर्पयेत् । अमुकगोत्र अस्मत्पिताऽमुकशर्मा तृप्यतु । एवमपरयोः । गोत्रा अस्मन्माता अमुकी देवीदा तृप्यतु । एवं तर्पणप्रयोगः । प्रथमं पित्रादिकांस्त्रीन् । ततो मात्रादींस्त्रिभिस्त्रिभिः । सपत्नजननीम् । एवमेव मातामहादिकांस्त्रीन् । एकैकाञ्जलिना तत्पत्नीः । स्वपत्नीं । तनयं, तनयाम् । ततः पितृव्यमातुलपितृव्यपत्नीमातुलपत्नीभ्रातॄन्, भ्रातृपत्नीं, पितृष्वसारं मातृष्वसारं भगिनीं तासामपत्यानि तत्पतींश्च श्वशुरं श्वश्रूं गुरुं शिष्यं मित्रञ्च ( आप्तांश्च ) एतानेकैकाञ्जलिना तर्पयेत् ।(१)

ततः सव्येनाचम्य कण्ठावलम्बिकृतोपवीतः कुशमध्यैः प्रत्यङ्मुखः शबलैस्तिलैस्तर्पयेत् ॥

ॐ सनकस्तृ० ॥ २ ॥ ॐ सनन्दनस्तृप्य० ॥ २ ॥ ॐ सनातन० ॥२॥ ॐ कपिल० ॥ २ ॥ ॐ आसुरि० ॥२॥ ॐ वोढु० ॥ २ ॥ ॐ पञ्चशिख० ॥ २ ॥

एतानञ्जलिद्वयेन तर्पयेत् प्रत्येकम् । ततोऽपसव्येन ।
यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम् ।

---

( १ ) निरग्निकस्तु सर्वत्र देवपितृमनुष्यादितर्पणेषु देवादिनाम द्वितीयाविभक्त्यन्तं समुच्चार्यान्ते तर्पयामीति पदमुच्चार्य तर्पयेत्, अग्निं तर्पयामीत्यादि । कोकिलमते पितृपितामहप्रपितामहान्, मातृमातामहप्रमातामहान् प्रत्येकमञ्जलित्रयेण तर्पयेत् । स्त्रीणाञ्च सर्वत्रापितृगोत्रेण पृथक् तर्पणं, न तु सपत्नीकशब्देन । तच्च यथासंभवं अञ्जलित्रयरूपं एकाञ्जलिरूपं वा सर्वासां समानम् । इत्थञ्च तन्मते मातृत्रयमातामहत्रयस्थाने मातृमातामहप्रमातामहरूपमेकमेव त्रिकं ज्ञेयम् ।

मातृवंशे मृता ये च पितृवंशे तथैव च ॥
तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम् ॥ १ ॥

इति मन्त्रेणाञ्जलिं जलाद्बहिरुत्तरतो निःक्षिप्य, कुशांस्त्यजे-न्मन्त्रेण—

येषां न पिता न भ्राता न पुत्रो नान्यगोत्रिणः ।
ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः कुशैस्तदा ॥ २ ॥

ततो—

ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥ १ ॥

इति मन्त्रेण जलाद्बहिः स्नानवस्त्रं निःपीड्याचम्य कुशांस्त्य-क्त्वा, अन्यान् धृत्वा, सूर्यादिभ्योऽर्घं दद्यात् । ततो ऋष्यादीन् संस्मृत्य, शक्तश्चेत्तिष्ठन् हृदि तिर्यक्कृतकरः प्राङ्मुखो गायत्री-मष्टोत्तरशतं जप्त्वा सङ्कल्पं कुर्यात् । 'अनेन गायत्र्या मत्कृतेन जाप्येन रुद्रात्मा रविः प्रीयताम्' । "उत्तरे शिखरे जाता" इति विसर्जयेत् ।

ॐ उत्तरे शिखरे जाता भूम्यां पर्वतवासिनी ।
रुद्रेण समनुज्ञाता गच्छ देवि यथासुखम् ॥

ततो भासादि सामानि पठेत् । तेषामृष्यादयः । भासस्य वायुर्जगती सूर्यः । दशस्तोभस्य जमदग्निस्त्रिष्टुबग्निः । उग्नयेरयस्या-दित्योऽनुष्टुबात्मा । औशनस्य उशना गायत्र्यग्निः । शुद्धाशुद्धी-ययोरिन्द्रोऽनुष्टुबिन्द्रः । राजनरौहिणयोरिन्द्रस्त्रिष्टुबिन्द्रः । बृह-त्साम्नो भरद्वाजो बृहतीन्द्रः । रथन्तरस्य वसिष्ठो बृहतीन्द्रेशानौ । सेतुसाम्नो विशोकस्त्रिष्टुबात्मा । महानाम्नीनां प्रजापतिर्विरा-डिन्द्रः । पुरीषपदानां पदपङ्क्तिर्वा । महादिवाकीर्त्यस्य सूर्यो जग-ती सूर्यः । ज्येष्ठसाम्नां प्रजापतिस्त्रिष्टुबग्निः । देवव्रतानां देवा उत्कृती रुद्रः । पुरुषव्रतानां पुरुषोऽनुष्टुप्पञ्चानां गायत्र्यन्तिमा

आत्मा । तवश्यावीयसाम्नः प्रजापतिर्विश्वामित्रो गायत्री सविता सन्त्वाभूतानीति विश्वेदेवास्त्रिष्टुबादित्यः । उर्वीचित्रं देवानाम न्तश्चरति आदित्यस्त्रिष्टुप् गायत्री सूर्यः । उत्तरयोरादित्यो गायत्री सूर्यः । उदुत्यं चित्रमित्यतीषङ्गस्य सूर्यस्त्रिष्टुप् गायत्री सूर्यः । सधस्थस्य इन्द्रोऽनुष्टुप् सूर्यः । मरुतां भूतेर्मरुतो गायत्री सूर्यः । सार्पराज्ञीनां प्रजापतिर्गायत्री सूर्यः । घर्मरोचनस्येन्द्रोऽनुष्टुप् सूर्यः । परिधीनामिन्द्रो गायत्री सूर्यः । ऋतुसाम्न ऋतवोऽनुष्टुप् सूर्यः । चक्षुःसाम्नो मित्रावरुणौ गायत्री सूर्यः श्रोत्रसाम्नो मित्रावरुणौ त्रिष्टुप् गायत्री सूर्यः । शिरःसाम्न इन्द्रो गायत्रीत्रिष्टुभौ सूर्यः । जपे विनियोगः ॥

२र   रे   ३र २र   ३र २र   १ र २
भासम् ॥ हाउ २ हाउ । ओहा ।२। ओ हायि । इ हौहो ।३
१   १   १   १   १ र   २ १ र   १
इहियो ।३। हुम् ।३। हो ।३। हः५ ।३। इडा ।३। ऋतं मे ।३। हस् ।३
२ १   र   २ १र   २   १ र र   र   र
प्रक्षस्य वृष्णो अरुषस्य नूमा २३ हाः । मनोवचो विदथा जात
१र   २   १र र र   २ १र   २   १र
वेदा २३ साइ । वैश्वानराय मतिर्नव्यसेशु २३ चीः । सोम इव
र   र २ १   २   २र   रे   ३र २र   ३र २र
पवते चारुरग्ना २३ या ३ यि । हाउ २ हाउ । ओहा ।२। ओहायि ।
१ र २   २ १   १   १   १   १ र   २ १
इहौहो ।३। इहियो ।३। हुम् ।३। हो ।३। हः ।३। इडा ।३। ऋतं मे
१   ३   ५र र   १ र २   १   र २र
।३। हस् ।२। हा २३४। औ होवा । इहौहो । भद्रम् । इहौहो ।
२र २   १ र २र   र १   र २र   १ २   १ र २र   १
श्रेयः । इहौहो । वामम् । इहौहो । वरम् । इहौहो । सुवम् ।
र २र   १ २   १ र २र   १ र २र   १ र २र   १र   २ र
इहौहो । अस्ति । इहौहो । अभ्राजीत् । इहौहो । ज्योतिः । अभ्रा
र   १ र २र   १र २   १   र २   ३ १ १ १ १
जीत् । इहौहो । दीदिवः । ए २३। हिया हाउवा ३। भा २३४५
सू ॥ १ ॥

२र ३ ३र २र ३र २र ३र २ ९
दशस्तोभम् ॥ हाउ २ हाउ । ओहा ।२। ओहा । हाओवा ।३। ऊ
— — २र १र र २र र १र
२।३। ओ २।३। हाउ वाक् ।३। आयुर्यन् ।३। ए आयुः ।२। आयुः
१ १ १ र र र — १ १ र
।३। वयाः ।२। वयः । इन्द्रन्नरो नेमधिताहवा २ न्ताथि । यत्पा-
र र — १ र र र र — १र र
र्युनजतेधिया २ स्ताः । शूरो नृषाताश्रवसश्चका २ माइ । आगो-
र र — १ २र ३ ३र २र ३र २र
मति व्रजेम जातुवा २ न्नाः । हाउ २ हाउ । ओहा । २ । ओहा ।
र ३र र — — र १र र २र
हाओवा ।३। उ२।३। ओ २।३। हाउ वाक् ।३। आयुर्यन् ।३। ए
र १र १ ^ ३ ५र र
आयुः ।३। आयुः ।३। वयाः ।२। वा २। था २३४। औहोवा ।
२र र १र २ १ २ र १र र र ३ १ १ १ १
ए । आयुर्द्धा अस्मभ्यं वर्चोधा देवेभ्या २३४५ः ॥ २ ॥
१ २र १ २र १ र २ १ २ १
उन्नयम् ॥ उन्नयामि । होयि ।३। आदित्यं प्राञ्चं यंत मुन्न-
२र १ २·र र १र २र १ र २
यामि । होइ ।३। अहोरात्राण्यरित्राणि । होयि ।३। धौनौंहाउ ।३।
१ र र र र २ १ र र र र २
तस्य। मसावादित्य ईयते हाउ ।३। तस्मिन्वयमीयमान ईयामहे हाउ
१र र २ १रर २ २ऽ १र २ १
।३। इयामहे हाउ ।२। ईयामहे ३। हाउवा । प्रियेधामं स्त्रिय-
२ र १र २ १ २ ३ १ १ १ १
क्षरे ।२। प्रियेधामं स्त्रियक्षरे २३४५ ॥ ३ ॥
४र ५ ४ १ २
गायत्री सामौशनम् ॥ प्रेष्ठंवाः । अता २३ यिथीम् ।
१ र २ १ २ १ २ २
स्तौषे मित्रम् । इव मा २३ याम् । अग्नायि र। ३ था ३ सू ।
१ २ १ ५ ५
नावा २३ हा ३४३यि । दा २३४यो ६ हायि ॥ ४ ॥
४र ५र ४ ५ ४ ५र ४ २ १ र २ १
शुद्धाशुद्धीये ॥ एतोन्विन्द्रं स्तवा मा । शुद्धं शुद्धेनसा
२ १र र र २ १ २ १र २ १
२३ म्ना ।शुद्धैरुक्थैर्वा वृध्वा २३ं साम् । शुद्धैरा२३शी ३। र्वा

^ ३ २ ५र र ३ १ १ १ १
२ नु । ममा ३४ औहोवा । तू २३४५ ॥ ५ ॥

५र र ५ २ १ र २ १ — १
एतोन्विन्द्रꣳस्तवा ६ मा । शुद्धꣳ शुद्धे । न । साम्नार। शुद्धा-
२ २ १र ^ ३ ५ २ १र
इक्थ ३ कथा ३ इः । वावार्ध्वा २३४ꣳ साम् । शुद्धैरा २३
२ १ २ १ २ १
शी । वान्ममत्तु । इडा २३ भा ३४३ । ओ २३४५ इ । डा ॥६॥

१ ३र २र ३र २र
राजनम् ॥ हुम् ।३। हो ।३। हꣳ ।३। ओ हा ।३। औहोयि
^ ^
३र २र १ २ १ २र ३ ४ ५ १ र
।२। औहोयि । इन्द्रन्नरो । ने ३ मधि । ताहवन्तायि ।३। वयो
^
२ १ र २ र १ २ र १र २ १ २ ३
बृहत् ।३। विभ्राष्टये विधर्मणे ।३। यत्पारियाः । युनज । तायिधि-
४ ५ २ १ र १ २र १र २
यस्ताः ।३। सत्यमोजः ।३। रजः सुवः ।३। शूरोनृषा । ता ३
^
१ २ ३ ४र ५ २ १ र २ १ र र
श्रव । सश्वकामायि ।३। भद्रꣳ सुधा ।२। भद्रꣳ सुधे । षमूर्जम् ।
र २र १र २ १र २र ३ ४ ५ २ १
इषमूर्जम् ।२। आगोमतायि । व्रजेभ । जातुवन्नाः ।३। बृहद्यशः
२ १ २ १ २ १ २ २ १र र र र र
।३। दिविद्धे ३ हम् ।२। दिविद्धे ३। हाउवा । वागीडा सुवो
२ २ ३ १ १ १ १
बृहद्भा २३४५ः ॥ ७ ॥

२र १ २ १ २ १
रौहिणम् ॥ हाउ ।३। आयिही ।३। आयिहिया ।३। आ-
२ १ २ १ २ १ र र
साउ ।३। आयाम् ।२। नामाः ।३। किद् ।२। इन्द्रन्नरो नेमधि-
र — १ र र र — र र र र
ताहवा २ न्तायि । यत्पार्यायुनजते धिया २ स्ताः । शूरोनृषा
र — १ र र र र — १
ताश्रवसश्वका २ मायि । आगोमति व्रजेभ जातुवा २ न्नाः ।
१ र १ १ र
मना २३ होयि । प्राणा २३ होयि । चक्षू २३ होयि । श्रोत्रा

२३९ होयि । घोषा २३ होयि । व्रता २३९ होयि । भूता २३
होयि । पाना २३९ होयि । चित्ता २३९ होयि । धीता २३
होयि । सुवा २३ होयि । ज्योता २३ इहों २।वा २३४ औहोवा ।
ऊ २३४५ ॥ ८ ॥

बृहत् ॥ औहोयि त्वामिद्धि हवामहा ३ ए । सातौ वाजा ।
स्याकारा २३४ वाः । तुवा ३४ । औहोवा । वृत्राइ ष्वाइ ।
द्रासा ३१ त् । पतिन्वा २३४ राः । त्वां काष्ठा ३४ । औहोवा ।
स्वू २ अर्वा २३४ । ताः । उहुवा ६ हाउ । वा । हस ॥ ९ ॥

रथन्तरम् ॥ आभित्वा शूरनोनु मोवा । आदुग्धा इव धेन
व ईशानमस्य जगतः । सुवा २३ ईशाम् । आइशानमा २३ इन्द्रा
३। तास्थू २३४ षा । ओवा ६। हाउवा । अस् ॥ १० ॥

पुरुषगति ॥ हाऊ ।३। सेतूँ स्तर ।३। दुस्त । रान् ।३।
दानेनादानम् ।३। हाउ ।३। अहमस्मि प्रथमजा ऋता २३ स्या
३४५ । हाउ ।३। सेतूँ स्तर ।३। दुस्त । रान् ।३। अक्रोधेन क्रो-
धम् ।२। अक्रोधेन क्रोधम् । हाउ ।३। पूर्वं देवेभ्यो अमृतस्य ना२३
मा ३४५ । हाउ ।३। सेतूँ स्तर ।३। दुस्त । रान् ।३। श्रद्धया
श्रद्धाम् ।३। हाउ ।३। यो मा ददाति सइदे वमा २३ वा ३४५ व् ।
हाउ ।३। सेतूँ स्तर ।३। दुस्त । रान् ।३। सत्येनानृतम् ।३।

हाउ ।३। अहमन्नमन्नमदन्तमा २३ बी ३४५ । हाउ हाउ हाउ वा । एषा गतिः ।३। एतदमृतम् ।३। स्वर्गच्छ ।३। ज्योतिर्गच्छ ।३। सेतूँ स्तीर्त्वा चतुरा २३४५ः ॥ ११ ॥

महानाम्न्यः ॥ ए २। विदामघवन्विदाः । गातुमनुशँसिषः । दाइशा ३१ उवा २३। ई ३४ डा । ए २। शिक्षा शचीनाम्पताइ । पूर्वीणाम्पुरू २। वसा ३१ उवा २३। ई ३४ डा । आभिष्टमभा २ धि । ष्टिभिरा ३१ उवा २३। इ ३४ डा । स्वर्णाँ शूर। हा ३१ उवा २३। ई ३४ डा । प्रा । चेतन प्रचेतया । इन्द्रा । द्युम्नायना २ इषा इ । इडा । इन्द्रा । द्युम्नाय० । अथा । इन्द्रा । द्युम्ना० । इडा । एवा हि शक्रो राये वाजाय वा १ ज्री ३ वाः । शविष्ठ वज्रिन्ना ३। जासाइ । मँ हिष्ठ वज्रिन्ना २३ हो । जासा ३१ उवा २३। इड्इडा २३४५। आया । हि पिबमा २ त्सुवा । इडा २३४५ । ए २। विदाराये सुवीरियाम् । भुवो वाजानाम्पतिर्वश ँ २। अनुआ ३१ उवा २३ । ई ३४ डा । ए २। मँ हिष्ठवज्रिन्नृअसाइ । यः शविष्ठः शूरा २। णा ३१ उवा २३। ई ३४ डा । यो मँ हिष्ठो मघोऽ २। ना ३१ उवा २३। ई ३४ डा । अँशुर्नेशोचा २ इः । हा ३१ उवा २३ । ई ३४ डा । चायि । कित्वो अभिनोनया । ईन्द्रो । विदेतमू २ स्तुहायि । इडा । ईन्द्रो । विदे-

तमू २ स्तुहायि । अथा । ईन्द्रो । विदेतमू २ स्तुहायि । इडा ।
ईशे हि शक्रस्तमूतये हवा १ मा ३ हायि । जेतारमपरा ३। जायि-
ताम् । सनः स्वर्षदता २३ होयि । द्विाइषा ३१ उवा २३ । इट्-
इडा २३४५ । क्रातुः । छन्दक्रतता २ म्बृहात् । इडा २३४५ । ए
२ । इन्द्रं धनस्य सातयायि । हवामहे जेतारमपरा २। जितमा ३१
उवा २३। ई ३४ डा । ए २। सनः स्वर्षदतिद्विषाः । सा नः स्वर्ष-
दता २ यि । द्विषआ ३१ उवा २३। ई ३४ डा । पूर्वस्य यत्त आ
२ । द्रिवआ ३१ उवा २३। ई ३४ डा । अं शुर्मदाया २। हा
३१ उवा २३। ई ३४ डा । सू । म्न आधेहि नो वसाउ । पूर्त्ताः ।
शविष्ठशा २ स्यतायि । इडा । पूर्त्तीः । शविष्ठशा २ स्यतायि ।
अथा । पूर्त्तीः । शविष्ठशा २ स्यतायि । इडा । वशी हि शक्रो नून-
न्तन्नव्यं सा १ न्या ३ सायि । प्रभोजनस्यवा ३। त्राहान् । समर्येषु-
ब्रवा २३ होयि । वाहा ३१ उवा २३ । इट् इडा २३४५ । शूरो ।
यो गोषु गा २ च्छतायि । इडा । सखा । सुशेवो २ द्वयूः । इडा
२३४५। आयिवा । हियेवा २३४५। होयि । हो । वाहा ३१
उवा २३ । ई ३४ डा । आयि वा । हियम्ना २३४५ यि । होयि ।
हो । वाहा ३१ उवा २३ । ई ३४ डा । आयिवा । हिइन्द्रा
२३४५। होयि । हो । वाहा ३१ उवा २३ । ई ३४ डा । आयि-

२ २ ११ १ १ १ १ १ १ २र २
वा । हिपुषा २३४५ नू । होयि । हो । वाहा ३१ उवा २३। ई
५ १ २ २ २ ११ १ १ १ १ १ १ २र
३४ डा । आश्विवा । हि देवा २३४५ः । होयि । हो । वाहा ३१
२ ५
उवा २३। ई ३४ डा ॥ १२ ॥

२र २र १र
महादिवाकीर्त्यम् ॥ हाउ ।३। आयुः ।३। ज्योतिः ।२।
३र २ ५र २ २ १र २ ३ १ १ १ १
ज्योता ३४। औहोवा । ए ३। वागूज्योति २३४५ः ॥ १३ ॥

२र २ २ ३ ५र २ २र
ज्येष्ठसामानि । एवाहियेवा २३४। औ होवा । हाऽ हुऽ
२र ५र २ २ २ १ २ १ २ १
हाऽ हुऽ हुऽ ३४ । औहोवा ।३। हि येवा । हियग्नायि । हिइन्द्रा ।
२ २ १ २ २ १ १ १ १ १
हिपूषान् । हिदेवा २३४५ः ॥ १४ ॥

२ २ २ १ ५ २ १ २ २ २ २ २
वयोमनोवयः प्राणाः । वयश्चक्षुर्वयः श्रोत्राम् । वयो घोषो
२ १ २ १ २ २ २ १ १ १ १
वयो व्रातम् । वयो २३ भूताउ । वा ३। ई २३४५ ॥ १५ ॥
२ २ १ १ २ ^३ ५ २ १र
वयो मना २३ः। होइ हौवाओ २३४ वा । वयःप्राणा २३ः।
१ २ ^३ ५ २ १ १ २ १र
होयि हौ वाओ २३४ वा । वयश्चक्षू २३ः । होयि० । वयः श्रोत्रा
२ २ ^३ ५ २ २ १र १
२३ मू । होयि हौवाओ २३४ वा । वयो घोषा २३ः । होयि० ।
२ १ १ १ २ ^ २ २ १र १
वयोव्रता २३ मू । होयि हौवा० । वयोभूता २३ मू । होयि
२ ^३ ३ १ १ १ १
हौवाओ २३४५ वा ६५६ ॥ ऊ २३४५ ॥ १६ ॥

१ ^ २ २ २ १९ १
ऊऽ२र्क् । हाउ ।३। हो २ वाक् ।३। धर्मो २ धर्मः ।३। ॥१७॥
२ २ १ २ २ १ २२ २ १ २ २ २९ २ ९
धर्म विधर्म ।३। सत्यज्ञाय ।३। ऋतं वद ।३। हुऽ वंव २ वंव
१
२ वम् ।३। ॥ १८ ॥

२र २ १र २ २र २ १र २ २
औहौ होवा होयि ।२। औहौ होवा हा ३१ उ । वा २३ ।

३ ५ २ १२ २१ २ र १ २र र १र र
मू २३४ वात् । विभ्राड्बृहत्पिबतुसोम्यम् । र्ध्वौ हौ होवा होयि ।
२र र १र र २र र १र र २ ३
औहौ होवा होयि । औ हौ होवाहा ३१ उ । वा २३ । जा २३४
५ १र २ १ २५ २र१ २ २र र १र र २र
नात् । आयुर्दधद्यज्ञपतावविह्रुतम् । औ हौ होवा होयि ।२। औ
र १र र २ ३ ५ १र २र र १र २
हौ होवाहा ३१ उ । वा २३ । वा २३४ र्द्धात् । वातजूतोयो अभि·
१ २ १ र २र र १र र २र र १र र २
रक्षतित्मना । औहौ होवा होयि ।२। औहौ होवाहा ३१ उ । वा
३ ५ २ १ २ १र र २ २र र
२३ । का २३४ रात् । प्रजाः पिपर्ति बहुधा विराजति । औहौ
१र र २र र १र र २ १ र २र १र
होवा होयि ।२। औहौ होवाहा ३१ उ । वा २ । अभ्राजीज्योति·
२ र ३ १ १ १ १
रभ्राजी २३४५ त् ॥ १९ ॥

२र २ १ २ २ २ ५र र
भूमिः ।२। अन्तरिक्षम् ।२। द्यौः ।२। द्या ३४। औ होवा ।
२ २र १र १ १ १ १
ए ३। भूताया २३४५ ॥ २० ॥

१र २ १ २ १र ३र २ ५र र
द्यौः ।३। अन्तरिक्षम् ।२। भूमिः ।३। भूमा ३४। औ होवा ।
२ १र ३ १ १ १ १
ए ३। आयुषे २३४५ ॥ २१ ॥

२र १र ३र २ ५र र ३ १ १ १ १
हाउ ।३। ज्योतिः ।२। ज्योता ३४। औ होवा । ई २३४५॥२२॥

२र २र ३ ४र ५ २र २र २ १
हाउ ।३। आज्यदो हम् ।३। मूर्द्धानन्दाइ । वा ३ अर ।
२ ३ ४ ५ २र १र २ १ र २र ३ ४ ५ २ १
तिम्पृथिव्याः । वैश्वानराम् । ऋतआ । जातमग्नीम् । कविंᳫसम्रा ।
२ १ २ ३ ४र ५ २र १ २ १ २ ३ ४र ५
जा ३ मति । थिञ्जनानाम् । आसन्नः पा । त्रा ३ ज्ञन । यन्तदेवाः ।
२र २र ३ ४र ५ २र ३ ४ २र र
हाउ ।३। आज्यदोहम् ।२। आज्यदो ५ हाउ । वा । ए । आज्य·
१ २ २र र १ ३ १ १ १ १
दोहम् ।२। ए । आज्यदोहा २३४५ म् ॥ २३ ॥

हाउ ।३। हुम् । चिदोहम् ।३। मूर्द्धानन्दाइ । वा ३ अर ।
तिम्पृथिव्याः । वैश्वानराम् । ऋतआ । जातमग्नीम् । कविँ सम्रा ।
जा ३ मति । थिञ्जनानाम् । आसन्नः पा । त्रा ३ जन । यन्तदेवाः ।
हाउ ।३। हुम् । चिदोहम् ।२। चिदो ३ । हाउ । वा ३। इ
२३४५ ॥ २४ ॥

हाउ ।३। च्याहम् ।३। मूर्द्धानन्दाइ । वा ३ अर । ति० ।
पूर्ववत् । हाउ ।३। च्योहम् ।२। च्यो ३ हाउ । वा ३। ए ३। ऋतम् २५

आधिप । ताइ । मित्रप । ताइ । क्षत्रप । ताइ । स्वः पताइ ।
धनपता २ इ । ना २ माः । मन्युना वृत्रहा सूर्येण स्वराड्यज्ञेन म-
घवा दक्षिणास्य प्रिया तनुराज्ञा विशन्दाधार । वृषभस्त्वष्टा वृत्रेण
शची पतिरन्नेन गयः पृथिव्या सृणिकोऽग्निना विश्वम्भूतम । ऋभवो
वायुना विश्वाः प्रजा अभ्य पवथावषट्कारेणार्द्धभाक्सोमेन सोमपाः
समित्या परमेष्ठी।ये देवा देवाः । दिविषदः । स्थ तेभ्यो वो देवा दे-
वेभ्यो नमः । ये देवा देवाः । अन्तरिक्ष सदः । स्थ तेभ्यो वो० । ये
देवा देवाः । पृथिवीषदः । स्थ तेभ्यो वो० । ये देवा देवाः । अप्सु-
षदः । स्थ तेभ्यो वो० । ये देवा देवाः । दिक्षुसदः । स्थ तेभ्यो वो० ।
ये देवा देवाः । आशासदः । स्थ तेभ्यो वो० नमः । अवज्यामिव
धन्वनो विते मन्युञ्जयामसि मृड ताम इह अस्मभ्यम् । इडा २३

२ १ २ २ १ १ ३
भा । य इदं विश्वम्भूतम् । युयो ३ । आउ । वा २३ । ना
५
२३४ माः ॥ २६ ॥

१ २ १ १ २ १ १ २ १ १ २ १
अधिप । ताइ । मित्रप । ताइ । क्षत्रप । ताइ । स्वःपताइ ।
१ २ — — १ १ २ १ २२ २ १२ २
धनपता २ इ । ना २ माः । नम उत्त तिभ्यश्चोत्तन्वानेभ्यश्च
१ २ २१ १ २२ २ १ २ १२ २ २१ २२२
नमो निषङ्गिभ्यश्चोपवीतिभ्यश्च नमो स्यद्भ्यश्च प्र । तिदधानेभ्यश्च
१ २१ २ २१ २१२ १ २ २ १ २
नमः प्रविध्यद्भ्यश्च प्रव्याधिभ्यश्च नमः त्सरद्भ्यश्च त्सारिभ्यश्च
१ २२ १२ २ २ १ २ १२ १ २ २ १ २
नमः श्री । तेभ्यश्च श्रायिभ्यश्च नम स्तिष्ठद्भ्यश्चो पतिष्ठद्भ्यश्च
१ २ २१२ २ १२ २ १ २१२ २ १ २२ १ २ १२ २
नमो यतेच वियते च नमः पथे च विपथाय च । अव ज्यामिव
१ २२१२ २१ २२ १ २ २ १ २१ २ १
धन्वनोविते मन्युन्नयामसि मृड तान्न इह अस्मभ्यम् । इडा २३
२ १ २ २ १ ३
भा । य इदं विश्वम्भूतम् । युयो ३ । आउ । वा २३ । ना २३४
५
माः ॥ २७ ॥

१ २ १ १ २ १ १ २ १ २२
अधिप । ताइ । मित्रप । ताइ । क्षत्रप । ताइ । स्वः पताइ ।
१ २ — — १ २ २२ १ २ २ २ २ १२
धनप ता २ इ । ना २ माः । नमोऽन्नाय नमोन्नपतय एकाक्षाय
२२ २ १२ २ १२२ १ २१२ २२ १२२१ २१२ २१
चावपन्नादाय च नमो नमः । रुद्राय तीरसदे नमः स्थिराय स्थिर
२२१२ २ २२ १२ २ २२ १ २२
धन्वने नमः प्रतिपदाय च पटरिणे च नमस्त्रियम्बकाय च क ।
२१२ २ १ २२ २१२ २ २ २१२ २ १ २१२ २
पर्दिने च नम आश्रायेभ्यश्च प्रत्याश्रायेभ्यश्च नमः क्रव्येभ्यश्च वि-
१२ २ १ २२२ २ १२२ १२ १२ २ १ २२ १२
रिम्फेभ्यश्च नमः संवृते च विवृते च । अव ज्यामिव धन्वनोविते
२१ २२ १ २ २ १ २ १ २ १ २ १
मन्युन्नयामसि मृड तान्न इह अस्मभ्यम् । इडा २३ भा । य इदं

२ २ १ ३ ५
विश्वम्भूतम् । युयो ३ । आउ । वा २३ । ना २३४ माः ॥२८॥
२१ २ २१ २
पुरुष व्रतानि । उहुवा हाउ । ३ । सहस्र शीर्षाः पुरु २३
२ २ १ २१ २ १२ २१२
षाः । सहस्राक्षः सहस्रा २३ पात् । सभूमिꣳ सर्वतो वा २३
२ १ २१२ २ २१ २ २१९
त्वा । अत्यतिष्ठ दशाङ्गु २३ लाम् । उहुवा हाउ । २ । उहुवा
२ २ १ ११११
३ हाउ । वा ३ । इट् इडा २३४५ ॥ २९ ॥

२१ २ १ — २१२२ २ २ १२२ २
उहु वौ होवा २।३। त्रिपादूर्ध्व उदैत्पुरु २३ षाः । पादोस्ये-
२ २१ २ १२ २१ २ २ २
हा भवत्पु २३ नाः । तथाविश्वङ्वियक्रा २३ मात् । अशनान-
१२ २ १ २ २ — २१२ १ ^ ३
शनेआ २३ भी । उहुवौ होवा २।२। उहुवौ । हो २। वा २३४।
५२ २ ३ ५ २१२ २ — २१२ ^
औहोवा । इ २३४ डा । उहुवौ होवा २।२ । उहुवौ । हो २ ।
२ ५२ २ ३ ५ २१२ २ —
वा २३४ । औहोवा । सु २३४ वाः । उहुवौ होवा २ । २ ।
२१२ २ ^ ३ ५२ २ ३ ११११
उहुवौ । हो २ । वा २३४ । औहोवा । ऊ २३४५ ॥ ३० ॥

१ २ २ — १ २२ २ १ २ २
इयौ होवा २ ।३। पुरुष एवेदꣳ सा २३ र्वाम् । यद्भूतं यच्च
१२ २ १२१२ २ २ २ २१२ २२१
भावा २३ याम् । पादोऽस्य सर्वा भूता २३ नी । त्रिपादस्यामृत-
२ १२ २ — १२ १ ^ ३
न्दा २३ इवी । इयौ होवा २ । २ । इयौ । हो २ । वा २३४ ।
५२ २ ३ ५ १२ २ — १२ १ ^ ३
औहोवा । ई २३४ डा । इयौ होवा २ । २ । इयौ । हो २ । वा
५२ २ ३ ५ १२ २ — १२
२३४ । औहोवा । ज्यो २३४ तीः । इयौ होवा २ । २ । इयौ ।
१ ^ ३ ५२ २ ३ ११११
हो २ । वा २३४ । औहोवा । इ २३४५ ॥ ३१ ॥

२२ १२२२ १ २ २२
हाउ । ३ । तावानस्य । महा २३ यिमा ३ । हाउ । ३ ।

१ र   र र   २ १र   २   २र   २ १र   १
ततो ज्याया॑३ श्च पुरू २३ षा ३ः । हाउ । ३ । उतामृतत्वस्ये-
र   २र   १ र र २ॢ१र   २   र
शा २३ ना ३ः हाउ । ३ । यदन्नेनातिरोहा२३ ती ३ । हाऽ
र   १   १ १ १ १
उ । ३ । वा ३ । इड् इडा २३४५ ॥ ३२ ॥

र   १ र २ १र २र   २   २ १र
हाऽ उ ३ वा । ततो विराडजायत । हाऽउ ३ वा । विरा-
२र १ २ १र २   २   १ २र १र   २   २
जो अधिपूरुषः । हाऽउ ३ वा । स जातो अत्यरिच्यत । हाऽउ ३
२ १र २ २ १ र २ १   २   १ १ १ १
वा । पश्चाद्भूमिमथो पुरः । हाऽउ ३ वा ३ । ई २३४५ ॥३३॥

२र   १ २ १ २   १ २ १ २
हाउ । ३ । अस्मिनस्मिन् । ३ । नृम्णाइ नृम्णम् । ३ ।
१   २   २ र   १ २   र र
निधाइमाहे । ३ । कयानश्चित्रा ३ आभू १ वा २ त् । ऊती स-
र   १   २ र   १ २
दावृ ३ धाः सा १ खा २ । कया शचिष्ठा ३ यावा १ र्ता
२र   १ २ १ २   १ २ १ २
२३ । हाउ । ३ । अस्मिनस्मिन् । ३ । नृम्णाइ नृम्णम् । ३ ।
१   २   १   १   ३   ५र र   १
निधाइमाहे ।२। निधा २३ यि । मा २ । हा २३४ औहोवा । सुव-
र ३ १ १ १ १
र्ज्योति २३४५ः ॥ ३४ ॥

२र   १
तवश्यावीयम् ॥ हाउ । ३ । ऊ २ । ३ । हुऊ २ । ३ ।
१   २   १ २ ऽ २   २   १   १ १ १ १
इया हाउ । २ । इया ३ हाउ । वा ३ । इड्इडा २३४५ ॥ ३५ ॥
२   २ १   २ १   २र २र २र   १ र
हाऽउ ३ वा । अग्निरस्मि जन्मना जातवेदाः । इडा । सुवः ।
१ र   २   २र २र १ २ १ २ र १   १ र   १
इडा । हाऽउ ३ वा । घृतं मेचक्षुरमृतं म आसन् । इडा । सुवः ।
र   २   २ १र   २ १र   २र १र २   १ र   १
इडा । हाऽउ ३ वा । त्रिधातुरर्को रजसो विमानः । इडा । सुवः ।
१ र   २   १ २   १र २ १   २ १ २   १ र
इडा । हाऽउ ३ वा । अजस्रं ज्योतिर्हविरस्मि सर्वम् । इडा ।
१   १ र
सुवः । इडा ॥ ३६ ॥

२र २र र १ र २
हाउ। ३। पात्यग्निर्विपो अग्रं पदं वेः। हा ३१ उवा २३।
३ ५ ५ २ ३ ५
सू२३४ वाः। इह। हा ३१ उवा २३। ज्यो २३४ तीः।
२र २र र २ २ २
हाउ। ३। पाति यह्वश्चरणᳪ सूरियास्या। हा ३१ उवा
३ ५ २ २ ३
२३। सू२३४ वाः। इह। हा३१उवा२३। ज्यो२३४
५ २र २र र र र र१ २ २
तीः। हाउ। ३। पातिना भा सप्तशीर्षाणमाग्निः। हा३१उवा-
३ ५ २ २ ३ ५
२३। सू२३४वाः। इह। हा३१उवा२३। ज्यो२३४तीः।
२र २र र र र र१ २ २
हाउ। ३। पाति देवानामुपमादमार्ष्वः। हा३१उवा२३। सू२३४
५ २ २ ३ ५
वाः। इह। हा३१उवा२३। ज्यो२३४तीः॥ ३७॥

१ — १ २ २१ र १
इया २। ३। इया हाउ। ३। इन्द्रं नरो। ने ३ माधि।
२र३४५ २ १ २र ३र २ १ र २ १र
ताहवन्ताइ। हवन्ते ३। हᳪहᳪहाᳪहाᳪहᳪ। ३। हवन्ते। ३। यत्पा-
२१ २ ३४ ५ २ १ २र ३र २
रियाः। युनज। तायिधियस्ताः। धियस्ता ३ः। हᳪहᳪहाᳪहाᳪहᳪ
२ २र१र २ १ २३ ४र ५
। ३। धियस्ताः। ३। शूरोनृषा। ता ३ श्रव। सश्वकामायि।
२ र १ २र ३र २ १ र र २र१र
चकामे ३। हᳪहᳪहाᳪहाᳪहᳪ। ३। चकामे। ३। आगोमतायि।
२ १र २र३४ ५ २ १ २र ३र २
व्रजेभ। जातुवन्नाः। तुवन्ना ३ः। हᳪहᳪहाᳪहाᳪहᳪ। ३।
१ १ — १ २ १ २ १ ५ २
तुवन्नः। ३। इया २। ३। इया हाउ। इयाहाउ। इया ३ हाउ।
र र१ र १
वा। ए। व्रतमेसुवरे शकुनः॥ ३८॥

२र र १ २ १र र २ —
भ्राजा औहोहो हायि। त्वग्ने समिधानादी १ दिवा २ः।

र र १ २ १ २ — २ १
जिव्हा औहोहोहायि । चरत्यन्तारा १ सानी २ । सत्वा औ-
१ १ २ १ र २ २ १
हो हो हायि । नो अग्ने पयसावसू ३ वीत् । रयिं वर्चो
२ ३१ २ १ — १ २ ४ ५ ४
दशौहो ३ । हुम्मा २ । दा । औ ३ होवा । हो ५ इ । डा ॥३९॥
१ र १ र १ २ १ २ १ २ १र
[ ॐ भूः । ॐ भूमिर्दिवमन्तरिक्षम् । ॐ भुवः । ॐ ऋचो यजूꣳ
२ र १२ १ र र र २ १११ १ २१ १र र र
षि सामानि । ॐ भार्गो देवस्य धीमाही ३४५ । ॐ प्राणोऽपानो
र र २ र १ २ १र र २ १११ १ १
व्यानः समान उदानः । ॐ धियो योनः प्रचो ३४५ । ॐ महः । ॐ
१ १ १ १ २१र र २ १
जनः । ॐ तपः । ॐ सत्यम् । ॐ पुरुषाः । ॐ पुरोरजो अमृतोम् ।
२ १११ १ — १ २ १११ र
ॐ हꣳ ३४५ । हुम् । आ २ । दायो । आ ३४५ । ॐ भूमिरन्त-
२ १र र १ १ ^ २र २
रिक्षं द्यौः । ॐ तत्सवितुर्वरेणियोम् । ॐ ऊऽ २ कूं । हाउ । ३ । होऽ
२ १ र र २ १ १ ^ २र
३ वाक् । ३ । ॐ ऋचोयजो अमृतोम् । ऊ २ कूं । हाउ । ३ ।
२ २ २ २२१र र र र र र २१ २१र
हो ३वाक् । ३।३। ॐ प्राणोऽपानो व्यानः समान उदानः । धियो
र २ १११ २ १ ^ २र २
योनः प्रचो ३४५ । ॐ ऊऽ २ कूं । हाउ । ३ । हो ३ वाक् । ३ ।
२ ऽ र १२ १ २ २ १ र २ २ १
धर्मो २ धर्मः । ३ । धर्म विधर्म । ३ । सत्यं गाय । ३ । ऋतं
२ २ १९ १९ १
वद । ३ । हꣳ वंव २ वं व २ वम् । ३ । ॥४० ॥]

तदश्यावीयं प्रयुञ्जानः शुचिः पूतो ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते न च पुनरावर्त्तते ।

१ र २१२र २ १ र र २र १
सन्त्वा भूतान्यैरयन् । होयि । सन्त्वाभव्यान्यैरयन् । होयि ।
१ र २ १र२ १ १ र २र २
सन्त्वा भविष्यदैरयत् । होयि । सन्त्वा भुवनमैरयत् । होयि ।
१ र २र२ २ १
सन्त्वा भूतमैरयत् । होयि ॥ १ ॥

१ —१ १ —१ १ —१ १
उवी २उवि। उविहो २ उवि। ३। इती २ इति। इति
—१ १ —१ १ —१ १र
हो २ इति। ३। असी २ असि। असिहो २ आसि। ३। अरु-
२र १ २ १र —१ १ —१
रुचो दिवं पृथिवीम्। असी २ आसि। आसि हो २ आसि। ३।
१ २ २१र२ २र ९ १ १२ ३ ५
पतिर। स्यपामोषधीना ३ मू। ओयि। पतायिरा २३४ सी। ३।
१ २र१र२१ १ २र १ २ २ १ २२र २१र२ २ १
चायि। त्वं देवाना मुदगादनीकम्। वायि श्वेषां देवाना२ समि-
२ १र २ १र ९ १ १र १
दजस्रं ज्योतिराततरम्। होयि। ३। आयुर्यन्। ३। अवः। ३।
१ २१ २ १ २ र१र २ ३ २
चक्षुर्मित्रस्य वरुणस्याग्नेः। सुवः स २ सर्पस २ सार्पा। ३।
२१र —१ १ —१ — २
जनावन २ सुवा २ स्सुवः। जना २ वना २ मू। सुवा २ः
१ १र र र र र ७ २ २
सुवः। ३। आ प्राद्यावा पृथिवी आन्तरि २ ३क्षा३म्। स्तपिप्र-
र र र २ र र र२१ २ र र र
स्तपीएही। ३। अस्तोषतस्वभानवाएही। विप्रानविष्ठयामता
र र र र र र र र २ र
एही। ग्रावाणो वर्हिषि मिया एही। इन्द्रस्यर२ हियं बृहा-
र र १ — १ — १ — २
दैही। इन्द्रा २। स्यरा २। हियार२म्। बृहदिन्द्रस्यर २
र र र १र र र ७ २
हियं बृहा दैही। ३। सूर्य आत्मा जगतस्तस्थुषा २३ श्चा ३।
२ र र र र र र र र र र
अन्तश्चरति रोचना एही। ३। अस्य प्राणादपानता एही
२ र र र र १र २र १र २र
। ३। व्यख्यन्महिषो दिवामैही। ३। प्रो एति प्रो एति। ३।
१ २र १ २र १ र २ ५र र २
प्रो। एति। प्रो। एति। प्रो २३। एना ३४ औहोवा। ए ३।
२र१र र र ३ १ १ १ १
देवा दिवा ज्योती २ः४५ः॥ २॥
१ ९ १ ९ १ २ र
उवी २।३। हिगी २।३। हिगिगि। ३। आयङ्गौः पृश्निर-

२ १ २ २ १ २ १ २ .२
क्रमीदैही । ३ । असदन्मातरं पुरा ऐही । ३ । पितरं च प्रयं
२ ८ २ १ ९ १ ९ १ २
त्स्वा ऐही । ३ । उवी २ । ३ । हिगि २ । ३ । हिगिगि । ३ । ॥ ३ ॥
२ १ २ १ २ १ २र २
उवी । ३ । हिगी । ३ । हिगिगी । ३ । आयङ्गौः पृश्निर-
२ १ २ २ १ १ २ २ २ २ १ २
क्रमीदैही । असदन्मातरं पुरा ऐही । पितरञ्च प्रयन्त्स्वाऐही ।
२ १ २ १ २ १
उवी । ३ । हिगी । ३ । हिगिगी । ३ ॥ ४ ॥

२१ २ २^ ३र २र ३र २ २ २ २ १
हाउ हाउ हाउ । भ्राजा ओवा । ३ । उदुसञ्जा । ३ । चित्रं
२ १ २ ७ २ २र १ २^ २र २र ३र २
देवानामुदगादनी २३ का ३ म् । हाउ हाउ हाउ । भ्राजाओवा
२र १ ७ २
। ३ । तवेदसम् । ३ । चक्षुर्मित्रस्य वरुणास्य आ २३ ग्ना ३
२र २ २^ ३र २र ३र २ २र २ १र २
यिः । हाउ हाउ हाउ । भ्राजाओवा । ३ । देवंवहा । ३ । आप्रा-
२ १ २ ७ २ २र २ २^ ३र २र
द्यावा पृथिवी आन्तरी २३ क्षा ३ म् । हाउ हाउ हाउ । भ्राजा-
३र २ २ २ १र २ २ ७ २
ओवा । ३ । तिकेतवः । ३ । सूर्य आत्माजगतस्तास्थुषा २३ श्चा
२र २ २^ ३र २र ३र २ २ २ २ १र
३ । हाउ हाउ हाउ । भ्राजाओवा । ३ । दृशेविश्वा । ३ । सूर्य
२ २ ७ २ २र २ २^ ३र २र ३र
आत्मा जगतस्तास्थुषा २३ श्चा ३ । हाउ हाउ हाउ । भ्राजाओ-
२ २र १ २ २
वा । ३ । यस्सूर्यम् । २ । यस्सू २३ रियाउ । वा ३ । ए ३ ।
२र ३र २ २ ३ १ १ १ १
देवादिवा ज्योती २३४५ः ॥ ५ ॥
२र १ १ २र १ २ २र २ १र २ २र
हाउ । ३ । सहो भ्राज । २ । सहोभ्राजा । पोभ्राजा ।
१र २ २र १र २ २ १ २ २र १ २र २ १
पोभ्राजा । पोभ्राज । अभ्राजीत् । ३ । व्यभ्राजीत् । ३ । अदि-

द्युतत् ।३। अदिद्युतद्भिश्वम्भून २ महोभू २ हात । अदिद्युत दभ्राद् भ्रा २ भ्राट् । आदिद्युतद्धर्मो अरू २ चात् । आदिद्युत- द्धर्मउषसो अरोचा २ याः । हाउ । ३ । सहोभ्राज । २ । सहो- भ्राजा । पोभ्राजा । पोभ्राजा । पोभ्राज । अभ्राजीत् । ३ । व्य- भ्राजीत् । ३ । आदिद्युतत् । २ । आदिद्युता ३ त् । हाउवा । ए । अदिद्युतद्धर्मो अरूरुचदुषसा न्दिवि सूर्यो विभाती २३४५ ॥ ६ ॥

औहो औहोवा । होयि । २ । औहो औहोवा । हा ३१ उ । वा २३ । भू २३४ वात् । अन्तश्चरतिरोचना । औहो औहोवा । होयि । २ । औहो औहोवा । हा ३१ उ । वा २३ । जा २३४ नात् । अस्य प्राणादपानती । औहो औहोवा । होयि । २ । औहो औहोवा । हा ३१ उ । वा २३ । वा २३४ द्धात् । व्यख्यन्महि- षोदिवम् । औहो औहोवा । होयि । २ । औहोऔहोवा । हा ३१ उ । वा २३ । का २३४ रात् । औहोऔहोवा । होयि । २ । औहो औ होवा । हा ३१ उ । वा २३ । भू २३४ तीः । औहो औहोवा । होयि । २ । औहो औहोवा । हा ३१ उ । वा २ । अभ्राजीज्योतिरभ्राजीत् । औहो औहोवा । होयि । २ । औहो औहोवा । हा ३१ उ । वा २३ । ए ३ । सर्वान्कामानशीमही २३४५ ॥ ७ ॥

हाऽउ३वा । इन्दुः । भ्राजा ओवा । ३ । आयङ्गौः पृश्निरक्र-

२ १ १ २ऽ १ २ ३१ २१ ३१ २ २ २
मीदेही । हाऽउ३वा । इडा । आजा ओवा । ३ । असदन्मातरम्पु
२ २ २ २ऽ १ २१ ३१ २१ ३१ २ २
रा ऐही । हाऽउ३वा । सात्यम् । आजा ओवा । ३ । पितरञ्च
२ २ २ २ऽ १ २
प्रयन्त्स्वा ऐही । हाऽउ३वा । दीर्योः ॥ ८ ॥

२ ऽ १ २ ३१ २१ ३१ २ २ २ २
हाउऽ३वा । भूतम् । आजा ओवा । ३ । अन्तश्चरतिरोचना
१ २ २ऽ १ २१ २१ २१ ३१ २ २ २ २ २
ऐही । हाऽउ३वा । पृथिवी । आजा ओवा । ३ । अस्यप्राणादपा-
२ २ २ २ऽ १ २ ३१ २१ ३१ २ २
नता ऐही । हाऽउ३वा । साहः । आजा ओवा । ३ । व्यख्यन्महि-
२ २ २ २ २ऽ १ २
षो दिवामैही । हाऽउ३वा । तेजः ॥ ९ ॥

२ ऽ १ २ ३१ २१ २१ २ २ २ २
हा उ३वा । आपः । आजा ओवा ।३ । त्रिꣳशद्धाम विराजता
२ २ २ऽ १ २ ३१ २१ ३१ २ २१ २ २
ऐही । हाऽउ३वा । ऊषा । आजा ओवा । ३ । वाक्पतङ्गायधीय-
२ २ २ २ऽ १ २ ३१ २१ ३१ २ २ २
ता ऐही । हाऽउ३वा । दीप्तः । आजा ओवा । ३ । प्रतिवस्तोरहद्यु-
२ २ २ २ऽ १ २
भा ऐही । हाऽउ३वा । ज्योतिः ॥ १० ॥

२१ २ २ २१ १ २१२ २ २ २२
उच्चंल्लोकान रोचयः । होयि । इमांल्लोकानरोचयः ।
१ २ २१ २ २१ १ १ २१ १ २१ १ ३
होयि । प्रजा भूतमरोचयः । होयि । विश्वम्भूतमरोचयः । हो२हा
५१ २ २ १२ २ ३ १ १ १ १
२३४ औहोवा । घर्मोज्योती २३४५ः ॥ ११ ॥

२१ २ १ ३१ २१ ३१ २ २ २ १ २ १
हाउ हाउ हाउ । आजा ओवा ।३। दिदीहि विश्वतस्पृथुः ।

उदुत्यज्ञाता ३ वाइदाऽ १ सा२म् । देवं वहन्ती ३ कायिताऽ १
वा २ः । दृशे विश्वाया ३ सूराऽ१ या२म् । अपत्ये ताया ३ वौ
याऽ १ था २ । नक्षत्रायन्ती ३ या क्तूऽ १ भा२यिः । सूराय-
विश्वा ३ चाक्षाऽ १ सा२यि । अदृश्रन्नस्या ३ कायिताऽ १
वा २ः । विरश्मयोजा३ना ४ आऽ १ नू २ । भ्राजन्तो अग्ना ३
योयाऽ१ था २३ । हाउ हाउ हाउ । भ्राजा ओवा । २ । भ्राजा ३
ओ५वा ६५६ । ई २३४५ ॥ १२ ॥

हाउ हाउ हाउ । शुक्रा ओवा । ३ । दिदीहि विश्वतस्पृथुः ।
उदुत्यज्ञाता ३ वाइदाऽ १ सा२म् । देवं वहन्ती ३ कायिताऽ १
वा २ः । दृशे विश्वाया ३ सूराऽ१ या२म् । अपत्ये ताया ३ वौ
याऽ १ था २ । नक्षत्रायन्ती ३ या क्तूऽ १ भा२यिः । सूराय-
विश्वा ३ चाक्षाऽ १ सा२यि । अदृश्रन्नस्या ३ कायिताऽ १
वा २ः । विरश्मयोजा३ना ४ आऽ १ नु २ । भ्राजन्तो अग्ना ३
योयाऽ१ था २३ । हाउ हाउ हाउ । शुक्रा ओवा । २ ।
शुक्रा ३ ओ ५ वा ६५६ । ई २३४५ ॥ १३ ॥

हाउ हाउ हाउ । भूता ओवा । ३ । दिदीहि विश्वतस्पृथुः ।
तरणिर्विश्वा ३ दार्शाऽ १ ता २ः । ज्योतिष्कृदसी ३ सूराऽ १
या २ । विश्वमाभासी ३ रोचाऽ १ ना२म् । प्रत्यङ्देवा ३ नां-

वाऽ१ यिशा २ः। प्रत्यङ्देषी३मानू १ षा२न्। प्रत्यङ्विश्व३
सू३वार्दृऽ १शा२यि। येनापावका३चाक्षाऽ १ सा २। भुरण्यन्तञ्जा
३ना३आऽ१ नु २। त्वंवरुणा३पाश्याऽ१सा२३यि। हाउ हाउ
हाउ। भूता ओवा। २। भूता ३ओऽ२वा ६५६। ई २३४५॥१४॥

हाउ हाउ हाउ। तेजा ओवा। ३। दिदीहि विश्वतस्पृथुः।
तरणिर्विश्वा ३ दार्शाऽ १ ता २ः। ज्योतिष्कृदसी ३ सूराऽ १
या २। विश्वमाभासी ३ रोचाऽ १ ना२म्। प्रत्यङ्देवा ३ नां-
वाऽ१ यिशा २ः। प्रत्यङ्देषी३मानू १ षा२न्। प्रत्यङ्विश्व३
सू३वार्दृऽ १शा२यि। येनापावका३चाक्षाऽ १ सा २। भुरण्यन्तञ्जा
३ना३आऽ१ नु २। त्वंवरुणा२पाश्याऽ१सा२३यि। हाउ हाउ
हाउ। तेजा ओवा। २। तेजा ३ ओऽ ५ वा ६५६। ई
२३४५॥ १५॥

हाउ हाउ हाउ। सत्या ओवा। ३। दिदीहि विश्वतस्पृथुः।
उद्यामेषिरा ३ जाः पाऽ १ थू २। अहामिमानो ३ आक्तू ऽ १
भा २ यिः। पश्यञ्जन्मानी ३ सूरा ऽ १ या २। अयुक्तसप्ता ३
शुन्ध्यू ऽ १ वा ऽ २ः। सूरोरथस्या ३ नाप्त्रा ऽ १ या २ः।
ताभिर्याति स्वा ३ युक्ता ऽ १ यिभी २ ः। सप्तत्वाहरी ३ तोरा
ऽ१ था २ यि। वहन्ति देवा ३ सूरा ऽ १ या २। शोचिष्केशवी

१ २ २र र रै ३ २र ३र र
३ चाक्षा ऽ १ णा २३ । हाउ हाउ हाउ । सत्या ओवा । २ ।
३ २ ४ ३ १ १ १ १
सत्या ३ ओ ५ वा ६५६ । इ २३४५ ॥ १६ ॥
२र र रै ३ २र ३र र २ र १ २ १
हाउ हाउ हाउ । ऋता ओवा । ३ । दिदीहि विश्वतस्पृथुः ।
२ र १ १ २ — २ र र १ २
उद्यामेषिरा ३ जाः पाऽ १ थूँ २ । अहामिमानो ३ आक्तू ऽ १
— २ र १ २ — २
भा २ यिः । पश्यञ्जन्मानी ३ सूरा ऽ १ या २ । अयुक्तसप्ता ३
१ २ — २र र १ २ —
शुन्ध्यू ऽ १ वा ऽ २ः । सूरोरथस्या ३ नाप्त्रा ऽ १ या २ः ।
२र र १ २ — २ र १ २
ताभिर्याति स्वा ३ युक्ता ऽ १ यिभि २ ः । सप्तत्वाहरी ३ तोरा
— र १ २ — २र र
ऽ १ था २ यि । वहन्ति देवा ३ सूरा ऽ १ या २ । शोचिष्केशंवी
१ २ २र र रै ३ २र ३र र
३ चाक्षा ऽ १ णा २३ । हाउ हाउ हाउ । ऋता ओवा । २ ।
२ ३ ४ ३ १ १ १ १
ऋता ३ ओ ऽ ५ वा ६५६ । इ २३४५ ॥ १७ ॥
१ १ २र १ २र १र २र १र २र १ २ १र २ १ २
वाक् । मनः प्राणः प्राणो ऽपानो व्यानश्चक्षुः श्रोत्रं ॐ शर्म-
१ २ १र २ १र २र १ १
वर्म भूतिः प्रतिष्ठा । आदित्यः पिङ्यम् । ३ । आयुः पिङ्यम् ॥ ३ ॥ १८ ॥
२ २र १ २ — २
अन्तर्देवेषू ३ रोचा १ सा २ यि । ३ । अन्तश्चरती ३
१ २ — २ र र १ २ — २
रोचा १ ना २ । अस्य प्राणादा ३ पाना १ ता २ यि । व्यख्य-
१ २ — २ र र १ २ —
न्महो ३ षोदा १ यिवा २ सू । अन्तर्देवेषु ३ रोचा १ सा २ यि
२ २र १ २ ^ ३ ५र र
। २ । अन्तर्देवेषू ३ रो २३ । चा २ । सा २३४ । औहोवा ।
२ २र १र र र ३ १ १ १ १
ए ३ । देवादिवाण्योती २३४५ः ॥ १९ ॥
२र र र र १ र २ २र १ र २ १
हाउ हाउ हाउ । भ्राजाभ्राज । ३ । आयुरायुः । ३ । उद्‌-

२ र र२ २१ २र र ७ २
त्यज्ञा । ३ । तवेदसम् । ३ । चित्रन्देवानामुद्गादनी २३ का ३
२र २र १ र २ २र १ र २ १र
म् । हाउ । ३ । भ्राजा भ्राज । ३ । आयुरायुः । ३ । देवं-
२ र १ ७ २ २र
वहा । ३ । चक्षुर्मित्रस्य वरुणास्यआ २३ ग्ना ३ यिः । हाउ ।३।
२र १ र २र १ र २ १ र २ १र र र र
भ्राजाभ्राज । ३ । आयुरायुः । ३ । तिकेतवः । ३ । आप्राद्यावा
र ७ २ २र २र १ र २
पृथिवी आन्तरी २३ क्षा ३ म् । हाउ । ३ । भ्राजाभ्राज । ३ ।
२र १ र २ १ र २ र १र र र ७
आयुरायुः । ३ । दशो विश्वा । ३ । सूर्य आत्मा जगतस्तास्थुषा
२ २र २र १ र २ २र १ र २
२३ श्चा ३ । हाउ । ३ । भ्राजाभ्राज । ३ । आयुरायुः । ३ ।
१ र २ १ २ २ २ २र १र र र ३
यस्सूर्यम् । ३ । यस्सू २३ रियाउ । वा ३ । ए ३ । देवा दिवाज्योती
२ १ १ १
२३४५ः ॥ २० ॥

२र र रि ३र २र ३र र २ र २ऽ
हाउ हाउ हाउ । भ्राजाओवा । ३ । उदुत्यज्ञा । ३ । हाउ
१ २ १ र र र७ २ २र
३ वा । आर्चिः । इन्द्रस्सरो नेमधिताहवा २३ न्ता ३ यि । हाउ
र रि ३र २र ३र र २र २ऽ
हाउ हाउ । भ्राजाओवा ।३। तवेदसम् । ३ । हा ऽ उ ३ वा ।
१ २ २र र रि ३र २र ३र र २र र
शोचिः । हाउ हाउ हाउ । भ्राजा ओवा । ३ । देवंवहा । ३ ।
२ऽ १ २ १ र र ७ २
हा ऽ उ ३ वा । तापः । यत्पार्यायुनजताायिधिया २३ स्ता
२र र रि ३र २र ३र र २ र
३ ः । हाउ हाउ हाउ । भ्राजा ओवा । ३ । तिकेतवः । ३ ।
२ऽ १ २ २र र रि ३र र ३र र
हा ऽ उ ३ वा । हारः । हाउ हाउ हाउ । भ्राजा ओवा । ३ ।
२ र २ऽ १ २ १र१ र र
दशोविश्वा । ३ । हा ऽ उ ३ वा । साहः । शूरोनृषा ताश्रवसा-
७ २र र रि ३र ३र ३र र
श्चक २३ मा ३ यि । हाउ हाउ हाउ । भ्राजा ओवा । ३ ।

२ र २ऽ १२ २र र २ ३र२र
यसूर्यम् । ३ । हा ऽ उ ३ वा । नारः । हाउ हाउ हाउ । भ्राजा
३र र २ र र २ऽ १र र
ओवा । ३ । दृशोविश्वा । ३ । हा ऽ उ ३ वा । भा २ : । आगो
र र ७ र २र र २ २ २र
मति व्रजेभ जातुवा २३ भा ३ : । हाउ हाउ हाउ । भ्राजा
३र र २ ऽ ३ १११११
ओवा । ३ । यसूर्यम् । ३ । हा ऽ उ ३ वा ३ । इ २३४५ ॥२१॥

ततः सन्त्वा भूतानीत्यारभ्य उन्नयामीति यावत्पठनीयानि ।

इति मध्याह्नसन्ध्याप्रयोगः ॥

## अथ क्रमप्राप्तो ब्रह्मयज्ञप्रयोगः ।

पादौ हस्तौ प्रक्षाल्य, द्विराचम्य, प्रागग्रेषु दर्भेषु प्राङ्मुख आसीनो दर्भपाणिर्देशकालौ सङ्कीर्त्य 'परमेश्वरप्रीतये ब्रह्मयज्ञमहं करिष्ये' इति सङ्कल्प्य, हस्तौ गोकर्णाकृतिवज्जान्वोरुपरि विन्यस्य, मस्तकादीन्यङ्गान्यकम्पयंस्तन्मनस्को ऋषिच्छन्दोदेवताब्राह्मणान्संस्मृत्य, प्रणवव्याहृतिगायत्रीं आदौ पठित्वा, दक्षहस्ताङ्गुलीनां मध्यमपर्वसु स्वरोच्चारणसमये अङ्गुष्ठं योजयन्, दीर्घाक्षरं सव्यहस्ताङ्गुलिग्रहणेन दर्शयन्, हस्ताग्रकृतदृष्टिः सामसु अङ्गुष्ठतर्जन्योर्यवान्तरं; संहितायां तिलान्तरं कुर्वन्स्पष्टाक्षरं मध्यमवृत्त्या मध्यमस्वरेण एकया वृत्त्या शक्त्या पठेत् । पुनः प्रणवव्याहृतिसावित्रीं पठित्वा 'ॐ नमो ब्रह्मणे' इति त्रिरुक्त्वा समापयेत् । ततो रुद्रसंहितामुपतिष्ठेत् । ब्रह्मयज्ञादर्वाग्वा । अस्य मूलवाक्यानि नारदोक्तशिक्षायां द्रष्टव्यानि ।

इति ब्रह्मयज्ञः ।

## अथ पञ्च महायज्ञाः ।

तत्र प्रातर्होमोत्तरं पाकार्थमावसथ्याग्नेरेकदेशं गृहीत्वा,

पाकशालास्थचुल्ल्यां संस्थाप्य, पाकं कृत्वा, पुनस्तावदेव ततः समादाय शालाग्नौ प्रक्षिपेत् । पश्चाद्वैश्वदेवः ।

## अथ वैश्वदेवः ।

तत्रासादनक्रमः । स्वदक्षिणे शुद्धोदकपात्रम् । उत्तरतोऽग्नेरपाम्पूर्णश्चमसः । ओदनादि हविष्यं घृतादिसिक्तं स्वपुरतः । समिद्द्वयञ्च । एवमासाद्याचम्य प्राणानायम्य, गायत्र्याभिमन्त्रितोदकेन हौमीयं संप्रोक्ष्य, देशकालौ सङ्कीर्त्य 'ममात्मसंस्कारार्थं श्रीपरमेश्वरप्रीतये नित्यविधिरूपं वैश्वदेवाख्यं कर्माहं करिष्ये' इति सङ्कल्प्य, भूतमिति ब्रूहीति पत्नीं प्रति ब्रूयात् । असन्निहितायां पत्न्यामन्यां वा । ततः पत्नी क्षालितकरचरणा भक्तियुक्तया वाचा भूतमिति प्रतिब्रूयात् । ततः स्वयं ओमित्युच्चैस्तस्मै नमस्तन्माख्या इति उपांशु ब्रूयात् ।

अथ होमादि बलिदानान्तं वाग्यतः स्यात् । ततो दक्षिणं जान्वाच्य, यथाविधिना भूजप-पर्युक्षण-समिद्धोमादीन्विधाय, प्रजापतये स्वाहेति मनसा मध्येऽग्नौ हुत्वा, मनसैव त्यागं विधाय, अग्नये स्विष्टकृते स्वाहेति ऐशान्यां हुत्वा, इदमग्नये स्विष्टकृते न ममेति त्यागं विधाय, समिद्धोमानुपर्युक्षणप्रसेकादीन्विधायाग्निं परिक्रम्य, चमसं निनीयाद्भिः पुनः पूरयेत् । ततो हुतशेषेण बलिदानम् । कुण्डसमीपे संमार्जनादिसंस्कृते भूप्रदेशे दक्षिणहस्तेन चमसस्थं जलमादाय, प्राक्संस्थधारां दत्वा बलिचतुष्टयपर्याप्तमन्नमादाय—

'ॐ पृथिव्यै नम' इदं पृथिव्यै न ममेति त्यागः । 'ॐ वायवे नम' इति तत्पूर्वस्यां, वायवे न मम । 'ॐ विश्वेभ्यो देवेभ्यो नम' इदं विश्वेभ्यो देवेभ्यो न मम । 'ॐ प्रजापतये नमः' इदं प्रजापतये न मम । मानसोऽयं बलिस्त्यागश्च ।

एवमेकपङ्क्त्यां प्राक्संस्थं बलिचतुष्टयं दत्वा, तदुपरि पूर्वव-

ञ्जलं सिञ्चेत् । ततस्तदुत्तरस्यां पूर्ववज्जलमासिच्य तावदेवान्नमादाय तथैव बलिदानम् ।

ॐ अद्भ्यो नमः । इदं अद्भ्यो न मम । ॐ ओषधिवनस्पतिभ्यो नमः । इदमोषधिवनस्पतिभ्यो न मम । ॐ आकाशाय नमः । इदमाकाशाय न मम । ॐ कामाय नमः । इदं कामाय न मम । पुनस्तथैवोपरि सेकः ।

पुनस्तदुत्तरतः जलमासिच्य, तावदेवान्नं आदाय तथैव बलिदानम् । ॐ मन्यवे नमः । इदं मन्यवे न मम । ॐ इन्द्राय नमः । इदं इन्द्राय न मम । ॐ वासुकये नमः । इदं वासुकये न मम । ॐ ब्रह्मणे नमः । इदं ब्रह्मणे न मम । ततस्तदुपरि पूर्ववज्जलासेकः ।

ततस्तदुत्तरस्यां किञ्चिज्जलमासिच्य 'ॐ रक्षोजनेभ्यो नम' इदं रक्षोजनेभ्यो न मम । इति बलिदानम् । ततस्तदुपरि जलमासिच्य उदकं स्पृशेत् ।

ततो बलिशेषमन्नं जलेनाभ्युक्ष्य कृतापसव्यः सव्यं जान्वाच्य, सर्वेषां दक्षिणतो जलमासिच्य 'ॐ पितृभ्यः स्वधा' इति पितृतीर्थेन बलिदानम् । इदं पितृभ्यो न मम । ततस्तदुपरि जलमासिच्य उदकं स्पृशेत् ।

ततः सर्वेषामुत्तरतो 'ॐ यवेभ्यो नम' इति यवाग्रयणोत्तरमाव्रीह्याग्रयणं यावत् । व्रीह्याग्रयणोत्तरं 'ॐ व्रीहिभ्यो नम' इति आयवाग्रयणं तथैव त्यागः । स्वकर्तृकोऽयं बलिः । प्रवासादावेतस्य लोपः । ततः कृताञ्जलिपुटोऽग्निं प्रार्थयेत् ।

आरोग्यमायुरैश्वर्यं धीर्धृतिः शं बलं यशः ।
ओजो वर्चः पशून् वीर्यं ब्रह्म ब्राह्मण्यमेव च ।
सौभाग्यं कर्मसिद्धिश्च कुलज्यैष्ठ्यं सुकर्तृताम् ।
सर्वमेतत्सर्वसाक्षिन् द्रविणोद रिरीहि णः ॥

ततो वामदेव्यं गीत्वा चतुर्भिश्चैत्यग्निं प्रणमेत् ॥

इति वैश्वदेवः ।

## अथ नित्यश्राद्धम् ।

आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्यापसव्यं कृत्वा 'गोत्राणां पितृपितामहप्रपितामहानां अमुकामुकामुकशर्मणां, मातामहप्रमातामहवृद्धप्रमातामहानां अमुकामुकामुकशर्मणां पितृयज्ञसिद्धये नित्यश्राद्धमहं करिष्ये' इति सङ्कल्प्य, उदङ्मुखान् ब्राह्मणान्ब्राह्मणं वा उपवेश्य, द्विगुणभुग्नकुशसहितं तिलोदकमादाय 'अमुकगोत्राः अस्मत्पितृपितामहप्रपितामहाः अमुकामुकामुकशर्माणः एतद्वः पाद्यं' इत्युक्त्वा, पितृतीर्थेन ब्राह्मणस्य पादयोर्निःक्षिपेत् । मातामहादीनां द्वितीयश्चेत्तदा पृथक्तेभ्यो देयमेकश्चेत्तन्त्रेण ।

तत आसनम् । अमुकगोत्रेभ्योऽस्मत्पित्रादुच्चार्य, मातामहादीनामपि नामगोत्राद्युच्चार्य 'अमुकशर्मभ्य इदमासनं स्वधा' इत्युक्त्वा जलं दक्षिणहस्ते दत्वा, विप्रवामभागे द्विगुणदर्भसतिलकुशासनं दद्यात् ।

ततश्चन्दनेन मूर्द्धांसजानुपादेषु वामाङ्गादि विष्णुमन्त्रेण सम्पूज्यार्चनसङ्कल्पं कुर्यात् । 'यथादत्तं गन्धाद्यर्चनं गोत्रेभ्योऽस्मत्पित्राद्युच्चार्य अमुकशर्मभ्यो यथायथाविभागं वः स्वधे'त्युक्त्वा जलं दद्यात् ।

ततो भोजनार्थं पात्रेऽन्नं परिविष्य 'सत्यं त्वर्तेन परिषिञ्चामीति' अभिषिञ्चय 'ॐ पृथिवी ते पात्रं' इत्यादि विष्णुमन्त्रान्तमुच्चार्य 'इदमन्नादि यद्दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं गोत्रेभ्य' इत्याद्यभिधाय अमुकामुकामुकशर्मभ्यो यथायथाविभागं वः स्वधेत्युक्त्वोदकं भुव्युत्सृजेत् । ततो भोजयित्वा, किञ्चित्फलं काकिणीं वा दत्वा नमस्कुर्यात् । अन्नसङ्कल्पान्तं नित्यश्राद्धम् ।

इति नित्यश्राद्धम् ।

अथ मनुष्ययज्ञः ॥

आचम्य प्राणानायम्य । देशकालौ सङ्कीर्त्य, स्नानान्तं विधाय 'श्रीपरमेश्वरप्रीतये नित्यविधिरूपं मनुष्ययज्ञमहं करिष्ये' इति सङ्कल्प्य, आगतमतिथिं पाद्यादिभिः सम्पूज्यान्नं परिविष्य, सकुशजलमादाय निवीती 'इदं अन्नादि यद्दत्तं तृप्तिपर्यन्तं दास्यमानञ्च सनकादिमनुष्येभ्यो हन्तेत्युच्चार्य' प्रजापतितीर्थेन जलमुत्सृजेत् ।

एवं पितृयज्ञमनुष्ययज्ञकरणासमर्थेन भिक्षा-पुष्कल-हन्तकारादिशक्त्या अन्नमुद्धृत्य प्राचीनावीती सद्विगुणदर्भं जलमादाय 'पितृयज्ञसिद्ध्यर्थमिदमन्नं सार्द्धं पितृभ्यः स्वधेत्युच्चार्य' जलं क्षिप्त्वा, अवशिष्टस्यान्नस्यार्द्धभागं निवीती सनकादिमनुष्येभ्यो हन्तेत्युक्त्वा जलमुत्सृजेत् ।

इति मनुष्ययज्ञः ।

ततः 'सुरभ्यै नम' इति सुरभीं सम्पूज्य गोग्रासं दद्यात् ।

सुरभी वैष्णवी माता नित्यं विष्णुपदे स्थिता ।
गोग्रासन्तु मया दत्तं सुरभि प्रतिगृह्यताम् ॥

इति मन्त्रेण गोग्रासं दत्वा, गोभ्यो न ममेति त्यागः ।

ततः—

पिपीलिकाः कीटपतङ्गसङ्घा बुभुक्षिताः कर्मनिबन्धबद्धाः ।
प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवन्तु ॥

इति मन्त्रेण सर्वभूतेभ्यो न ममेति सर्वभूतबलिं गृहाङ्गणे दद्यात् । ततः—

ऐन्द्रवारुणवायव्या याम्या वै नैर्ऋतास्तथा ।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयार्पितम् ॥

इति वायसेभ्यो न ममेति वायसेभ्यो गृहाद्बहिर्बलिर्देयः । ततो—

द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ ।

ताभ्यां बलिं प्रदास्यामि रक्षेतां पथि मां सदा ॥

इति श्वभ्यामिदं न ममेति श्वबलिर्गृहाद्बहिर्देयः। ततः पादौ प्रक्षाल्याचम्य, बालादीन् भोजयित्वा स्वयं भुञ्जीत।

इति गोग्रासादिबलिदानम्।

## अथ भोजनप्रयोगः।

सुप्रक्षालितपाणिपादमुख आचम्य, शुचौ संवृते देशे चतुरस्र-मण्डले सुपीठाद्यासने प्राङ्मुख उपविश्य, पात्रे परिवेशितमन्नं प्रणम्य, अस्माकं नित्यमस्त्वेतदिति सम्प्रार्थ्य, सव्याहृतिगायत्र्या तदन्नमभिमन्त्र्य जलेन 'ॐ सत्यं त्वर्तेन परिषिञ्चामीति' परिषिच्य, घृताक्तमन्नमादाय, स्वाग्रे दक्षिणभागे बलित्रयं प्राक्संस्थं दद्यात्।

ॐ भूपतये नमः। ॐ भुवनपतये नमः। ॐ भूतानां पतये नमः।

ततश्चतुर्थो विष्णवे बलिर्देय इति केचित्। ततो जलमादाय 'ॐ अमृतोपस्तरणमसि स्वाहेति' मन्त्रेण जलं प्राश्य, गार्हपत्यादीनात्मनि विचिन्त्य, तर्जनीमध्यमाङ्गुष्ठैरन्नमादाय, ॐ प्राणाय स्वाहेति मुखे हुत्वा, मध्यमानामिकाङ्गुष्ठैर्व्यानाय स्वाहेति हुत्वा, कनिष्ठिकानामिकाङ्गुष्ठैः ॐ अपानाय स्वाहेति हुत्वा, सर्वाभिः सहाङ्गुष्ठैः ॐ समानाय स्वाहेति हुत्वा, तर्जनीं विना ॐ उदानाय स्वाहेति जुहुयात्। एतान्पञ्च ग्रासान्महामौनी दन्तैरखण्डयन्निगीर्य उदकं स्पृष्ट्वा, शिखां विमुच्यान्यदश्नीयात्। ततो भुक्त्वाऽवशिष्टादन्नमादाय—

रौरवे पुण्यनिलये पद्मार्बुदनिवासिनाम्।
उच्छिष्टभागधेयानामक्षय्यमुपतिष्ठतु ॥

इति मन्त्रेणोच्छिष्टभागधेयेभ्योऽन्नं सोदकं भुवि दत्वा, अप्रक्षालितेनैव हस्तेन जलमादाय, ॐ अमृतापिधानमसि स्वाहेति

मन्त्रेणार्द्धं पीत्वाऽवशिष्टं पितृतीर्थेन भूमौ प्रक्षिप्य, मृज्जलाभ्यां हस्तौ मुखञ्च संशोध्याचम्य जलमादाय ।

ॐ अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठन्तु समाश्रितः ।
ईशः सर्वस्य जगतः प्रभुः प्रीणातु विश्वभुक् ॥

इति मन्त्रेण दक्षिणपादाङ्गुष्ठे स्नापयित्वा, अभीष्टदेवतां स्मरेत् ।

अगस्तिरग्निर्वडवानलश्च भुक्तं मयान्नं जरयन्त्वशेषम् ।
सुखञ्च मे तत्परिणामजं वै यच्छन्त्वरोगं मम वाऽस्तु देहे ॥
विष्णुरक्षा यथैवान्नं परिणामश्च वै यथा ।
सत्येन तेन यद्भुक्तं जीर्यत्वन्नमिदं तथा ॥
इत्युच्चार्य स्वहस्तेन परिमार्ज्य तथोदरम् ।
अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः ॥

इति भोजनप्रयोगः ।

अथ सायंसन्ध्या ।

ततः सायङ्कालेऽग्निं प्रादुष्कृत्य सायंसन्ध्यां कुर्यात् । तत्र सर्वं प्रातःसन्ध्यावत् । विशेषो यथा । 'सायंसन्ध्योपासनमहं करिष्ये' इति सङ्कल्पे । ध्यानावाहने विशेषः—

अपराह्णे तु या सन्ध्या कृष्णाङ्गी कृष्णवाससा ।
गरुडस्कन्धमारूढा तथा च विष्णुदैवता ।
वृद्धा सामवेदमुखी विष्णुना सह आवह ।
आयाहि वरदे देवि त्र्यक्षरे विष्णुवादिनि ।
सरस्वति च्छन्दसां मातर्विष्णुयोने नमोऽस्तु ते ॥

आचमने विशेषः । अग्निश्चमेति नारायण ऋषिः प्रकृतिच्छन्दः अग्निर्देवता आचमने विनियोगः ।

ॐ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण

शिश्ना अहस्तदवलुम्पतु । यत्किञ्च दुरितं मयि इदमहं माममृत योनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥

ततो ऋतञ्च सत्यञ्चेत्यनेनाघमर्षणानन्तरं उपविष्ट एवाञ्जलित्रयं गायत्र्या सूर्याभिमुखः क्षिपेत् । ततः सूर्यमुपस्थाय, सूर्याभिमुखो नासाग्रे अधोमुखधृतहस्तो मौनी गायत्रीं सञ्जप्य, सङ्कल्पं कुर्यात् । 'अनेन गायत्र्या मत्कृतेन जाप्येन विष्ण्वात्मा रविः प्रीयताम् । तत्र 'उत्तरे शिखरेति' विसृज्य सायंहोमं कुर्यात् ।

इति सायंसन्ध्या ।

## अथ सायंहोमः ।

तत्र सर्वं पूर्ववत् । तत्र न्यञ्चकरणे 'विदन्ते वसु' इति विशेषः । अग्नये स्वाहेति पूर्वाहुतिः । प्रजापतय इति उत्तरा ।

इति सायंहोमः ।

वैश्वदेवन्यञ्चकरणे एवमेव । ततः सामपठनम् । एषो उषेति उषा गायत्र्यश्विनौ, आबुन्द इति उषा गायत्रीन्द्रः, ऋजुनीतीति कुत्सो गायत्री विश्वेदेवाः, प्रत्युअदर्शीति उषा बृहत्युषा, उद्धेदभीति त्रयाणां सुपर्णो गायत्रीन्द्रः जपे विनियोगः । एवं ऋष्यादीन्संस्मृत्य सामानि पठेत् ।

५र १ र २ १ २
ॐ एषो उषाः । आपूर्विया । व्युच्छति । होवा ३ हायि ।
१र २ ३ २ ३र २ २ १
प्रियादा २३ यिवा ३४ः । स्तुषा ३४ यिवामा ३ । श्विनो २३४
५ ४ ५
वा । बृ ५ हो ६ हायि ॥ १ ॥

६र र २ र १ १ २ १ ^
आबुन्दंवृ । त्रहाद । दायि । जातः पृच्छा ३ त् । विमा २
३ ५ २ १ २ १ २ र १ २
ता २३४ राम् । कउग्रा २३ः के । हा श्रृण्विरे । इडा २३ भा
१
३४३ । ओ २३४५ इ । डा ॥ २ ॥

ऋजुनीतीनोवरुणः । इहा । मित्रो नयतिविद्वा २३ न्सा: ।
इहा । अर्यमादा २३ यिवायि । इहा । सजोषा ३ उवा ३ । ई
३४ हा ॥ ३ ॥

प्रात्युवदर्श्यायतोवा । ऊच्छन्ती दुहिता दिवो अपो मही वृणुते
चक्षुषा २३ तमः । ज्योतिष्कृणो २३ ती ३ । सूना २३४ रा ।
ओवा ६ । हाउवा ॥ ज्योतोवा । कार्णोति सूनरी उदुस्रियाः सृजते
सु । रिया २३: स चा । उद्यन्नक्षा २३ त्रा३म् । आर्चा
२३४ इवात् । ओवा ६ । हाउवा ॥ उद्योवा । नाक्षत्रमर्चिवत्तवे
दुषो वियुषि सू । रिया २३ स्यचा । साम्भक्तेना २३ गा ३ ।
माइमा २३४ हा । ओवा ६ । हाउवा । अस् ॥ ४ ॥

उद्धेदभ्योवा । श्रुतामा २३४ घाम् । वृषाभन्ना । रिया २
पा २३४ साम् । आ २ स्ता । रा २३ मे । षायि सूरिया । औ
३ होवा । हृ ५ इ । डा ॥ ५ ॥

उद्धेदभिश्रुतामा ६ घाम् । वृषभन्नर्या । हुम् । पा २३४
साम् । आस्ता ३ उवा । रामायि । षिसू २३४ वा । रा ६ यो
६ हायि ॥ ६ ॥

उद्धेदभिश्रुता मघम् । इय इयाहायि । वृषभन्नर्या । हा ३ हा
३ यि । पा २३४ साम् । आस्ता ३ उवा ३ । रा २ मा २३४

५र २ २ १र ३ १११र
औहोवा। विष्णुरिया २३४५॥ ७॥

ततः रात्रिभोजने 'ऋतं त्वा सत्येन परिषिञ्चामीति' अन्न-प्रोक्षणे विशेषः। रात्रौ दत्ते सर्वेभ्योऽन्ने फलीकरणकुक्कुसा ओदनास्रावणं जलञ्च एकीकृत्य 'ॐ रुद्राय नमः' इति शुभदेशे बलिर्देयः। रुद्राय न ममेति त्यागं विधाय, उदकं स्पृशेत्। ततः शयनम्।

इति श्रीशुक्लविश्रामात्मज–शिवरामविरचितायां गोभिलगृह्यपद्धतौ सुबोधिन्यां द्वितीयस्य आह्निकप्रकाशस्य प्रयोगपद्धतिः समाप्ता॥

---

## अथ तृतीयः प्रकाशः।

## अथ पर्वाहकृत्यप्रयोगः॥

प्रातर्होमोत्तरं पूर्वाण्ह एव अग्नेः स्थण्डिलं गोमयोदकाभ्यां सर्वत उपलिप्य, अग्निसमीपे प्रातः करिष्यमाणयागार्थं द्रव्याण्यासादयेत्। तानि यथा–अष्टादशेध्मकाष्ठानि। विशाखाच्छिन्नमुष्टित्रयं पञ्चकं वा बर्हिः। घृतम्। स्थालीपाकपर्याप्ता व्रीहयः, यवा वा। चरुस्थाली। मेक्षणम्। स्रुक्स्रुवौ। अनुगुप्ता आपः। उलूखलमुसले। कंसपात्रम्। शूर्पम्। पवित्रद्वयम्। समित्त्रयम्। पूर्णपात्रादीनि। एतान्यासाद्यापराण्हे स्नात्वा, माध्याह्निकं निर्वर्त्य, वैश्वदेवं कृत्वा, दर्शश्चेत्पिण्डपितृयज्ञं कुर्यात्।

अग्नेः पश्चात्प्राङ्मुख उपविश्याचम्य प्राणमायम्य देशकालौ सङ्कीर्त्य 'पितृतृप्तिद्वारा श्रीपरमेश्वरप्रीतये पिण्डपितृयज्ञमहं करिष्य' इति सङ्कल्प्य प्राचीनावीतिना पश्चादग्नेर्दक्षिणासंस्थं पात्राण्यासादयेत्। सहविः शूर्पम्। उलूखलमुसले। चरुस्थाली। पवित्रम्। उदकपात्रम्। मेक्षणम्। स्रुवः। आज्यम्। शङ्कुः। कुशमुष्टिद्वयम्। तत्रैकं मूललूनम्। विशाखलूनमपरम्। कंसपात्रम्।

समिद्द्वयम्। पिञ्जूल्येका। अवनेजनाथ पात्रत्रयम्। तिलाः। गन्धः। दर्वी। क्षौमदशासूत्रम्।

एवमेतान्यासाद्य गायत्र्याभिमन्त्रितोदकेनासादनक्रमेण द्रव्याणि सम्प्रोक्ष्य, सजलां चरुस्थालीमग्नावधिश्रयेत्। ततः पश्चादग्नेर्दक्षिणाग्रैः कुशैः स्तरणम्। तेषु उलूखलमुसल—कंसपात्र—सहविःशूर्पाणामासादनम्। ततः कंसेन तन्दुलानादाय, उलूखले पितृतीर्थेन 'पितृभ्यस्त्वा जुष्टं निर्वपामीति' सकृन्निर्वपेत्। न द्विस्तूष्णीम्। ततः सव्योत्तराभ्यां पाणिभ्यां सकृत्कण्डनम्। सकृदुत्पवनम्। सकृत्फलीकरणम्। सकृत्प्रक्षालनम्। सकृद्दक्षिणाग्रपवित्रायां चरुस्थाल्यां तन्दुलानामावपनम्। सकृदप्रदक्षिणं मेक्षणेनावघट्टनम्। ततः सकृद्दक्षिणाग्रपवित्रान्तर्हितं शृतं चरुमभिघार्य, दक्षिणत उद्वास्य, प्रत्यभिघारयेत्।

ततः शङ्कुमादाय प्रादेशमितदीर्घां चतुरङ्गुलविस्तृतां दक्षिणाग्रां यवाकृतिसदृशीं कर्षूं खातयेत्। ततः सव्यं कृत्वा, तस्या दक्षिणतश्चतुरस्रे स्थण्डिले यथाविधिना भूसंस्कारान्कृत्वा, अग्न्येकदेशमादाय, कर्ष्वाः पश्चिमतो नीत्वा, तमग्निं कृतलक्षणे स्थण्डिले ॐ भूर्भुवःस्वरिति संस्थापयेत्। ततः सव्येनैव तस्याग्नेः स्तरणम्। यथा--आसादितविशाखलूनकुशमुष्टिं हस्तद्वयेनादायाग्नेः पश्चादास्तीर्य, दक्षिणहस्तस्थान्कुशानग्नेर्दक्षिणतः संस्तरंस्तथैव वामहस्तस्थानग्नेरुत्तरतः प्रकिरन्नुभयतः प्राञ्चं नीत्वा, दक्षिणहस्तगृहीतानि कुशाग्राणि वामहस्तगृहीतकुशाग्रोपरि कुर्यात्। अथापसव्यं कृत्वा, उपमूलच्छिन्नैः कुशैर्दक्षिणाग्रैः कर्षूमध्ये स्तरेत्। तत एकैकशश्चरुस्थालीमेक्षणकांस्यपात्रावनेजनपात्राणि तिलगन्धसमिद्द्वयपिञ्जूलीदर्वीक्षौमदशादीनि सव्येन पाणिनाऽऽदाय, स्वपृष्ठतो नयन् दक्षिणेनादाय, स्वाग्रे संस्थापयेत्। शिष्यादिश्चेत्तेनाप्येवमाहृत्य स्थापनीयानि।

ततः कर्ष्वाः पश्चिमतोऽवनेजनार्थं त्रीणि पात्राणि दक्षिणसंस्थानि आसादयेत्। तेषु पात्रेषु पृथक् तूष्णीं जलमासिच्य, पात्रान्तरे सतिलमुदकमादाय 'अमुकगोत्र पितः अमुकशर्मन्नेतत्ते तिलोदकम्, ये चात्र त्वानुयांश्च त्वमनु तस्मै ते स्वधेति' मन्त्रेण प्रथमपात्रे तिलोदकमासिच्य, अप उपस्पृश्यैवमेव पितामहप्रपितामहयोः पात्रद्वये तत्तन्नामपूर्वकं तिलोदकमासिञ्चेत्। एवं त्रिष्वपि पात्रेषु गन्धोदकं दद्यात्। प्रत्येकं उदकस्पर्शः कार्यः।

ततोऽग्नौ करणम्। कंसपात्रे चरुमुद्धृत्य, कंसपात्रसमिद्धयमेक्षणोदकपात्राण्यादाय, अग्नेः पश्चिमतः प्राङ्मुख उपविशेत्। ततो यज्ञोपवीती भूत्वा दक्षिणं जान्वाच्य, यथाविधिना भूजपपर्युक्षणसमिद्धोमादीन् विधाय, मेक्षणेन 'ॐ स्वाहा' इत्युच्चार्य हुत्वा 'सोमाय पितृमते' इति मन्त्रं समाप्य, 'इदं सोमाय पितृमते न ममेति' त्यागः। एवं 'स्वाहा अग्नये कव्यवाहनायेति' द्वितीयामाहुतिं हुत्वा, इदमग्नये कव्यवाहनाय न ममेति त्यागः।

ततः समिद्धोमानुपर्युक्षणप्रसेकान्विधाय अपसव्यं कुर्यात्। ततः पिञ्जूलीं सव्येनादाय तस्मादपि दक्षिणेनादाय, सव्येनान्वालभ्य 'ॐ अपहता असुरा रक्षाꣳसि वेदिषद' इति मन्त्रेण कर्ष्वन्तर्दक्षिणाग्रां रेखामुल्लिखेत्पिञ्जूल्यग्रेण। अथ कर्ष्वाः पश्चिमतो हस्तौ कृत्वा 'एत पितर' इति नियच्छतेत्यन्तेन मन्त्रेण पितॄनावाहयेत्(१)।

ततः पूर्वपूरितपात्रात्प्रथमं पात्रमादाय, पितृतीर्थेन कर्ष्वां उदग्देशे 'अमुकगोत्र पितः अमुकशर्मन् अवनेनिक्ष्व' ये चात्र त्वान्वित्युच्चार्यावनेजयेत्। तत उदकं स्पृष्ट्वा, कर्ष्वां मध्यदेशेऽग्रदेशे तत्तन्नामपूर्वकं पितामहप्रपितामहयोरवनेजनं कुर्यात्। ततः कांस्यपात्रतो दर्व्या पिण्डमादाय, अवनेजनदेशे तत्तन्नामपूर्वकमेष ते

(१) तत्र मन्त्रः—

एत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः।
दत्तास्मभ्यं द्रविणेह भद्रꣳ रयिं च नः सर्ववीरं नियच्छत ॥१॥

पिण्डो ये चात्रत्वामित्यादि स्वधान्तमुच्चार्य, पिण्डं दत्वा, अप उपस्पृश्यैवमपरयोः ।

ततः 'अत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति' मन्त्रं जप्त्वा, अप्रदक्षिणमावृत्य, प्राणानायम्य, पितॄन्संस्मृत्य, श्वासविमोकात्पूर्वं अपर्यावर्त्तमानो जपेदमी मदन्त पितरो यथाभागमावृषायिषतेति। अथाञ्जलिकृतो जपति 'नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्तेति' गृहावेक्षणम् । सदो वः पितरो देष्मेति पिण्डावेक्षणम् । 'एतद्वः पितरो वास' इति पिण्डत्रयेऽप्येकमेव सूत्रतन्तुसमर्पणम् ।

तत उदकपात्रमादाय ऊर्ज्जं वहन्तीरिति मन्त्रेण पिण्डोपरि धारां दद्यात् । ततश्चरुस्थाल्यादीनि पात्राणि प्रक्षाल्य, द्विशस्तेनैव मार्गेण प्रतिहारयेत् सव्येन । वामदेव्यं गायेत् । पिण्डप्रतिपत्तिः प्रागुक्ता कार्या । पत्नी पुत्रकामा चेदाधत्त पितर इति मन्त्रेण मध्यमं पिण्डं स्वे भोजनकाले प्राश्नीयात् ।(१)

इति पिण्डपितृयज्ञः ।

## अथ दर्शश्राद्धम् ।

तत्र श्राद्धपूर्वदिवसकृत्यम् । गृहसम्मार्जनोपलेपन-भाण्डशुद्धि-वस्त्रप्रक्षालन-नखलोमकर्त्तन—गात्रकेशमलापकर्षण—ब्रह्मचर्यैकभुक्तादि कार्यम् । दक्षिणाप्रवणादिगुणोपेतां भूमिञ्च कुर्यात् । एतावत्पूर्वेद्युः कृत्वा, तस्यां रात्रौ ब्राह्मणान्निमन्त्रयेत् ।

इति पूर्वदिनकृत्यम् ।

## अथ निमन्त्रणम् ।

सायङ्काले होमादिकं विधाय, स्वयं द्विजायतने गत्वा; कृता-

(१) मन्त्रो यथा–ॐ आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषः स्यात् ॥

ञ्जलिपुटः प्रणम्य, उदगग्रेषु कुशेषु ब्राह्मणौ प्राङ्मुखौ द्वावुपवेश्य, स्वयमुपवीतिना पातितदक्षिणजानुरुदङ्मुख उपविश्य, सयवहस्तस्तयोर्दक्षिणजानुनी स्पृशन्दैवे क्षणः क्रियतां 'करिष्याम' इति तैरुक्ते अक्रोधनैरिति नियमान् श्रावयेत्। ततो दक्षिणाग्रेषु कुशेषु उदङ्मुखान् त्रीन्ब्राह्मणानुपवेश्य, स्वयं कृतापसव्यः सव्यं जान्वाच्य, दक्षिणाभिमुख उपविश्य, तिलहस्तस्तेषां सव्यं जान्वालभ्य 'पित्रे क्षणः क्रियतां' 'करिष्याम' इति तैरुक्ते ।

अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ।
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ॥

इति नियमान् श्रावयेत् । एवमेव मातामहाद्यर्थे त्रीन्निमन्त्रयेत् । अशक्तावेकैकं सर्वत्र, वैश्वदेवं तन्त्रेण वा । ततो 'यथाविध्नेन रात्रिर्यास्यति सर्वमेतत्करिष्याम' इति विप्रैरुक्ते कर्ता निमन्त्रिताश्च ब्रह्मचर्येण शयीरन् ।

इति निमन्त्रणम् ।

निमन्त्रणोत्तरमाज्यदोहानि त्रीणि सामानि पठनीयानि ।
आज्यदोहसाम्नां प्रजापतिस्त्रिष्टुबग्निर्जपे विनियोगः ।

२र २र ३ ४र५ २र१र २ १
ॐ हाउ । ३। आज्यदोहम् । ३। मूर्द्धानन्दायि । वा ३ अर ।
२ ३ ४ ५ २र१र २ १ २ २र३ ४ ५ २ १
तिंपृथिव्याः । वैश्वानराम् । ऋतआ । जातमग्नीम् । कविं२
२ १ २ ३ ४र ५ २र १ २
सम्रा । जा ३ मति । थिञ्जनानाम् । आसन्नः पा । त्रा ३
१ २ ३ ४ ५ २र २र ३ ४र ५ २र ३ ४
ञ्जन । यन्तदेवाः । हाउ । ३। आज्यदोहम् । २। आज्यदो६
२र २र १ २ २र २र १ ३ १ १ १ १
हाउ। वा। ए। आज्यदोहम् । २। ए। आज्यदोहा २३४५ म् ॥१॥
२र १ २ १ २ २ २र
हाउ । ३ । हुम् । चिदोहम् । ३ । मूर्द्धान० पूर्ववत् ।
२र १ २ १ २ १ ९ २ २ ३
हाउ । ३ । हुम् । चिदोहम् । २ । चिदो ३ हाउ । वा ३ । ई

१ १ १ १
२३४५ ॥ २ ॥

२र १ २ २ १र २र
हाउ ३ । व्योहम् । ३ । मूर्द्धानन्दा० पूर्ववत् । हाउ । ३ ।
१ २ १ २ २ २ २ १
व्योहम् । २ । व्यो ३ हाउ । वा ३ । ए ३ । ऋतम् ॥ ३ ॥

एवं पठित्वा । ततः श्राद्धकाले समागतान्द्विजान्प्रत्युत्थानाभिवादनादिभिः सत्कृत्य, स्वागतमिति पृच्छेत्सुस्वागतमिति प्रत्युक्तिः । ततस्तेषां पादप्रक्षालनाय मण्डलद्वयं द्वारि कुर्यात् । उत्तरस्यां चतुरस्रं गोमयोदकाभ्यां उदक्प्लवं कार्यम् । दक्षिणस्यां वर्तुलं दक्षिणाप्रवणं कार्यम् । उत्तरमण्डले यवयुक्तान् पूर्वाग्रान् कुशान् संन्यस्य दक्षिणे सतिलान् दक्षिणाग्रान् संन्यसेत् । ततश्चतुरस्रमण्डले दैविकान्प्राङ्मुखान् , वर्तुलमण्डले पैतृकानुदङ्मुखानुपवेश्य पाद्यादिभिः पूजयेत् । तत्र पूर्वं दैविकान् स्वयं विप्रदक्षिणभागे उपवीतिना पातितदक्षिणजानुरुदङ्मुख उपविश्य, गन्धपुष्पाक्षतजलोपेतं अञ्जलिं देवतीर्थेन "पुरूरवार्द्रवनामानो विश्वेदेवा इदं वः पाद्यं" इत्युक्त्वा पादयोर्निनीयाभिवन्द्यान्येन जलेन पादौ प्रक्षालयेत् ।

ततः कांस्यपात्रे जलकुसुमाक्षतदधीनि निक्षिप्य एतद्वोऽर्घ्यमित्युक्त्वाऽञ्जलावर्घ्यं दद्यात् । ततः चन्दनेन दक्षिणाङ्गपूर्वकं पादजान्वंसमूर्द्धसु सम्पूज्य पुष्पैः पूजयेत् । तत एवमेव तदुत्तरतः उपविष्टं द्वितीयं पूजयेत् । ततः पैतृकान् पूजयेत् । ब्राह्मणानामग्रे प्राचीनावीती दक्षिणामुखः पातितवामजानुरुपविश्य, पूर्ववदञ्जलिमापूर्य, पितृतीर्थेन पृथग्ब्राह्मणपक्षे "अमुकगोत्रास्मत्पितरमुकशर्मन्नेतत्ते पाद्यं" इति पाद्यं दत्वा पादप्रक्षालनार्घ्यदानादि पूर्ववद्विधाय, वामाङ्गपूर्वकं मूर्द्धांसजानुपादेषु चन्दनादिना पूजयेत् । एकश्चेदमुकगोत्राः पितृपितामहप्रपितामहाः अमुकामुकामुकशर्माण एतद्वः पाद्यमिति विशेषः । एवं मातामहादीनामपि

ब्राह्मणांस्तत्तन्नाम्ना समुदायेन वा पूजयेत् । ततः सर्वे द्विजाः स्वस्वमण्डलादुत्तरत उपविश्य द्विराचामेयुः । ततः कर्ता अन्यस्मिन्प्रदेशे द्विजचरणक्षालनोदकसंसर्गमकुर्वन्स्वपादौ प्रक्षाल्य, दर्भपाणिर्द्विराचम्य ब्राह्मणानग्रतः कृत्वा, तैः सह श्राद्धभूमिमागच्छेत् ।

ततस्तेषामुपवेशनार्थमासनस्थापनम् । तत्र दैविकानामासनान्युदगग्राण्युदगग्रदर्भोपहितानि, पैतृकाणां दक्षिणाग्राणि दाक्षिणाग्रदर्भोपहितानि प्राक्संस्थानि संन्यस्योपवेशयेत् । पूर्वं वैश्वदेविकान् । स्वयमुदङ्मुख उपवीती समुपविश्य, सव्यहस्तेनासनमालभ्य सयवेन दक्षिणेन निरङ्गुष्ठं द्विजहस्तमुपसङ्गृह्य, "ॐ भूर्भुवः स्वः समास्ध्वमित्युक्त्वा उपवेशयेत् । "ॐ समास्महे" इति प्रतिवचनम् । तत एवं द्वितीयमुपवेश्य पितृब्राह्मणानुपवेशयेत् । तत्र स्वयं दक्षिणमुखः प्राचीनावीती समुपविश्य, सव्येनासनमालभ्य, सतिलेन दक्षिणेन निरङ्गुष्ठद्विजहस्तमुपसङ्गृह्य मन्त्रेणोपवेशयेत् । तथैव प्रतिवचनम् । एवं उपवेश्य स्वयमाचम्य श्राद्धमारभेत् ।

तत्र द्विजासनसमीपे प्रत्यासन्नं श्राद्धसमाप्तिपर्यन्तं स्थायिनो दीपान्देवानां प्राङ्मुखान्; पितॄणामुदङ्मुखान् साधारान्स्थापयेत् । असम्भवे एकैकं वा । अत्र श्राद्धारम्भादारभ्य समाप्तिपर्यन्तं देवपरिचर्यां सव्येन उदङ्मुखः पातितदक्षिणजानुर्द्विजदक्षिणभाग उपविष्टो ऋजुकुशैः सयवैः कुर्यात् । पितृपरिचर्यायां द्विजाग्रतो दक्षिणामुखः प्राचीनावीती पातितवामजानुरुपविष्टः सतिलैर्द्विगुणदर्भैः कुर्यात् ।

श्राद्धप्रारम्भनिमित्तं समाचाराद्विष्णोः पञ्चोपचारैः पूजनम् । ततः प्राणानायम्य गायत्रीं सगायत्रीं पठित्वा(१) इदं विष्णुरिति मन्त्रेण देवाग्रतो यवान्विकीर्य (२)अपहता इति मन्त्रेण पित्र्यग्रतस्तिलान्विकिरेत्(३) । ततः प्राचीनावीती दक्षिणाभिमुख उपविश्य, समाचारात् अग्निष्वात्तादिभिर्मन्त्रैर्द्विगुण—सतिलकुशप्रक्षेपेण

(१) पृष्ठ १६ । (२) पृष्ठ ५८ । (३) पृष्ठ ११ टिप्पण्याम् ।

दिशो बध्वा (१)रक्षोभूतादिभिर्मन्त्रैस्तिलसर्षपकुशाक्षतप्रक्षेपेण द्वारबन्धनं कृत्वा(२) सव्येन समाचारात् "श्राद्धभूमौ" "सप्तव्याधेति" पठित्वा "देवताभ्यः पितृभ्यश्चेति" पठेत्(३)। ततस्ताम्रपात्रे शुद्धोदकमापूर्य्य, चन्दनपुष्पाक्षतांस्तत्र निक्षिप्य, कुशाग्रैस्तज्जलं संस्पृश्य दशधा गायत्रीं सञ्जप्य, द्विगुणीकृतैः पितृतीर्थगतैः कुशैरप्रदक्षिणं जलमालोडयन्नेतोन्विन्द्रं इति त्रिऋचं पठित्वा (४)अपसव्येन

---

( १ ) तत्र मन्त्रः—

ॐ अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् ।
तथा बर्हिषदः पान्तु याम्यां ये पितरस्तथा ॥ १ ॥
प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः ।
ऊर्ध्वंस्त्वर्यमा रक्षेत्कव्यवालनकोऽप्यधः ॥ २ ॥

( २ ) रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ।
सर्वतश्चाधिपस्त्वेशो यमो रक्षां करोतु मे ॥ १ ॥
यवाश्च रक्षन्त्वसुरान् दर्भा रक्षन्तु राक्षसान् ।
पङ्क्तिं वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः ॥ २ ॥

( ३ ) ॐ श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरम् ।
ताभ्यां चैव नमस्कारं ततः श्राद्धं प्रवर्तते ॥ १ ॥
गयायां पितृरूपेण स्वयमेव जनार्दनः ।
तं ध्यात्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ॥ २ ॥
ॐ सप्त व्याधा दशार्णेषु मृगाः कालिञ्जरे गिरौ ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥ ३ ॥
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ।
प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदथ ॥ ४ ॥
ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव भवन्तु ते ॥ ५ ॥
( देवताभ्य इति मन्त्रं वारत्रयं पठेत् )

( ४ ) तिरश्चिरिन्द्रोऽनुष्टुबिन्द्रः पाकप्रोक्षणाय जलाभिमन्त्रणे वि-
२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २
नियोगः । ॐ एतो न्विन्द्रꣳ स्तवाम शुद्धꣳ शुद्धेन साम्ना । शुद्धै
३ १ २ ३ १ २ ३ २ ३ १ २ १ २ ३ २ ३ १ २
रुक्थैर्वावृध्वाꣳसꣳ शुद्धैराशीर्वान्ममत्तु ॥ १ ॥ इन्द्रः शुद्धो न आगहि

कुशाग्रगृहीताभिरद्भिरुपयोगक्रमेण श्राद्धसामग्रीं सम्प्रोक्ष्य, बद्धाञ्जलिर्द्विजान्प्रार्थयेत् । "भवतां प्रसादात् श्राद्धोपहाराणां पाकादीनां पवित्रताऽस्तु" । अस्तु इति प्रत्युक्तिः । "देशकालपाकपात्रद्रव्यश्रद्धासम्पदस्तु" । अस्त्विति द्विजाः । ततो देशकालादि सङ्कीर्त्यामुकगोत्राणां अस्मत्पितृपितामहप्रपितामहानां अमुकामुकशर्मणां वसुरुद्रादित्यस्वरूपाणां, अमुकगोत्राणां अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानां अमुकामुकशर्मणां वसुरुद्रादित्यस्वरूपाणां एषां अद्य अमावास्यानिमित्तं पार्वणद्वयविश्वेदेवापूर्वकं अर्घपिण्डसहितं भवदनुज्ञया श्राद्धमहं करिष्ये, इति वदेत् । "कुरुष्व" इति तैर्वाच्यम् ।

तत आसनदानम् । द्विजदक्षिणभागे यथावदुपविश्य, यवजलसहितं दर्भयुग्मं ऋज्वेवादाय, स्ववामेन तस्य दक्षिणहस्तमुत्तानं धृत्वा "पूरूरवार्द्रवनामभ्यो विश्वेभ्यो देवेभ्य इदमासनं स्वाहेति" द्विजहस्ते तदुदकमासिच्यासनदक्षिणभागस्योपरि देवतीर्थेन तद्दर्भयुग्मं उदगग्रं क्षिपेत् । स्वासनमस्त्विति द्विजप्रत्युक्तिः । ततः पुनर्द्विजहस्ते हस्तप्रक्षालनार्थं जलं दत्वा "उपग्रहाविष्टरार्था य इमे कुशा" इत्युक्त्वा कुशान्दद्यादेवं द्वितीयदैविकद्विजायासनं दत्वा पितृभ्य आसनं दद्यात् ।

उक्तविधिना पितृब्राह्मणाग्रे समुपविश्य तिलजलसहितं दर्भत्रयं द्विगुणमादाय, स्ववामेन तस्य हस्तं धृत्वा "अमुकगोत्रायास्मत्पित्रे वसुरूपायामुकशर्मणे इदमासनं स्वधेति" पितृतीर्थेन हस्ते जलमासिच्यासनवामभागे तद्दर्भत्रयं द्विगुणं पितृतीर्थेन दक्षिणाग्रं प्रक्षिपे-

---

२ २ ३ १ २ ३ १ २ ३ २ ३ १— २र ३ १ २
शुद्धः शुद्धाभिरूतिभिः । शुद्धो रयिं निधारय शुद्धो ममद्धि सोम्य ॥२॥
१ २ ३ १— २र २ २ ३ १— २र ३ १ २ ३ २ ३ १ २
इन्द्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे । शुद्धो वृत्राणि जिघ्नसे
३ १— २र
शुद्धो वाजां सिषाससि ॥ ३ ॥

देवं सर्वत्र । एवमपरयोः । तत्र "पितामहाय रुद्ररूपायामुकशर्मणे । "प्रपितामहायादित्यरूपायामुकशर्मणे" इति विशेषः । एवं मातामहादिभ्यश्च । त्रिप्रैकपक्षे "अमुकगोत्रेभ्योऽस्मत्पितृपितामहप्रपितामहेभ्यः वसुरुद्रादित्यस्वरूपेभ्य अमुकामुकामुकशर्मभ्यः इदं आसनं स्वधेति" प्रयोगः । एवं मातामहादिभ्यश्च ।

आवाहनम्—पूर्ववदुपविश्य गृहीतयवहस्तो विप्रस्य दक्षिणजान्वालभ्य "पुरूरवार्द्रवसंज्ञकान् विश्वान्देवानावाहयिष्ये" इति पृष्ट्वाऽऽवाहयेत्यनुज्ञातो "विश्वदेवास आगतेत्यादि" निषीदतेत्यन्तं पठित्वा, जानुमुन्मुच्य "विश्वेदेवाः शृणुतेमं" "ओषधय" इति मन्त्रौ पठित्वा, प्रदक्षिणं पुरतो यवान् विकिरेत् । ततः कृताञ्जलिरागच्छन्तु महाभागा इति पठेत् । द्विजानेकत्वपक्षेऽपि सकृदेवावाहनम् । यवारोपणं भेदेन । विश्वेदेवाः शृणुतेत्यादिजपः सकृदेव ।

ततः पितॄनावाहयेत् । तत्र पितृब्राह्मणाग्रे कृतापसव्य उपविश्य, तिलहस्तः सव्यं जान्वालभ्य "अमुकगोत्रानस्मत्पितृपितामहप्रपितामहान्वसुरुद्रादित्यरूपान् अमुकामुकामुकशर्मणः आवाहयिष्ये" इति पृष्ट्वाऽऽवाहयेत्यनुज्ञात उशन्तस्त्वेत्यादि पठेत् । द्विजबहुत्वपक्षे पित्रादिनामोच्चारणकाले तं तं विप्रं स्पृशेत् । कर्त्रा मन्त्रे पठ्यमाने विप्राः परस्परं स्पृष्टा भवेयुः । तत्र "उशन्तस्त्वा" "एत पितर" इति मन्त्रद्वयं जान्वालभ्य जप्त्वा, विसृष्टजानुः अप्रादक्षिण्येन तिलान्विकीर्य कृताञ्जलिरायन्तु न इति पठेत् । द्विजबहुत्वेऽपि प्रत्येकं तिलप्रक्षेपः । "आयन्तु नः" इति सकृत्पाठः । एवमेव मातामहादीनां आवाहनम् । "अमुकगोत्रानस्मन्मातामहप्रमातामहवृद्धप्रमातामहान् वसुरुद्रादित्यस्वरूपान् अमुकामुकामुकशर्मण" इति विशेषः । समानमन्यत् ।

ततोऽप्रादक्षिण्येन "अपहता" इति मन्त्रेण द्विजाग्रे तिलान्विकिरेत् । तत उदकोपस्पर्शः । आवाहनोत्तरं "सुरूपकृत्नूमूतय"

इत्यादि आर्षभाणि सामानि ब्राह्मणाः पठेयुः अतीषङ्गांश्च ।

ऋषभसाम्नां पूर्वस्य रुद्रो गायत्रीन्द्रः, द्वितीयस्य रुद्रो विराडिन्द्रः, तृतीयस्य रुद्रः पङ्क्तिरिन्द्रः, अतीषङ्गसाम्नां पूर्वस्य इन्द्रोऽनुष्टुब् गायत्री सोमः, द्वितीयस्य इन्द्रस्त्रिष्टुब् गायत्री सोमः, तृतीयस्य इन्द्रोऽनुष्टुब् गायत्री सोमः, जपे विनियोगः ।

२ र १ र र २१र २र र१र १ ३
आर्षभाणि—सुरूप कृत्नु मूतये ।३। सुदुघा मिवगोदुहे । जुहुम-
२ २र१ २र१ २ १ १
साइ । द्याविद्यवाइ ।२। द्याविद्यवा ३१ उ । वा २३ । ओम् ।३। ॥१॥
२र १ १ १ १ २ २ १
हाउ । ३ । आयिही । ३ । आयि । ३ । इया हाउ । ३ । पिबा-
र १ २३४ ५ २१र २ १ २३४
सोमाम् । इन्द्र । मन्दतुत्वा । यन्तेसुषा । वा ३ हरि । अश्वअ-
५ २ र१ र ५ १ २३४५ २र १
द्रीः । सोतुर्बाहु । भ्या ३ ५ सुय । तोनअर्वा । हाउ । ३ । आयि
२ १ १ २र १९ २
ही । ३ । आयि । ३ । इया हाउ । २ । इया ३ हाउ । वा ३ ।
२ ११११
ई २३४५ ॥ २ ॥

२ १र र र र र र र ५ १ २ १
ओ ३१ म् । ३ । स्वादोरे इत्थाएविषू एव तआ । शंयोः ।२।
१ र र र र र र २ १ २१ १र र र र र र र
मधोरे पिबाएन्ति गोएरिय आ । हविः । २ । या आएन्द्रेणा एसया
र २ १ १ १ र र र र र र २१ २र
एवरिया । सुवः । २ । वृष्णाए मदाएन्तिशोए भथाआ । ज्योतिः
२ र र र र र र २ १ २ २
। २ । वस्वीरे अनुए स्वराए जियमा । ओ ३१ म् । २ । ओ ३
५ १ ३ ११११
१२३४ वा । इट्इडा २३४५ ॥ ३ ॥

२र र २र १ र र —
अतीषङ्गाः—ए पुरोजिती । वो अन्धसः सुतायमादया २ इत्न-
१ १ १ २ र १र — १ १ १ २
वायि । इडा । ऊवा । तेजातमा २ न्धसाः । अथा । दाइवा ।
२ १ — १ १ १२ १ — १
सऋूमिया २ ददायि । अथा । ऊग्रम् । शर्म्ममहा २ इश्रवाः ।

१ १ २ २ २ २ १ २ २ २
अथा । अपश्वानꣳ श्नथा ऽ१ यिष्ठा २ ना । सखायो दीर्घजा २३
१ १ २ १ ३ १ १ १ १
होयि । ह्वायमा ३१ उवा २३ । इट्टइडा २३४५ ॥ १ ॥

१ २ १ २ २ — १ १ १ २
ए आसा । जिवक्कारथ्ये यथा २ जाउ । इडा । आसा ।
१ — १ १ १ २ १ २ २ — २
व्यꣳशुर्मदा २ या । अथा । धाया । मनोता प्रथमामना २ यिषा ।
१ १ २ १ — १ १ १ २ २ २
इडा । आप्सू । दक्षोगिरा २ इष्टाः । अथा । दाशा । स्वसारो
२ — १ १ १ २ १२ — १
अधिसानो २ अव्या इ । इडा । श्याइनो । नयोनिमा २ सदा-
१ १ २ १ २ ^
त् । अथा । मार्ज्जा । तिवह्नि ꣳ सदनेषुवा ऽ२ छा ३१ उ । वा
१ ३ १ १ १ १
२३ । इट्टइडा २३४५ ॥ २ ॥

१ २ १ — १ २ — १ २
ए आर्भी । नवन्तआ २ । द्रुहआ ३१ उ वा२ । तरत्स मन्दी
२२ १ २ २१ — १ २ — ११ २
धावति । मायाम् । इन्द्रस्यका २ । मियमा ३१ उवा २ । धारा
२ १ २ २ १ २ १ — १ २ —
सुतस्यान्धसः । वात्सम् । न पूर्वआ २ । युनिया ३१ उवा २ ।
१ २ २२ १ २ २ १ — १ २
तरत्स मन्दीधावति । जातम् । रिहन्तिमा २ । तर आ ३१ उवा
१ ३ १ १ १ १
२३ । इट्टइडा २३४५ ॥ ३ ॥

ततोऽर्घपात्राणामासादनम् । तत्र प्रागग्रदर्भद्वयोपरि विश्वेषां देवानां पात्रद्वयं प्रागग्रं संस्थाप्य, तत्र द्वे द्वे पवित्रे संन्यस्य, प्रणीतास्थं जलं सऋजुकुशमादाय, शन्नोदेवीरिति मन्त्रेण देवतीर्थेन सकुशं जलं पात्रे प्रक्षिप्य, एवं द्वितीयेऽपि पात्रे सकुशं जलमासिच्य, यवोसीति मन्त्रेण प्रतिपात्रे देवतीर्थेन यवान्प्रक्षिपेत् । मन्त्रः—

ॐ यवोऽसि यवयाऽस्मद्द्वेषो यवयारातीः ।

ततः प्रतिपात्रं चन्दनं पुष्पाणि च प्रक्षिपेत् । ततः प्राची-

नावीतिना पित्रादीनां त्रीणि पात्राण्येकपङ्क्त्यां दक्षिणाग्रेषु कुशेषु दक्षिणसंस्थानि दक्षिणाग्राणि संन्यस्य, तत्पूर्वतो मातामहादीनां त्रीण्येव पात्राण्येवमेवाऽऽसादयेत् । ततः प्रतिपात्रं द्वे द्वे पवित्रे दक्षिणाग्रे संन्यस्य, शंनोदेवीरिति मन्त्रेण सकुशजलासेकः प्रतिपात्रं पितृतीर्थेन कार्यः । ततस्तिलोसीति मन्त्रेण प्रतिपात्रं तिलान्प्रक्षिप्य, चन्दनं पुष्पाणि च क्षिपेत् । तत एवमेव मातामहादीनां पात्राण्यापूर्य, समाचारात् धूपदीपौ दद्यात् । ततः कृताञ्जलिः "अर्घपात्राणामर्चनविधेः परिपूर्णतास्तु" इति प्रार्थयेत् । अस्त्विति द्विजाः ।

ततोऽर्घदानम् । तत्र पूर्वं दैवे । पूर्वोक्तप्रकारेणोपविश्य, आसादितपात्रद्वयादेकं पात्रमादाय, द्विजाग्रे प्रोक्षितायां भुवि उदगग्रं पात्रं संस्थाप्य "स्वाहार्घ्या भवन्तु" इति देवद्विजं प्रत्युक्त्वा निवेदयेत् । अस्तु स्वाहेति प्रत्युक्तिः । ततः प्रणीतास्थं जलं ब्राह्मणस्य हस्ते दत्वाऽर्घपात्रस्थं पवित्रद्वयं प्रागग्रं हस्ते निदध्यात् । ततश्चन्दनपुष्पादिभिर्दक्षिणाङ्गपूर्वकं तं सम्पूज्य, अर्घपात्रं हस्तद्वयेनादाय "यादिव्या" इति मन्त्रं पठित्वा "पुरूरवार्द्रवनामानो विश्वेदेवा एतद्वोऽर्घ्यं स्वाहेति" देवतीर्थेन ऋजुकुशेन तस्य हस्तेऽर्घ्यं निनयेदेवमेव द्वितीयपात्रेणार्घ्यं द्वितीयाय दद्यात् । ततो दत्तानि पवित्राणि गृहीत्वा पात्रे स्थापयेत्सर्वत्र ।

ततः पित्रादिभ्योऽर्घ्यं दद्यात् । प्राचीनावीती सव्यं जान्वाच्य दक्षिणाभिमुखः पितृब्राह्मणाऽग्रे समुपविश्य, पितृपात्रमादाय, प्रोक्षितायां भुवि दक्षिणाग्रं पात्रं संस्थाप्य, स्वधार्घ्या भवन्त्विति पात्रं निदध्यात् । अस्तु स्वधेति प्रत्युक्तिः सर्वत्र । ततो हस्तप्रक्षालनाय जलं दत्वा, वामाङ्गपूर्वकं चन्दनपुष्पाभ्यां सम्पूज्य, हस्ते दक्षिणाग्रे पवित्रे संन्यस्य, हस्ताभ्यां पात्रमादाय "या दिव्या" इति मन्त्रं पठित्वा "अमुकगोत्रास्मत्पितरमुकशर्मन्वसुरूप एतत्तेऽर्घ्यं, ये चात्र

स्वानुयांश्च त्वमनु तस्मै ते स्वधेति" पितृतीर्थेन द्विगुणकुशेनार्घ्यं निनयेत् ।

अनेकद्विजपक्षे अर्घ्यैकदेशं पवित्रदानपूर्वकं प्रतिविप्रं जलं दद्यात् । प्रत्यर्घ्यमुदकस्पर्शः कार्यः । एवं तत्तन्नामव्याहरणेन अपरयोरर्घ्यं दत्वा, मातामहादिभ्योऽर्घ्यं दद्यात् । ततः सर्वपात्रस्थे द्वे द्वे पवित्रे सकुशं आदाय, प्रथमे पितृपात्रे संन्यस्य, सर्वपात्रस्थान्संस्रवान्प्रथमे पितृपात्रे समवनीय, मातामहादीनामपि पात्रस्थानि त्रीणि त्रीणि पवित्राण्यादाय, प्रथमे पितृपात्रे संन्यस्य संस्रवानपि सर्वांस्तत्र कृत्वा, तत्पात्रद्वयस्थान्संस्रवान्पात्रान्तरे कृत्वा, तत्पात्रद्वयं श्राद्धदेशात्प्राच्यां पृथग्दक्षिणाग्रदर्भोपरि "पितृभ्यः स्थानमसीति" तत् पितृपात्रं दक्षिणाग्रं न्युब्जं कृत्वा, कुशान्पवित्राणि च तदुपरि स्थाप्य, तथैवापरं मन्त्रपूर्वकं दक्षिणाग्रं न्युब्जं कुर्यात् । ततस्तदुपरि कुशं दत्वा गन्धादिभिः पूजयेत् ।

ततः सव्येनार्घवन्दनं कृत्वा, देवब्राह्मणांश्चन्दनादिभिः पूजयेत् । हस्ते जलमासिच्य; पादजान्वंसमूर्द्धसु दक्षिणाङ्गपूर्वकं चन्दनेन सम्पूज्य; पुष्पैरभ्यर्च्य; अर्चनसङ्कल्पं कुर्यात् । उक्तवदुपविश्य; स्ववामेन द्विजदक्षिणहस्तमुपसङ्गृह्य, स्वदक्षिणेन सऋजुकुशं जलमादाय "यथादत्तं गन्धाद्यर्चनं पुरूरवार्द्रवनामभ्यो विश्वेभ्यो देवेभ्यः स्वाहेति" द्विजहस्ते जलं क्षिपेदेवं सर्वत्र सङ्कल्पेषु । सुगन्धमस्त्विति प्रत्युक्तिः । द्वितीयमप्येवं सम्पूज्य सङ्कल्पं कुर्यात् । ततो धूपदीपौ प्रत्येकं कर्तव्यौ । धूपपात्रं सनिर्धूमाङ्गारं द्विजाग्रे संन्यस्य अगरुगुग्गुलादि घृताक्तं निक्षिप्य "अयं वो धूप" इत्युक्त्वा दर्शयेत् । "सुधूपोऽस्त्विति" प्रत्युक्तिः । एवं दीपमपि संमुखे संस्थाप्य "इदं वो ज्योतिरिति" दर्शयेत् । 'सुज्योतिरिति' प्रत्युक्तिः । ततः सोपवीतं वासोयुगमादाय चन्दनादिभिरभ्यर्च्य 'सोपवीतं इदं वासोयुगं बार्हस्पत्यं पुरूरवार्द्रवनामभ्यो विश्वेभ्यो देवेभ्यः स्वाहेति"

विप्रहस्ते सकुशोदकमासिच्य 'इदं विश्वेभ्यो देवेभ्यो न ममेति' त्यागः कार्यः। 'ॐ प्रतिगृह्णामि स्वस्तीति' प्रत्युक्तिः सर्वत्र। एवं द्वितीयमपि चन्दनादिभिरभ्यर्च्य, वस्त्रदानान्तमुक्तवत्कृत्वा, पितृब्राह्मणानां मूर्द्धांसजानुपादेषु वामाङ्गपूर्वकं चन्दनेन पूजां कृत्वा, पुष्पाणि शिरसि दत्वा अर्चनसङ्कल्पं कुर्यात्। पितृधर्मेणोपविश्य, सकुशोदकमादाय, यथादत्तमित्याद्युच्चार्य "अमुकगोत्रायाऽस्मत्पित्रे वसुरूपायामुकशर्मणे स्वधेति" द्विजहस्ते सकुशमुदकमासिञ्चेत्। प्रत्युक्तिः पूर्ववत्। एवमपरयोस्तत्तन्नामपूर्वकम्। द्विजैकपक्षे तन्त्रेण सङ्कल्पः। एवं वस्त्रसङ्कल्पान्तं कृत्वा, मातामहब्राह्मणानपि सम्पूज्य, वस्त्रदानान्तमुक्तवत्कार्यम्। ततो बद्धाञ्जलिरस्य श्राद्धस्यार्चनाविधेः परिपूर्णताऽस्त्विति प्रार्थयेत्। अस्त्विति प्रत्युक्तिः। तत आचम्य कुशांस्त्यक्त्वा अन्यान् धारयेत्।

ततो भोजनपात्राणि द्विजानामग्रतः स्थापयेत्। तत्र पूर्वं पात्रस्थापनार्थं मण्डलानि द्विजाग्रतो नीवारचूर्णेन पाषाणचूर्णेन वा पितृपूर्वं कार्याणि। ततः पितृपूर्वं पात्राणि प्रक्षाल्य, हस्तेनोन्मृज्य, पुनः प्रक्षाल्य, प्रक्षालनजलं दैविकानां पैतृकाणाञ्च पृथक्पात्रान्तरे कृत्वा संस्थाप्य, पात्राणि ब्राह्मणानामग्रे मण्डलोपरि पितृपूर्वं संस्थाप्य, सजातीयानि घृतादिव्यञ्जनपात्राण्यपि स्थापयेत्। अथ द्विजानां हस्तप्रक्षालनं पितृपूर्वं कारयेत्। पात्रप्रक्षालनोत्तरं तैर्हस्तद्वयेन पात्रधारणं कर्तव्यमासङ्कल्पम्। सङ्कल्पानन्तरं वामहस्तेन पात्रधारणं विकिरान्तम्। तदुत्तरमुत्सर्गः। ततः पैतृकाणां पात्रक्षालनोदकं सतिलं पादप्रक्षालनदेशे पितृतीर्थेन, दैविकानां सयवं तेषां पादप्रक्षालनदेशे देवतीर्थेन निक्षिपेत्।

ततोऽग्नौकरणम्। ओदनादि हविष्यं कांस्यपात्रे कृत्वा घृतेनासिच्य, साग्निश्चेदग्निसमीपमागत्योपविश्य "अग्नौ करिष्यामीति" ब्राह्मणान्पृष्ट्वा, कुर्वित्यनुज्ञातः क्षिप्रहोमवत् "स्वाहा सोमाय पितृ-

मते" "स्वाहाग्नये कव्यवाहनायेति" आहुतिद्वयं हुत्वाऽनुपर्युक्षणादि कृत्वा, हुतशेषं ब्राह्मणेभ्यो दत्त्वा, किञ्चित्पिण्डार्थमवशेषयेत्। अनग्निश्चेत्पितृपङ्क्तिमुख्यस्य हस्ते "भवत्स्वेवाग्नौकरणं करिष्यामीति" पृष्ट्वा कुर्वित्यनुज्ञातः, सव्येनैव आहुतिद्वयमात्रं मन्त्रेण कृत्वा परिवेषणं कुर्यात्। तच्च दैवपूर्वं सव्यान्वारब्धदक्षिणहस्तेन कार्यम्।

ततोऽन्नसङ्कल्पः। श्राद्धोदकात्पात्रान्तरेण जलमादाय, देवद्विजाऽग्रे पूर्ववदुपविश्य, कुशाग्रगृहीतजलेन "सत्यं त्वर्त्तेनाभिषिञ्चामीति" अन्नमभ्युक्ष्याग्रे प्रदक्षिणं यवान्विकीर्य्य, न्युब्जाभ्यां दक्षिणोत्तरपाणिभ्यां पात्रमालभ्य "पृथिवी ते" इति मन्त्रं पठित्वा, (पृ० १६, पं. ४) वैष्णव्या ऋचा 'विष्णो हव्यं रक्षस्वेति" यजुषा वा द्विजाङ्गुष्ठमन्नेऽवधाय, वामहस्तेन पात्रमत्यजन् दक्षिणेन सकुशोदकमादाय "इदमन्नादि यद्दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं पुरूरवार्द्रवनामभ्यो विश्वेभ्यो देवेभ्यः स्वाहेति" जलं भूमौ क्षिपेत्। "इदं विश्वेभ्यो देवेभ्यो न ममेति" त्यागः। एवं द्वितीयेऽपि।

ततः पित्रादिभ्यो मातामहादिभ्यश्चाऽन्नसङ्कल्पः। तत्र पितृधर्मेणोपविश्य द्विगुणपितृतीर्थगतदर्भेण "सत्यं त्वर्तेन" इत्यन्नमभ्युक्ष्य, परितस्तिलान्विकीर्य, उत्तानसव्योत्तरहस्ताभ्यां पात्रमालभ्य "पृथिवी ते" इत्यादि मन्त्रं पठित्वा, वैष्णव्या ऋचा यजुषा वा अङ्गुष्ठमन्नेऽवधाय, इदमन्नाद्युच्चार्य "तृप्तिपर्यन्तं भोजनं गोत्रेभ्य" इत्यादि स्वधान्तमुच्चरेत्। "इदमन्नं पितृपितामहप्रपितामहेभ्यो न मम"। एवं मातामहादिभ्यश्च। ब्राह्मणभेदेन पृथक् सङ्कल्पस्त्यागश्च। "अमुकगोत्रायास्मत्पित्रे अमुकशर्मणे स्वधा"। एवं सर्वत्र वस्वाद्युच्चारणेन।

ततो ब्राह्मणेभ्यो जलमपोशानार्थं पितृपूर्वं दत्त्वा, सव्याहृतिकां गायत्रीं मधुमन्त्रं मधुमध्विति च त्रिर्जप्त्वा, अन्नहीनं क्रिया-

हीनं विधिहीनञ्च यद्भवेत् तत्सर्वमच्छिद्रमस्तु अधुना कृतसङ्कल्पासिद्धिरस्तु। अस्त्विति प्रत्युक्ते "यथासुखं जुषध्वं" इति वदेत्। ततस्ते बलिदानमकृत्वा अपोशानपञ्चप्राणाहुतिहोमपूर्वकं मौनेन पात्रमत्यजन्तो भुञ्जीरन्। ततः सव्येन गायत्रीं सगायत्रां, यद्वाऽवविष्पतेत्यादिपितृसंहितां, इदॱह्यन्वोजसेत्यादि माधुच्छन्दसीसंहितां अश्नत्सु द्विजेषु जपेत्।

१ २उ३क २र १ २ ३१—२र३ १ २ ३ २
ॐ भूर्भुवः स्वः। तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
२ ३ १ २ ३ १ २
धियो यो नः प्रचोदयात्॥ १॥

अथातो गायत्रमाग्नेयं मत्त्या भवति देवानां वर्षीणां वा परमेष्ठिना वा प्राजापत्यस्य साम सावित्रीगेयं यत्रागीतम्॥ २॥

१ र १ र र र — १
ॐ तत्सवितुर्वरेणियोम्। भार्गो देवस्य धीमाही २। धियो
र २ १ — १ ३ १११
यो नः प्रचो २१२। हुम्। आ २। दायो। आ २३४५॥३॥

ऋषीणां विषयज्ञो यः शरीराद्विमुच्यते।
अतीत्य तमसस्पारॱस्वर्गे लोके महीयते॥
सहस्रयुगपर्यन्तमहर्ब्राह्मं यदुच्यते।
नाकस्य पृष्ठे तं कालं दिवि सूर्य इव रोचते॥
ततः कृतयुगस्यादौ ब्रह्मपूतो महायशाः।
सर्वज्ञो धृतिमानृषिः पुनराजायते स्मरन्निति स्मरन्निति॥४॥

अथ सावित्र्यङ्गानि व्याख्यास्यामः शिरो ब्रह्मा ललाटं द्यौश्चन्द्रादित्यौ चक्षुषी मुखमग्निर्जिह्वा सरस्वती त्वष्टा ग्रीवा वसवश्च रुद्राश्च बाहू उरो वायुः पृष्ठमिन्द्रो विष्णुर्नाभिः प्रजापतिर्जघनमूरू मरुतो वेदाः पादौ स्मितं विद्युच्छ्वसितं वायुरस्थीनि पर्वताः समुद्रा वासांसि नक्षत्राण्यलङ्कारो य एवं वेद दुष्टुता दुरुपयुक्ता न्यूनाधिका च सर्वस्मात्स्वस्ति देवऋषिभ्यश्च ब्रह्म सत्यञ्च पातुमामिति ब्रह्म सत्यञ्च पातुमामिति॥ ५॥

२ १ २                 ४   ५                      १  २ २२  १   २२    १२
यद्वाऊ २३ विश्पतिः शितः। सुप्रीतो मनुषो विशे। विश्वा-
२   १ २ १ २२  ३ २ २ १    २    ४ ५   ४
इदा २३ ग्नीः। प्रति रक्षा। सिसेधता। औ ३ होवा। हो ५ इ।डा।।६।।

३ २          २                 २    २ १               २ १        २
अहा। वो ३ हा। वो ३ हा। सनादग्नायि। मृणसि। या-
३ ४ ५     २ १२          २      १      २   ३ ४ ५      २ १
तुधानान्। नत्वा रक्षा। सी ३ पृत। ना सुजिग्यूः। अनुदहा।
२ १ २   २   ३ ४ ५      ३ २           २            २     २२ १  २२
सहम्। रान्कयादाः। अहा। वो ३ हा। वो ३ हा। मातायिहे
१        २ १    २                २     ४
त्याः। सुक्षत। दा ३४३ यि। वी ३ या ५ या ६५६ः ।।७।।
३ ४ ३ ४२ ५     ३ २       १           ४ ५ ४२ ५ २   ४ ५
अक्षन्नमीमद। तही ३। आ २३४। वप्रिया अधू। षता।
१ १२     १ २२      १ २          २    १ २ २ २      १२   २
अस्तोषतस्वभानवः। विप्राना २३ वी। छायामती। योजानू ३
२         १   ३         ५२  २         ३          ५
वा ३ यि। द्रा २ ता २३४ औहोवा। हा २३४ री ॥ ८ ॥
२    २     २    २   ३ २  १   —   २     २    २
ओ ३ हायि। ओ ३ हा। ओहा। इया २। ओ ३ हा ३ ए।
२ १          २  १  २      २ ३ ४२ ५२         २ २                  १२
अभित्रिपा। ष्ठा ३ वृष। णंवयोधाम्। अङ्गोषिणाम्। अवाव।
२ ३ ४ ५   २ १२         २    १        २२ ३ ४ ५        २
शन्तवाणीः। वनावसा। नो ३ वक्ष। णोनसिन्धूः। ओ ३
२      २    २    ३ २   १   —   २    २   २   १
हायि।। ओ ३ हा। ओ हा। इया २। ओ ३ हा ३ ए। वि-
२      १ २   २          २   ४
रत्नधाः। दयते। वा ३४३। री ३ या ५ णा ६५६ यि ।।९।।
१            १ २२    १  २ १ २    २    २     १   २
हो। होयि। अक्रांत्समुद्रः प्रथमे विध। मान्। हो। होयि।
२ १  २ १२    २   २    १    २    २          २ १२   २  १ २
जनयन्प्रजा भुवनस्यगो। पाः। हो। होयि। वृषापवित्रे अधि-
१२ — १  १       १  १  २ १ २  २ — १२  २  २  २
सानो २ अ। व्यायि। हो। हो। बृहत्सोमो २ वा वृधे स्वानोअ।

१ २ २२ २ २ १२ २ ३ १ १ १ १
द्रा । औ ३ होवा । हाउवा ३ । ए ३ । स्वानोअ । द्री २३४५ः ॥१०॥
४ ५ २ — १ — २ २ १ २ ४
कानी । क्रान्तीर२क्रान्तीर२ । हरिरा सृञ्यमा२३ना३ः । सायि-
५ १ — १ — २ २१ २ ४ ५ १
दान् । वाना २ वाना२ । स्यजठरेपुना२३ना ३ः । नृभीः । याता-
— १ — २ २ १ २ ४ ५ २ — १
२ याता २ । कृणुतेनिर्णिजा२३ज्ञाम् । आताः । माती २ म्माती
— २ १ ^ ३ ५२ २ ३ १ १ १ १
२ म् । जनयता २३ । स्वा२घा२३४औ होवा । भी २३४५ः॥११॥
४ ५ ४ ५ १ २ १ ५ २२ १
कनिक्रन्तिहा । होयि । हरिरासृज्यमा २३४ नाः । हाहोयि ।
१२ २ २ १ २ २१ १ २
सीदन्वनस्य जठरेपुना२३नाः । हाहोयि । नृभिर्यतः कृणुतेनि-
२ १ २ २ १२ १ २ १ १
र्णिजा२३ज्ञाम् । हाहोयि । अतोमतायिम् । जनयता २३ । स्वा
^ ३ ५२ २ २ १ १ १ १
२ घा २३४ औहोवा । भी २३४५ः ॥ १२ ॥

यद्वाऊविश्पतिः सनादग्नेऽक्षन्नमी मदन्तह्यभित्रिपृष्ठमक्रा-न्तसमुद्रः कनिक्रन्तीति द्वे एषा पित्र्या नाम सꣳहितैतां प्रयुञ्जन् पितॄन्प्रीणाति ।

५ ५ २ १ २ — २ १ २
इदा ६ मे । हिया ३ नूओऽ १ जासा २ । सुतꣳराधा ।
२ २ — १ २ ७ ३ २
नाम्पा ऽ १ ता २ यि । पिबातुवस्यागिर्वाणा २३४ ः । पिबा
३ ३ १ ^ ३ ५२ २ ३ ५
३४ तुवा ३ । स्या २ गा २३४ औ होवा । वा २३४ णाः ॥१॥
५ ५२ २ १ २२ १ २२ २२
इद ꣳ ह्यनू ६ ओजसा । सुतꣳ राधा । नाम्पातौ । होवा ३
२ २ १ २ २ १ २२ २२ २ २ १ २२
हायि । पिबातुव । स्यगायिर्वाणौ । होवा ३ हायि । पिबातुवौ ।
२२ २ २ १ २ १ ^ ३ ५२ २ २
होवा ३ हा । स्यगाये ३ ः । वा २ ना २३४ औहोवा । घृत-
१ ३ १ १ १ १
श्चुता २३४५ ः ॥ २ ॥

३ ४५२ २ ३ ४ ५ ५ २ १ २
त्वामिदा । होयि । हियोनरा ६ ए । अपाइष्यन्वा । ज्रायि-
२ ३ ५ १ १२ २२ १ २ ३ २
न्भूर्णा २३४ याः । सइन्द्रस्तोमवाहसः । इहाश्रुधा । औहो ३४
५ २ २ १ २ ३ २ ५ १२ २
वा हायि । उपास्वासा । औहो ३४ वाहा । रमागा २३ हा
१
३४३ यि । ओ २३४५ इ । डा ॥ ३ ॥

५ २ २ २ ५ २२ १ २ २ २
सपूर्व्योमहोना ६ मे । वेनः क्रतू ३ भायिरानजे ३ । हा
२ २ २ २ १ २ २ ९ १
३ हा । औ ३ हो ३ वा । आयिही २ । यस्य द्वारा ३ मानुः
२ २ २ २ २ १ १ २
पिता ३ । हा ३ हा । औ ३ हो ३ वा । आयिही २ । दायिवे-
२ २ २ २ २ २ १ २ १
षुधा ३ । हा ३ हायि । औ ३ हो ३ वा । आयिही २ । य आ
१ ३ ५१ २ २ १३ १ १ १ १
२३ । ना २ जा २३४ औहोवा । मधुश्चुता २३४५ः ॥ ४ ॥

५२ ३ २ ३ ४ ५ १ २ २ २ १२ २ १
पुराम्भिदुर्यु वा कवीः । अमितौजा अजाया २३ ता । आयि-
२ २ २ ३ ५ २ १ २ ३
न्द्रो विश्वा ३ । स्या कर्मा २३४ णाः । धर्ता । वाज्रौवाओ २३४
५ ४ ४ ५
वा । पुरू ऽ ५ ष्टुताः । हो ५ इ । डा ॥ ५ ॥

४ ४५४५ ४ ५४५ ४ १ १२
ओवा । उपप्रक्षे मधुमतिक्षियन्तः । ओवा । ओयि । पुष्ये
२ २२ १ २ १ १ २ २ २२
मरयिं धीमहेत आ २३ यिन्द्रा । ओ । वाओवा । ओ । वाहा
२ ५
३१ उवा २३ । ऊ ३४ पा ॥ ६ ॥

२ ३ ५ ३२ २१ २ २
हाओ २३४ हायि । इहा ३१ । पवस्वसो । मा ३ मधु ।
२ ३ ४ ५ २ १२ २ १ २ ३ ४ ५ २ १ २
माँ ऋतावा । अपोवसा । नो ३ अधि । सानोअव्याइ । अवद्रो-

२ ० १ २ ३ ४ ५ २ ३ ५ ३ २
णा । नी ३ घृत । वन्तिरोहा । हाओ २३४ हायि । इहा ३१ ।
२ १ २ १ २ २ ४
मदिन्तमो । मत्सरः । आ ३४३ यि । द्रा ३ पा ६ ना ६५६ : ॥७॥
२ २ १ २ १ २ १ २ १ — १ २
सुरूप कृत्नु मूतये सुदुघामा । वगो २ । दुहया ३१ उवा
३ ५ ३ ५ २ १ २ २ १
२३ । इ २३४ डा । सू २३४ वाः । जुहुमा २३ सी । द्यवि-
२ ३ ५
द्यविया ३१ उवा २३ । ज्यो २३४ तीः ॥ ८ ॥

इदꣳ ह्यन्वोजसेति प्रथमोत्तमे त्वामिदाद्यो नरः सपूर्व्यो महोनां पुरां भिन्दुर्युवाकविरुपप्रक्षेमधुमति क्षियन्तः पवस्व सोम मधुमाꣳ ऋतावा सुरूपकृत्नाहसं माधुच्छन्दसमेषा माधुच्छन्दसी नाम सꣳहितैतया वै देवाः स्वर्गं लोकमायन्त्स्वर्गं लोकमेति य एवं वेद ॥

४ २२ २ १ — १ —
ओग्नायि । आयाही ३ वोइतोया २ यि । तोया २ यि ।
१ २ २२ २ १ — १ — १ २२ १
गृणानोह । व्यदातोया २ यि । तोया २ यि । नायिहोता सा
३ ५२ २ ३ ५
२३ । त्सा २ यिबा २३४ औहोवा । ही २३४ षी ॥ १ ॥
४ ५ ४२५२ ४ १ १ २ २ २ २
अग्नआयाहिवी । तयायि । गृणानोहव्यदाता २३ या यि ।
१ २ १ ३ २ २ १ ३ ५२ २
निहोता सत्सिबर्हा २३ यिषी । बर्हा २ यिषा २३४ औहोवा ।
२ १ २ १ १ २
बर्ही ३ षी २३४५ ॥ २ ॥
४ ५ ४२ ५२ ४ ४ १ १ २ २ २
अग्नआयाहि । वा ५ यितयायि । गृणानोहव्यदा १ ता
२ २ ३ ५ १ २ १ ५
३ ये । निहोता २३४ सा । त्सा २३ यिबा ३ । हा २३४ यिषो
५
५ हायि ॥ ३ ॥

१ र १ र र र — १र

ॐ तत्सवितुर्वरेणियोम् । भार्गो देवस्य धीमाही २ । धियो

र २ १ — १ २ १११

यो नः प्रचो १२११ । हुम् । आ २ । दायो । आ ३४५ ॥४॥

— १ २ १ २र १ १ २

ए २ । विदामघमवन्विदाः । गातुमनुशꣳसिषः । दायिशा

२ ५ — १ र २ र र १

३१ उवा २३ । ई ३४ डा । ए २ । शिक्षप्राचीनाम्पतायि ।

र र २र — १ २ र ५ २ १

पूर्वीणाम्पुरू २ । वसा ३१ उवा २३ । ई ३४ डा । आभिष्ट्व-

— १ २ २ ५ १ र

मभा २ यि । ष्टिभिरा ३१ उवा २३ । ई ३४ डा । स्वर्णाꣳशू

^ २ २ ५ २ र र

२ः । हा ३१ उवा २३ । ई ३४ डा । प्रा । चेतन प्रचेतया ।

१ र २ १र — १ १ २ २ १र —

ईन्द्रा । द्युम्नायना २ ईषायि । इडा । इन्द्रा । द्युम्नायना २ ई-

१ १ २ २ ११ — १ १ १र

षायि । अथा । इन्द्रा । द्युम्नायना २ ईषायि । इडा । एवाहि

र र र र र २ २ र २ १ २

शक्रो राये वाजाय वा ऽ १ ज्री ३ वाः । शविष्ठ वज्रिन्ना ३ ।

४ ५ १ १ १ २

जासायि । मꣳ हिष्ठ वज्रिन्ना २३ हो । जासा ३१ उवा २३ ।

१ ११११ १ २ १ — १ १ ११११

इट् इडा २३४५ ॥ आया । हि पिबमा २ त्सुवा । इडा २३४५ ।

— १र र र र १ र र र —

ए २ । विद्माराये सुवीरियाम् । भुवो वाजानाम्पतिर्वश २ २ ।

१ २ २ ५ — १ २

अनुआ ३१ उवा २३ । ई ३४ डा । ए २ । मꣳ हिष्ठ वज्रि-

१ १ र ^ २ २

न्नृञ्जसायि । यः शविष्ठः शूरा ऽ २ । णा ३१ उवा २३ । ई

५ १र र ^ २ २

३४ डा । यो मꣳ हिष्ठो मघो २ । ना ३१ उवा २३ । ई ३४

५ २ १ र ^ २ २

डा । अꣳ शुर्न शोचा ऽ २ ई ः । हा ३१ उवा २३ । ई ३४

५ १ र र २ १र — १

डा । चायि । कित्वो अभिनोनया । इन्द्रो । विदेतमू २ स्तुहा-

यि । इडा । इन्द्रो । विदेतमू २ स्तुहायि । अथा । इन्द्रो । विदे-
तमू २ स्तुहायि । इँडा । इशे हि शक्रस्तमूतये हवा ऽ १ मा
३ हायि । जेतारमपरा ३ । जायिताम् । सनः स्वर्षदता २३
हायि । द्वायिषा ३१ उवा २३ । इट्इडा २३४५ ॥ क्रतूः ।
छन्दऋता २ न्बृहात् । इडा २३४५ । ए २ । इन्द्रन्धनस्य सात-
यायि । हवामहे जेतारमपरा २ । जितमा ३१ उवा २३ । ई
३४ डा । ए २ । सनः स्वर्षदतिद्विषाः । सानः स्वर्षदता २ यि ।
द्विषआ ३१ उवा २३ । ई ३४ डा । पूर्वस्य यत्त आ २ ।
द्रिव आ ३१ उवा २३ । ई ३४ डा । अं शुर्मदाया २ । हा
३१ उवा २३ । ई ३४ डा । सू । म्नआ धेहि नो वसाउ ।
पूर्तीः । शविष्ठशा २ स्यतायि । इडा । पूर्तीः । शविष्ठशा २
स्य तायि । अथा । पूर्तीः । शविष्ठशा २ स्यतायि । इडा । वशी
हि शक्रो नूनन्तन्नव्य सा ऽ १ न्या ३ सायि । प्रभो ज-
नस्य वा ३ । त्राहान् । समर्येषु ब्रवा २३ होयि । वाहा ३१
उवा २३ । इट्इडा २३४५ ॥ शूरो । योगोषुगा २ च्छतायि ।
इडा । सखा । सुशेवो २ द्वयूः । इडा २३४५ । आयिवा । हियें-
वा २३४५ । होयि । हो । वाहा ३१ उवा २३ । ई ३४ डा ।
आयिवा । हियम्रा २३४५ यि । होयि । हो । वाहा ३१ उवा

२ । ई ३४ डा । आयिवा । हि इन्द्रा २३४५ । होयि । हो । वाहा ३१ उवा २३ । ई ३४ डा । आयिवा । हिपूषा २३४५न् । होयि । हो । वाहा ३१ उवा२३ । ई ३४ डा । आयिवा । हि देवा २३४५ः । होयि । हो । वाहा ३१ उवा २३ । ई ३४ डा ॥ ४ ॥

प्रथमस्त्रिवर्गः सावित्र्या गायत्रं महानाम्न्यश्चैषाऽमृता नाम सꣳहितैतया वै देवा अमृतत्वमायन्नमृतत्वमेति य एवं वेद य एवं वेद ॥ ६ ॥

अथ ब्राह्मणानां भोजनसमाप्तिमवगम्य, जलाप्लावितमन्नं पितृब्राह्मणाग्रतो दर्भोपरि त्रिःकिरेद् अग्निदग्धा इति मन्त्रेण । ततो हस्तौ प्रक्षाल्याचम्य, हस्तकुशांस्त्यक्त्वा, अन्धान्धारयेत् । अथ द्विजेभ्यः मत्स्यपोशानं पितृपूर्वं दत्वा, व्याहृति, गायत्री, मधुवाता मधुमध्विति च जपित्वा, आचान्तेषु द्विजेषु "तृप्ताः स्थ" इति पृष्ट्वा, "तृप्ताः स्म" इति तैरुक्ते शेषमनुज्ञाप्य "इष्टैः सह भुज्यतामिति" तैरुक्ते पिण्डदानार्थं ब्राह्मणानां भोजनभाजनाद्भुजमात्रे प्रदेशे गोमयेन चतुरस्रं मण्डलं विधाय, तदुपरि दक्षिणाप्रवणां सैकतीं वेदीं कृत्वा, श्राद्धोदकेनाभ्युक्ष्य, दक्षिणाग्रान्प्राक्संस्थान् स्थानद्वये त्रींस्त्रीन्कुशानास्तरेत् । ततः पिञ्जूलीं दक्षिणेनादाय, सव्येनान्वारभ्य, अपहतेति मन्त्रेणास्तृतकुशोपरि पिञ्जूल्यग्रेण दक्षिणाग्रां रेखां कृत्वा "ॐ अपहता असुरा रक्षाꣳसि वेदिषदः" । एवं तत्पूर्ववत् स्तृतकुशोपरि कृत्वा, तां पिञ्जूलीं सन्त्यज्य "एत पितर" इत्यारभ्य जियच्छतेत्यन्तेन पितॄनावाहयेत् ।

ततः पात्रान्तरे सद्विगुणकुशं जलमादाय, प्राचीनावीती दक्षि-

णाभिमुखः सव्यं जान्वाच्य, पितृपितामहप्रपितामहानां कुशेषु मूलमध्याग्रक्रमेण दक्षिणसंस्थमवनेजनं कुर्यात् । "अमुकगोत्रास्मत्पितरमुकशर्मन्वरुणरूपावनेनिक्ष्व, ये चात्र त्वानुयांश्च त्वमनु तस्मै ते स्वधेति" कुशमूलेऽवनेज्याप उपस्पृश्यैवं पितामहप्रपितामहयोः क्रमेण प्रजापत्याग्निरूपयोर्मध्यदेशेऽग्रदेशे च अवनेजनं कृत्वा, तत्पूर्वस्यां आस्तृतकुशेषु तत्तन्नामोच्चारणेन पूर्ववन्मातामहादीनामवनेजनं कुर्यात् । ततः सर्वस्माच्छ्राद्धपाकशेषात् स्तोकस्तोकशः पात्रान्तरे अन्नं समादाय, मधुघृते समासिच्याग्नौकरणशेषं तिलांश्च संयोज्य, बिल्वोपमान्पिण्डान्दद्यात् यथावनिक्तम् ।

"अमुकगोत्रास्मत्पितरमुकशर्मन्वरुणरूपैष ते पिण्डो" ये चात्र त्वानुयादि स्वधान्तेन कुशमूले पित्रवनेजनदेशे पितृतीर्थेन पिण्डं दत्त्वा, अप उपस्पृश्यैवं पितामहप्रपितामहयोर्मध्यदेशेऽग्रदेशे च तत्तन्नामरूपे समुच्चार्य पिण्डौ दत्त्वा, एवमेव यथावनिक्तं मातामहादिभ्यः पिण्डान्दद्यात् । ततस्तत्पिण्डपात्रक्षालनजलेन सतिलेन तत्तत्पिण्डेषु तथैव प्रत्यवनेजनं कृत्वा, तत्पात्रं भूमौ अधोमुखं कुर्यात् ।

ततोऽत्र पितरो मादयध्वं इति पठित्वा, अप्रदक्षिणावर्त्तनेन दक्षिणाभिमुखो भूत्वा, श्वासं नियम्य, स्वपितॄन्ध्यात्वा, श्वासमविमुञ्चंस्तथैव पर्य्यावर्त्तमानो जपेदमी मदन्त पितरो यथाभागमावृषा इषतेति ।

ततोऽञ्जलिकृतो जपति "नमो वः पितरः पितरो नमो वः । गृहान्नः पितरो दत्त" इति गृहावेक्षणम् । "सदो वः पितरो देष्म" इति पिण्डान्वेक्षणम् । "एतद्वः पितरो वास" इति प्रतिपङ्क्ति सूत्रतन्तुदानम् । ततश्चन्दनपुष्पधूपदीपैः पिण्डान्सम्पूज्य, सामाचारादर्घं दत्त्वा, नैवेद्यं पात्रान्तरे सर्वान्नमादाय, पिण्डाग्रे संस्थाप्य, इदं नैवेद्यं गोत्रेभ्य इत्यादि नामान्यभिधाय जलमुत्सृ-

जेत् । ततो बद्धाञ्जलिः "पिण्डानामर्चनविधेः परिपूर्णताऽस्त्विति" प्रार्थयेत् । "अस्त्विति" द्विजाः । "एभिः पिण्डदानैरस्मत्पितॄणामक्षया तृप्तिरस्तु" । "अस्तु" इति द्विजाः । "काले श्राद्धं भवतु" । "भवत्विति" द्विजाः । "गयायां पिण्डदानेन या तृप्तिः सा तृप्तिरस्तु" । "स्वर्गे वासोऽस्तु" । "अस्त्विति" उभयत्र प्रत्युक्तिः । अथ द्विजेभ्यो मुखशुद्ध्यर्थं जलादि देयम् । स्वयं हस्तौ प्रक्षाल्याचामेत् ।

ततः पदस्तोभादीनि सामानि ब्राह्मणैः पठनीयानि । पदस्तोभसाम्नां प्रजापतिस्त्रिष्टुप्सोमः, यदिन्द्राहं यथेति गौषूक्तिः पूर्वस्याश्वसूक्तिरुत्तरस्य गायत्रीन्द्रः, एतोन्विन्द्रेति एतयोरिन्द्रोऽनुष्टुबिन्द्रः, तरत्समन्दीति तरन्तो गायत्री सोमः, जपे विनियोगः ।

३र २ ^ ३ ५ २र २र १ २
हाह । हौवा ओ २३४ वा । ३ । ए । औ हौहोवाहाउ ।
१ र २ १र २ १ २ र १ २र १२ १ १ र
वा । ईडा । धर्त्तादिवष्पवते कृत्व्यो रसः । इडा । २ । दक्षो
२र र १र २ १र २ १ २ १ १ २ र १र २ १
देवाना मनुमाद्यो नृभिः । इडा । २ । हरिः सृजानो अत्योन
२ १ १ २र १ र २र १र र २
सत्वाभिः । ईडा । २ । वृथा पाजाꣳसि कृणुषे नदीषु वा ऽ १ ।
३र २ ^ ३ ५ २र र १र २ २
हाह । हौवा ओ २३४ वा । ३ । ए । औ हौ होवा हाउ । वा ।
१
इडा ॥ १ ॥
२र २ ^ ३ ५ २र र १र २
हाउ ।३। हौवा ओ २३४ वा । ए । औ हौ होवा हाउ ।
२ १ २ १ २ १ र २र १ २र १२ १ र १ र २र १र
वा । धर्त्तादिवः पवा । इडा । ते कृत्व्योरसः । इडा । दक्षो देवाना मनुमाद्योनृभिः । इडा । हरिः सृजानआ । इडा । त्योनसत्वभिः । ईडा । वृथा पाजाꣳसिकृणुषेनदीषु वा ऽ १ । हाउ ।३।

२ ^ ३ ५ ३२ २ १२ ३ २ २ १ २
हौवा ओ २३४ वा । ए । औ हौहोवा हाउ । वा । इडा ॥ २ ॥
२ २ १ — १ — २९ २ १२ ३ ३२ २
औ हौहोवा २ । ओ वा २ । ए । औ हौहोवा हाउ । वा ।
२ १२ २ १ २ १ २ २२ १ २२ १ २ १ २ २२१२ २ २ १ २
धर्त्तादिवष्पवा । ईडा । ते कृत्व्योरसः । दक्षोदेवानामा । ईडा ।
२ १ २२१ २ १ २ १ १ २ १ २ ३२ १ २ १ २
नुमाद्यो नृभिः । हरिः सृजान आ । ईडा । त्योनसत्वभिः । वृथा
१२ २ २ २ १ २ ३२ २ १ — १ — २२ २२ १२
पाजाꣳसिकृ । इडा । औ हौहोवा २ । ओ वा २ । ए । औ हौ-
३ २ २ २ २ १२ २
होवा हाउ । वा । णुषेनदीषु वा ऽ १ ॥ ३ ॥
२ ३ ४२ १ ३२ २२ १२ २ ३२ ३ २ १
आ औ होवा हायि । ए । औ हौ होवा हाउ । वा । धर्त्ता ।
— १ १ २२ १ २ १ २ १ २ २ १ २ २ १ २
दी २ । वःप । वा । ते कृत्व्यः । रसः । दक्षो देवानामनुमाद्यो
२ १ २ १ १ १२ २ २२१ २ २ २२
नृभिः । ईडा । हरिः । सा । जानो अ । त्योनसत्वभिः । वृथा-
१ २ २ १२ २ २ २ ३ ४२ ५ २२ २
पाजाꣳसिकृणुषेनदीषु वा ऽ १ । आ औ होवा हायि । ए । औ
१२ ३ २ २ २
हौ होवा हाउ । वा । इडा ॥ ४ ॥
४ ५ २ ४ ५२ ४२ ५ २ १ २ १२ २
यदिन्द्राहं यथा । हौहोवा हायि । तुवाम् । ईशीयवस्व औ
— १ १ २ १ — १ २ २ — १
२ । हुवायि । हुवाये । काई २ त् । स्तोतासखौ २ । हुवाइ ।
१ २ २ १ ^ ३ ५२ २ २ १ २
हुवाये । साया २३ त् । हौ २ वा २३४ औ होवा । अग्निरा-
२ ३ १ २ १ १
हुता २३४५ः ॥ ५ ॥
२ ३ ४२ ५ ५ २ २ १ १ २२ ^ ३
आऔ होवा हायि । यदिन्द्राहाम् । यथा । त्वम् । ऐहीयै-
२ १ २ २ १ २२ ^ ३ २ —
ही १ । आइषीयवस्व आइकइत् । ऐहीयै ही ऽ १ । आ २ यि ।
१ — १ ^ २ १ १ ^ ३ ५२ २
स्तोता २ मायिगो २ । सखा २३ । सा २ या २३४ औ होवा ।

२ १ २ २ ३ २ १ १ १
शुक्र आहुता २३४५ः ॥ ६ ॥

४ १ ४ १ ४ १ ४ २ १ २ २ १ २ ३ ११
एतोन्विन्द्रꣳ स्तवामा । शुद्धꣳ शुद्धेनसा २३ म्ना । शुद्धैरु
२ २ २ १ २ २ ११ २ १ ^ २ २
क्थैर्वावृध्वा २३ꣳ साम् । शुद्धैरा २३ शी ३ । वाँ २ न् । ममा
५ २ २ ३ १ १ १ १
३४ औहोवा । तु २३४५ ॥ ७ ॥

५२ २ ५ २ १ १ २ १ —
एतोन्विन्द्रꣳ स्तवा ६ मा । शुद्धꣳ शुद्धे । न । साम्ना २ ।
१ २ २ १ ^ ३ ५
शुद्धाइरु ३ क्था ३ यिः । वावा २ ध्वाँ २३४ ꣳ साम् ।
२ ११ २ १ २ १ २ १
शुद्धैरा २३ शी । वाँन्ममत्तु । इडा २३ भा ३४३ । औ २३४५
५
इ । डा ॥ ८ ॥

५ २ १ २ १ ^ ३
तरत्समा । दीधावा ऽ १ ता २३ यि । धारा २ सू २३४
५ २ १ २ ^ ३ ५२ २ १ ३
ताः । स्य आ २३ । धा २ सा २३४ औ होवा । तरत्समन्दी
२२ ३ १ १ १
धावती २३४५ ॥ ९ ॥

ततः सव्येन "सुसम्प्रोक्षितमस्त्विति" द्विजाग्रभूमिं जलेनासिञ्चेत् । "सन्त्विति" प्रत्युक्तिः । "शिवा आपः सन्तु" इति द्विजहस्ते जलदानम् । "सौमनस्यमस्त्विति" पुष्पाणि सर्वेषां हस्ते दद्यात् । "अक्षतञ्चारिष्टञ्चास्तु" इत्यक्षतान्दद्यात् ।

ततः समाचाराद्द्विजा यजमानस्य शिरसि "दीर्घमायुः शान्तिः पुष्टिस्तुष्टिश्चास्त्विति" अभिषिञ्चेयुः । अथ प्राचीनावीती पितृधर्मेणोपविश्य, सद्द्विगुणकुशं जलमादाय "अमुकगोत्रस्यास्मत्पितुरमुकशर्मणो वस्वात्मनो दत्तं श्राद्धञ्चाक्षय्यमस्तु" इति ब्राह्मणहस्ते जलमासिञ्चेत् । "अक्षय्यमस्त्विति" प्रत्युक्तिः । एवमितरयोः । "रुद्रात्मन" "आदित्यात्मन" इति विशेषः । एवमेव मातामहादिभ्यश्च ।

ततो "अघोराः पितरः सन्त्विति" तान्प्रति वदेत् । "सन्त्वघोराः पितर" इत्युक्ते "गोत्रं नो वर्द्धतां" इति वदेत् । "गोत्रं नो वर्द्धतां" इत्युक्ते सव्येन न्युब्जपात्रद्वयोपरि स्थितपवित्रसमूहं सकुशमादायापसव्येनोभयपिण्डपङ्क्त्युपर्यास्तीर्य "स्वधां वाचयिष्ये" इति पृच्छेत् । वाच्यतामित्यनुज्ञातो "गोत्रेभ्यः पितृभ्योऽमुकशर्मभ्यो वसुरूपेभ्यः स्वधोच्यतामिति" वदेत् । अस्तु स्वधेत्युक्ते तथैव पितामहेभ्यः प्रपितामहेभ्यो मातामहादिभ्यश्च स्वधां वाचयेत् । ततो न्युब्जीकृतमर्घपात्रमुत्तानं कृत्वा तेन प्रणीतास्थं जलमादाय ।

ॐऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुत॰ स्वधा स्थ तर्पयत मे पितॄन् ।

इति पितृपिण्डपङ्क्त्युपर्यासिञ्चेत् । तत एवमेवापरेण पात्रेण मातामहपङ्क्त्युपर्यासिञ्चेत् । ततः सव्येन वैश्वदैविकब्राह्मणहस्तोपरि जलमासिञ्चेत् । "विश्वेदेवाः प्रीयन्तामिति ब्रूतेति" वदेत् । "प्रीयन्तां विश्वेदेवाः"इति प्रत्युक्ते पिण्डान्भोजनपात्राणि चालयेत् ।

ततो दैवपूर्वं यथाशक्ति दक्षिणां दद्यात् । सव्येन सुवर्णप्रतिनिधिभूतां दक्षिणामादाय—"अस्य श्राद्धस्य कृतप्रतिष्ठासिद्ध्यर्थं इमां दक्षिणां पूरूरवार्द्रवनामभ्यो विश्वेभ्यो देवेभ्यः स्वाहेति" जलदानपूर्वकं दद्यात् । एवं द्वितीयदैविकब्राह्मणाय दक्षिणां दत्वा, प्राचीनावीतिना पितृब्राह्मणेभ्यो रजतदक्षिणां दद्यात् । अस्य श्राद्धस्येत्याद्यभिधाय, गोत्रेभ्य इत्यादि प्राग्वत् । एवं मातामहादिभ्यश्च ।

ततः कृताञ्जलिः प्रार्थयेत् । "दातारो नोऽभिवर्द्धन्ताम्" । "अभिवर्द्धन्तां वो दातारः" इति द्विजाः । "वेदाः सन्ततिरेव च" । "अभिवर्द्धतां वः सन्ततिः" । "श्रद्धा च नो मा व्यगमत्"। "मा विगमद्वः श्रद्धा" । "बहुदेयञ्च नोऽस्तु" । "अस्तु वो बहुदेयम्" । "अन्नञ्च नो बहु भवेत्" । "भवत्वन्नं बहु" । "अति-

र्थीश्च लभेमहि" । "लभध्वं चातिथीन्" । "याचितारश्च नः सन्तु" । "सन्तु वो याचितारः" । "मा च याचिष्म कञ्चन" । "मा याचध्वं कञ्चन" । "एता एवाशिषः सन्तु" । "एताः सत्याशिषः सन्तु" । ततो बद्धाञ्जलिः "स्वस्ति भवन्तो ब्रुवन्त्विति" विप्रान्प्रार्थयेत् । ॐ स्वस्तीति तैरुक्ते श्राद्धपरिपूर्णतां प्रार्थयेत् । "अद्य पूर्वोच्चरित एवं ग्रहगुणविशेषणविशिष्टायां तिथौ गोत्राणां पितृ-पितामह-प्रपितामहानां अमुकामुकामुकशर्मणां वसुरुद्रादित्यस्वरूपाणां, एवं मातामहादीनभिधाय, अमावास्यानिमित्तश्राद्धकृतस्य विधेर्यन्न्यूनमतिरिक्तं तत्सर्वं श्रीमतां प्रसादात्परिपूर्णमस्तु" । अस्त्विति द्विजैरुक्ते पितृपङ्क्तावुपविष्टस्य मुख्यस्याङ्गुष्ठमपसव्येन गृहीत्वा—

ॐ वाजे वाजे वत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥

इत्येतया पितृपूर्वं विसृज्य, मातामहानप्येवमेव विसृज्य, सव्येन दैविकानपि विसृज्योत्थापयेत् । ततः सर्वे पादप्रक्षालनदेशे दैविकाः प्राङ्मुखाः, पैतृका उदङ्मुखास्तिष्ठेयुः । ततो यजमानः श्राद्धोदकपात्रमादाय, सव्येनैव आमावाजस्येति मन्त्रेण ब्राह्मणानां परितः प्रदक्षिणां जलधारां दद्यात् । ततः स्वयमाचम्य, कृताञ्जलिः प्रार्थयेत्—

अद्य मे सफलं जन्म भवत्पादाभिवन्दनात् ।
अद्य मे वंशजाः सर्वे याता वोऽनुग्रहादिवम् ॥
पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः ।
तत् क्लेशजातचित्तं तु विस्मृत्य क्षन्तुमर्हथ ॥
मन्त्रहीनं क्रियाहीनं सम्पद्धीनं द्विजोत्तमाः ।
श्राद्धं सम्पूर्णतां यातु प्रसादाद् भवतां मम ॥

ततः समाचारात्—

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं तृप्ता नृणां पितामहाः ॥

इदं पठित्वाऽक्षतदानपूर्वकमाशिषो विप्रा दद्युः । ततो गृहसीमान्तमनुव्रज्य, प्रदक्षिणीकृत्याभिवाद्य, वामदेव्यं गीत्वा, गृहं प्रविशेत् । ब्राह्मणैरपि सुप्रदेशे गत्वा, उपविश्य, वामदेव्यं गेयम् ।

इत्यमावास्याश्राद्धप्रयोगः समाप्तः ॥

---

ततः पत्नीयजमानौ हविष्यं प्रातर्होष्यमाणद्रव्यव्यतिरिक्तं सघृतमसौहित्येन भुञ्जीयाताम् । अग्निशालायामास्तृतायां भूमौ शयीयाताम् । पुण्यकथादिजागरणोपायेन रात्रिं ब्रह्मचर्येण नयेयाताम् । इति पर्वाहकृत्यप्रयोगः ॥

## अथ पक्षादिस्थालीपाकप्रयोगः ॥

प्रातर्होमोत्तरं पूर्वाह्ण एव प्रक्षालितपाणिपाद उदगग्रसंन्यस्तयज्ञिय-वृक्षजपीठे कुशोत्तरे प्राङ्मुख उपविश्य, मन्त्रेण शिखां बध्वा, सोपग्रह आचम्य प्राणमायम्य देशकालौ सङ्कीर्त्य "ममात्मसंस्कारार्थं श्रीपरमेश्वरप्रीतये पक्षादिस्थालीपाकमहं करिष्ये" इति सङ्कल्प्य, प्रादेशमितां समिधमग्नौ तूष्णीं हुत्वा, यथाविधिना 'इदं भूमेरिति' भूजपं कृत्वा, अग्न्यभिमुखाङ्गुल्यग्रगृहीतकुशादि-हस्ताभ्यां सर्वदिग्विक्षिप्ताग्न्यवयवसम्वरणरूपं परिसमूहनमुपविष्ट एव प्रादक्षिण्येनेमꣳस्तोममित्यादि ऋक्त्रयेण प्रत्यृचं कुर्यात् ।

इमꣳस्तोममितित्रयाणां कुत्सो जगत्यग्निः परिसमूहने विनियोगः ।

ॐइमꣳ स्तोममर्हते जातवेदसे रथमिव सम्महे मा मनीषया ।
भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये मा रिषामा वयं तव ॥१॥
भरामेध्मं कृणवामाहवीꣳषि ते चितयन्तः पर्वणा पर्वणा वयम् ।
जीवातवे प्रतराꣳसाधया धियोऽग्ने सख्ये मा रिषामा वयं तव ॥२॥
शकेम त्वा समिधꣳ साधया धियस्त्वे देवा हविरदन्त्याहुतम् ।
त्वमादित्याꣳ आवह ताꣳह्युश्मस्यग्ने सख्ये मा रिषामा वयं तव ॥३॥

ततः प्रादक्षिण्येनाग्नेर्दक्षिणतो गत्वा, कुण्डात्स्थण्डिलाद्वा बाहु-

मात्रां भूमिं त्यक्त्वा, तत्र प्राङ्मुखः स्थित्वा, यज्ञियवृक्षजं पीठं ब्रह्मासनत्वेन संस्थाप्य, तदुपरि त्रीन्कुशानास्तीर्य, स्वासनमागच्छेत् । अथ ब्रह्मा प्रादक्षिण्येनाग्नेर्दक्षिणतो गत्वा, स्वासनेऽग्निमारभ्य प्रादक्षिण्येनोदङ्मुखीं जलधारामविच्छिन्नां दत्वा, आस्तीर्य, कुशानां पूर्वतः प्रत्यङ्मुखास्तिष्ठन्वामहस्ताङ्गुष्ठानामिकाभ्यां आसनात्तृणं गृहीत्वा ।

प्रजापतिर्यजुः परावसुर्देवता तृणनिरसने विनियोगः ।

"ॐ निरस्तः परावसुरिति" यजुषा नैर्ऋत्यां तत्तृणं निःक्षिप्य, उदकं स्पृष्ट्वा, वसिष्ठो यजुः परावसुर्देवता आसनोपवेशने विनियोगः ।

"ॐ आ वसोः सदने सीदामीति" अग्न्यभिमुखो वाग्यत उपविशेत् । कर्मण्ययथा क्रियमाणे तत्सिद्ध्यर्थं यथाशास्त्रं भाषेत । यज्ञानुपयुक्तां लौकिकवाचं परिहरेत् । प्रमादादयज्ञियभाषणे "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुले" । "विष्णोः शिरोऽसि यशो धेहि" इति यजुर्वा । "नमो विष्णवे" इत्येवं वा पठेत् । बद्धाञ्जलिः कर्मसमाप्तिं यावदासीत । ब्रह्मणोऽभावे कर्त्रैव छत्रमुत्तरीय-जलपात्रदर्भवटूनामन्यतमं प्रागुक्तप्रकारेणावसोरित्यनेन ब्रह्मासने निधाय, तेनैव मार्गेण स्वासनमागत्य, अग्नेरुत्तरस्यां व्यवधानं विना यथाविनियोगं पूर्वक्रमेणोत्तरायताग्रं आसादयेत् ।

यथा–शुद्धोदकपात्रम् , चरुस्थाली, कुशोलूखल-मुसल-कंसपात्र, सहविःशूर्प, पवित्रद्वय-मेक्षण-त्रिशाखच्छिन्नमुष्टिचतुष्टयबर्हिरिध्मकाष्ठान्यष्टादश, घृतमाज्यस्थाली, समिद्द्वयं, सम्मार्गकुशाः, स्रुवः, सुपात्रस्थमुष्णोदकं, बहुभोक्तृपुरुषाहारपरिमितमन्नादिना पूर्णपात्रमिति ।

एतान्यासाद्य, पात्रे शुद्धोदकमापूर्य, गायत्र्या तदभिमन्त्र्य

कुशाग्रगृहीतजलेनासादनक्रमेण पात्राणि कर्मसाधनसामग्रीश्च प्रोक्ष्य, कांस्यपात्रेण निर्वापपक्षे निर्वापात्पूर्वं सजलां चरुस्थालीमग्नावधिश्रयेत् । स्थाल्या निर्वापपक्षे निर्वापोत्तरमधिश्रयणम् ।

अग्नेः पश्चात्प्रागग्रान्स्त्रीन्कुशानास्तीर्य्य, तेषु प्रक्षालिते उलूखलमुसले कंसपात्रं सहविः शूर्पञ्च निधाय, कांस्येन चरुस्थाल्या वा व्रीहीन्यवान्वा समादाय "अग्नये त्वा जुष्टं निर्वपामीति" उलूखले प्रक्षिप्य, पश्चाद्वारद्वयं तूष्णीं तथैव प्रक्षिपेत् । अन्यत्र चतुर्थ्यन्ततत्तद्देवतानाम्ना निर्वापः । तत उलूखलस्य पश्चात्प्राङ्मुखोपविष्ट उपरिगतं दक्षिणं यथाभवत्येवं हस्ताभ्यां मुसलमादाय, व्रीह्यादीन्कण्डयित्वा, शूर्पे कृत्वा, निःपवनेन तुषानपसारयेत् । एवं सकृत्कण्डनेन तुषानपनीय, एवमेव कण्डनपूर्वकं त्रिः कम्बूकापनयनं कृत्वा, पात्रान्तरे कृत्वा, देवदैवत्ये चरौ त्रिर्मनुष्यदैवत्ये द्विः, पितृदैवत्ये सकृत्प्रक्षाल्य, अग्नावधिश्रितचरुस्थाल्यामुदगग्रे पवित्रे संन्यस्य, त्रिःप्रक्षालितांस्तण्डुलांश्चरुस्थाल्यां प्रक्षिपेत् । ततो मेक्षणेन प्रदक्षिणमूर्द्ध्वं मिश्रयन्ननतिशिथिलं अकठिनं अदग्धं कौशल्येन श्रपयेत् ।

ततः सुशृतं चरुं पूर्ववत्पवित्रे संन्यस्यासकृदाज्येन स्रुवगृहीतेनाभिघारयेत् । ततोऽग्नेरुत्तरतश्चरुमुद्वास्य, पवित्रान्तर्हितमेव प्रत्यभिघारयेत् ।

अथाग्निमिन्धनप्रक्षेपेण सुसमिध्य परिस्तरणं कुर्यात् । आसादिताद्बर्हिराद‌ाय, चतुर्द्धा षोढा वा विभज्य, एकं भागं दक्षिणेनादाय, सव्ये कृत्वा, तस्माच्चतुर्थांशमादाय, आग्नेयकोणादारभ्य, उदक्संस्थमग्नेः पुरस्तात्स्तृत्वा, सव्यहस्ताद्द्वितीयांशमादायाग्नेर्दक्षिणत आग्नेयीसंलग्नं प्रागग्रं स्तृत्वा, पुनः सव्यहस्तात्तृतीयांशमादाय, अग्नेरुत्तरतः प्रागग्रमैशानीसंलग्नं स्तृत्वा, सव्यहस्ताच्चतुर्थांशमादाय, वह्नेः पश्चान्निर्ऋतिकोणादारभ्य, उदक्संस्थं

वाय्वन्तं स्तृत्वा, पुनरासादितात् द्वितीयांशमादाय, सव्ये कृत्वा, पूर्ववत्स्तरणम् । प्रथमतः स्तृतानां मूलानि प्रागग्रैराच्छादयन्सर्वासु दिक्षु बहुतृणं विदिक्षु संलग्नं स्तृत्वा, पुनरासादिताच्तृतीयांशमादायैवमेव प्रागग्रैः पूर्वं प्रथमतः स्तृतानां मूलानि गोपयन्सर्वासु दिक्षु स्तृणुयात् । षोढा विभागपक्षे एवं पञ्चकृत्वः स्तरणम् । चतुर्धा विभागपक्षे त्रिःकृत्वः । उभयान्यतमपक्षेऽपि भागैकं यज्ञवास्त्वर्थमवशेषयेत् । एष परिस्तरणविधिः क्षिप्रहोमव्यतिरिक्तचरुतन्त्रेषु भवति ।

ततोऽग्नेरुत्तरतः शुद्धोदकपूर्णचमसं स्थापयेत् करिष्यमाणउदककार्यार्थम् । तत आत्माग्न्योरन्तरालदेशे स्तृतबर्हिषि उदगुद्वासितं स्थालीपाकमासाद्य, आसादितमिध्ममादाय, प्रणीताभिरद्भिरभ्युक्ष्य, प्रजापतिं मनसा स्मृत्वा अग्नावादध्यात् ।

तत आज्यसंस्कारः । स्तृतशेषाद्बर्हिषोऽनन्तर्गर्भिणं साग्रं कुशतरुणद्वयं दक्षिणेनादाय, सव्ये कृत्वा, प्रादेशमात्रं मिमीय, यवव्रीह्याद्यौषधिमन्तरा कृत्वा,

प्रजापतिर्यजुः पवित्रे पवित्रच्छेदने विनियोगः । "ॐ पवित्रे स्थो वैष्णव्यौ" इति मन्त्रान्तेन नखस्पर्शनमकुर्वन् छिन्द्यात् । ततस्तत्पवित्रद्वयं सव्येन मूलदेशे गृहीत्वा,

प्रजापतिर्यजुः पवित्रे अनुमार्जने विनियोगः । "ॐ विष्णोर्मनसा पूते स्थः" ।

इति मन्त्रेण प्रणीताभिरद्भिर्दक्षिणहस्तेन प्रक्षालयेत् । ततोऽग्नेरुत्तरत आसादितामाज्यस्थालीं दक्षिणेनादायात्माग्न्योरन्तरालदेशे संस्थाप्य, तस्यां उदगग्रे पवित्रे संन्यस्य, उत्तरत आसादितमाज्यमादाय, सपवित्रायामाज्यस्थाल्यामापवेत् । ततोऽङ्गुष्ठाभ्यां पवित्रे मूलदेशे संगृह्य, अनामिकाभ्यामग्रदेशे गृहीत्वा, प्रजापतिर्यजुराज्यं देवता आज्योत्पवने विनियोगः ।

ॐ देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः ।

इति मन्त्रेणाज्यस्थालीस्थमाज्यं पश्चिमभागस्थं पवित्राभ्या-मूदूर्ध्वं नीत्वा, एवं तूष्णीं वारद्वयं मध्यदेशे पूर्वदेशे च उत्पूय, पवित्रे सव्येनादाय, दक्षिणेन प्रणीताभिरद्भिः सम्प्रोक्ष्याग्नौ प्रक्षि-पेत्। तत आज्यस्थालीं दक्षिणेनादायाग्नावधिश्रित्याज्यं विलाप्यो-दगुद्वास्य, आत्माग्न्योरन्तराऽऽसादितस्थालीपाकात्पूर्वस्यामासा-दयेत् । ततः पूर्ववत्पर्युक्षणम् । ततो दक्षिणेन समिदक्षतमादाय,

वसिष्ठ ऋषिः यजुश्छन्दः कालाग्निरुद्रो देवता जपे विनियोगः। तपश्चेत्यारभ्य श्वासं नियम्यावान्त्वित्यन्तं ऋचान्तं पठित्वा, ममा-भीष्टं सिद्ध्यत्विति चिन्तयन्भूर्भुवः स्वरोमिति वैरूपाक्षमारभ्य श्वासं मुक्त्वा पठेत्। 'ब्रह्मणः पुत्राय नम' इत्यन्तं पठित्वा, अक्षता-नग्नौ प्रादक्षिण्येन समाचाराद्ब्रह्मणे दत्वा, तथैव हस्तं परावर्त्याग्नौ समिधं प्रक्षिपेत् । ततः स्रुक्स्रुवौ मेक्षणञ्च दक्षिणेनादाया-सादितेनोष्णोदकेन तानि प्रक्षाल्य, सव्ये कृत्वा, आसादितान्त्स-म्मार्गकुशानादाय, सम्मार्गाग्रैर्मूलतोऽग्रपर्यन्तं स्रुवं सम्मृज्य, एव-मेव स्रुचं मेक्षणञ्च पृथक्सम्मार्ज्य, दक्षिणेनादाय, अधोमुखानि प्राञ्चमग्नौ प्रताप्य, सव्ये कृत्वा, प्रणीताभिरद्भिः सम्प्रोक्ष्य, पुन-स्तथैव कुशैः सम्मार्ज्य, प्रताप्य, आत्माग्न्योरन्तरालस्तृते बर्हिषि आज्यचर्वोरुत्तरत आसादयेत् ।

ततश्चतुरङ्गुलं स्रुवस्य मूलं त्यक्त्वा, स्रुवमादायाज्यस्थालीतः स्रुवचतुष्टयं प्रथम-द्वितीय-तृतीय-चतुर्थ-क्रमेण संख्यापूर्वकं स्रुचि कृत्वा, षडङ्गुलं त्यक्त्वा, स्रुक्समादाय "अग्नये स्वाहेति प्रजापति-र्यजुरग्निः आज्यभागहोमे विनियोगः" । "ॐ अग्नये स्वाहेति" समिद्धस्याग्नेरुत्तरभागे प्राञ्चं जुहुयात्। इदमग्नये न ममेति त्यागः। पुनस्तथैवाज्यमादाय, सोमदेवताविशिष्टमृष्यादीन्स्मृत्वा, "सोमाय

स्वाहेति" अग्नेर्दक्षिणभागे प्राञ्चं जुहुयात् । इदं सोमाय न ममेति त्यागः ।

अथ स्रुच्याज्यमुपस्तीर्य, अवदानद्वयं चरोर्मध्यात्पूर्वार्द्धाच्चावदाय स्रुचि कृत्वा, पञ्चार्षेयाणां पश्चार्द्धात्तृतीयमादाय, आज्येन प्रत्युपस्तीर्य, आज्येनावदानस्थानमवभ्यज्य, अग्निर्देवताऋक्‌छन्दादीन्स्मृत्वा "प्रधानहोमे विनियोगः" इति उक्त्वा "अग्नये स्वाहेति" समिद्धस्याग्नेर्मध्ये जुहुयात् । त्यागस्तथैव । एवं त्रिरभावे सकृद्वा होतव्यम् । ततः स्रुवेणाज्याहुतिचतुष्टय व्याहृतिभिर्जुहुयात् । व्याहृतीनां विश्वामित्र-जमदग्निभरद्वाजा गायत्र्युष्णिगनुष्टुबग्नि वायुसूर्याः समस्तानां प्रजापतिर्बृहती प्रजापतिः होमे विनियोगः ।

ॐ भूः स्वाहा । इदमग्नये न मम ।

ॐ भुवः स्वाहा । इदं वायवे न मम ।

ॐ स्वः स्वाहा । इदं सूर्याय न मम ।

ॐ भूर्भुवः स्वः स्वाहा । इदं प्रजापतये न मम ।

ततः स्रुच्युपस्तीर्य, चरोरीशानकोणात्सकृदेव बहुतरं मेक्षणेन स्रुचि कृत्वा, पुनर्द्विरभिघार्य, अवदानस्थानमनभ्यज्याग्नये स्विष्टकृन्मन्त्रस्य परमेष्ठी यजुः स्विष्टकृत् होमे विनियोगः । "ॐ-अग्नये स्विष्टकृते स्वाहेति" अग्नेरीशानकोणे पूर्वहुताभिराहुतिभिरसंस्पृष्टा होतव्या । तत "इदमग्नयेस्विष्टकृते न ममेति" त्यागः ।

अथ व्यस्तव्याहृतिभिः स्रुवेणाज्याहुतित्रयं जुहुयात् । ततः समिद्धोमानुपर्युक्षणप्रसेकान्विधाय, यज्ञवास्तु कुर्यात् । स्तरणसमयावशेषितबर्हिर्मुष्टिं दक्षिणेनादाय, प्रजापतिर्यजुर्विश्वेदेवाः बर्हिरभ्यञ्जने विनियोगः ।

"ॐ अक्तुꣳरिहाणा व्यन्तु वय" इति मन्त्रेणाज्यस्थालीस्थे आज्ये, तदनवशेषे चरौ वा अग्राण्यभ्यज्य, द्विस्तूष्णीमभ्यज्य, ततो दक्षिणेन मूलदेशे सगृह्याग्रदेशे वामेन संगृह्य, सकृन्मन्त्रेण द्विस्तू-

र्णौ मध्यदेशमभ्यज्य, दक्षिणेन मध्यदेशादधो गृहीत्वा, पूर्ववन्मूलदेशमभ्यज्य, सव्ये कृत्वा, दक्षिणेन प्रणीताभिरद्भिरभ्युक्ष्य, दक्षिणेनादाय, प्रजापतिरनुष्टुब् रुद्रः बर्हिर्होमे विनियोगः ।

ॐ यः पशूनामधिपती रुद्रस्तन्तिचरो वृषा ।

पशूनस्माकं मा हिꣳसीरेतदस्तु हुतं तव स्वाहान्तेन जुहुयात् । इदं रुद्राय पशुपतये न ममेति त्यागः । तत उदकोपस्पर्शः ।

ततः प्रजापतिर्यजुर्वसवः होमे विनियोगः । ॐ वसुभ्यः स्वाहेति स्रुवेणाज्याहुतिं हुत्वा, इदं वसुभ्यो न ममेति त्यागः । ततः प्रदक्षिणमग्निं परिक्रम्य, चमसं निनीय. पुनः पूरयित्वा, स्थाने निदध्यात् । ततः समाचारात्स्रुसम्प्रोक्षितमास्त्वित्यादि । अथ स्वयं कुशोदकमादाय; "अस्य पक्षादिकर्मणः साङ्गतासिद्ध्यर्थं पूर्णपात्रदक्षिणां ब्रह्मन् तुभ्यमहं सम्प्रददे । एवं ब्राह्मणमेकं भोजयिष्ये" । ततो वामदेव्यं गीत्वा, चतुर्भिश्चेत्यग्निं प्रणमेत् । चरुशेषप्रतिपत्त्यादिकं निर्णयोक्तं कर्तव्यम् । इति पक्षादिस्थालीपाकप्रयोगः ।

## अथ पुनराधानप्रयोगः ।

पुनराधाने अग्न्यागारकरण-वृद्धिश्राद्धाऽहतवस्त्रधारणाराणिप्रदानप्रातर्मन्थनादीनि न भवन्ति । विनष्टभार्यस्य पुनः कृतदारस्य पुनराधाने नान्दीश्राद्धं न भवति । न ब्रह्मवरणम् । अतिक्रान्तहोमानां होमद्रव्यदानम् । "स्मार्त्ताग्नेः पुनराधानमहं करिष्ये" इति प्रयोगः । ततोऽग्निमन्थनम् । लक्षणं कृत्वाग्नेः स्थापनम् । समिद्धोमाद्याज्यतन्त्रेणासादनम् । व्याहृतित्रयहोमान्ते कस्तेजामिरित्याद्यध्यायेनाग्निमुपतिष्ठेत् । तस्य ऋष्यादयः—कस्तेजामिर्गोतमो गायत्र्यग्निः, ईडेन्यो विश्वामित्रो गायत्र्यग्निः, उत्ते बृहन्तो इत्यस्य विरूपो गायत्र्यग्निः, पाहि नो अग्ने इत्यस्य भर्गो गायत्र्यग्निः, इनो राजान्निति त्रितस्त्रिष्टुबग्निरुद्रसूर्याः, कया त इति उशना गायत्र्यग्निः, अग्न आयाहीत्यस्य भर्गो बृहत्यग्निः,

अच्छा नः सुदीतिर्बृहत्यग्निः, अश्वास्यो विश्वामित्रो गायत्र्यग्निः, भद्रो न इति सोम ऋषिः उष्णिगग्निः, अग्ने वाजस्येति गोतमोष्णिगग्निः, विशो विशो व इति गोपवनः प्रथमाया अनुष्टुप् गायत्र्युत्तरयोरग्निः, समिद्धमिति भरद्वाजो जगत्यग्निः, उप त्वाग्निर्गायत्र्यग्निः, अग्न्युपस्थाने विनियोगः।

१ २ ३ ११ २१ ३ २ ३ २ ३क २ २ ३ १ २ ३ २
कस्ते जामिर्जनानामग्ने को दाश्वध्वरः। को ह कस्मिन्नसि श्रितः ॥१॥
३ १२ २१ ३ १ २ ३ १ २ ३ २ २ ३ १ २ ३ १ २
त्वं जामिर्जनानामग्ने मित्रो असि प्रियः। सखा सखिभ्य ईड्यः॥२॥
१ २ ३ ११ २१ ३ १ २ ३ २ ३ २ ३ २ २ ३ २ ३ १२ २१
यजा नो मित्रावरुणा यजा देवाँ ऋतं बृहत्। अग्ने यक्षि स्वं दमम् ॥३॥
३ १ २ ३क २१ ३ ११ २१ ३ २ २ ३ १ २ ३ १ २
ईडेन्यो नमस्यस्तिरस्तमांसि दर्शतः। समग्निरिध्यते वृषा ॥१॥
१ २ ३ १२ २१ ३ २ ३ १ २ ३ १ २ २ ३ १ २
वृषो अग्निः समिध्यतेऽश्वो न देववाहनः। तं हविष्मन्त ईडते॥२॥
१ २ ३ १ २ ३ २ ३ २ २ ३ १ २ ३ २
वृषणं त्वा वयं वृषन् वृषणः समिधीमहि। अग्ने दीद्यतं बृहत् ॥३॥
१ २ ३ १ २ ३ १ २ ३ १ २ १ २ ३ १ २
उत्ते बृहन्तो अर्चयः समिधानस्य दीदिवः। अग्ने शुक्रास ईरते॥१॥
१ २ ३ २ १ २ ३ १ २ १ २ ३ १ २
उप त्वा जुह्वो३ मम घृताचीर्यन्तु हर्यत। अग्ने हव्या जुषस्व नः॥२॥
३ १२ २१ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
मन्द्रं होतारमृत्विजं चित्रभानुं विभावसुम्। अग्निमीडे स उ श्रवत्॥३॥

३ १ २ ३ २ ३ ३ १ २
पाहि नो अग्न एकया पाह्यु३त द्वितीयया।
३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
पाहि गीर्भिस्तिसृभिरूर्जाम्पते पाहि चतसृभिर्वसो ॥ १ ॥
३ १२ २१ ३ २ ३ १ २ ३ २ ३ १ २
पाहि विश्वस्माद्रक्षसो अराव्णः प्र स्म वाजेषु नोऽव।
१२ २१ ३ १ २ ३ १ २१ ३ २
त्वामिद्धि नेदिष्ठं देवतातय आपिं नक्षामहे वृधे ॥ २ ॥
१ २ ३ १२ २१ ३ २ ३ १ २ ३ १ २
इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सुषुमां अदर्शि।

३ १२ २१ ३ १ २ ३१ २ ३ १२३१२
चिकिद्विभाति भासा बृहता सिक्नीमेति रुशतीमपाजन् ॥१॥
१२ २१३१२ २१३ २ ३१२१२ ३२ ३२
कृष्णां यदेनीमभि वर्पसा भूज्जनयन्नयेषां बृहतः पितुर्जाम् ।
३२ ३१२ २१ ३२ ३११ २१ ३१२ १
ऊर्ध्वं भानुꣳ सूर्यस्य स्तभायं दिवो वसुभिररतिर्विभाति ॥२॥
२२ ३२३१२ ३ २३ १२ ३२ ३क२२ ३२
भद्रो भद्रया सचमान आगात्स्वसारं जारो अभ्येति पश्चात् ।
३ १२ २२३ २३ २ ३१ ३ १२३२२१२
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भि र्वर्णैरभिराममस्थात् ॥ ३ ॥

१२ ३ १ २ ३१२ १२ ३१२
कया ते अग्ने अङ्गिर ऊर्जो न पादुपस्तुतिम् । वराय देवमन्यवे ।
१२३२ ३ १२ ३ १२ १२ ३१२२२
दाशेम कस्य मनसा यज्ञस्य सहसो यहो । कदुवोच इदं नमः ॥२॥
३२ ३२३ २ ३१२ ३२
अधा त्वꣳ हिनस्करो विश्वा अस्मभ्यꣳ सुक्षितीः ।
१२ ३१२
वाजद्रविणसो गिरः ॥ ३ ॥

२२१२ ३ २ ३१२
अग्न आयाह्यग्निभिर्होतारं त्वा वृणीमहे ।
१२ २२ ३१२ ३१२३ १२ ३२३१२
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥ १ ॥
२ ३ १ २ ३२३१२ २१२
अच्छा हि त्वा सहसः सूनो अङ्गिरस्त्रुचश्चरन्त्यध्वरे ।
३१२ २२ ३१२ ३ २ ३१२३२
ऊर्जो न पातं घृतकेशमीमहेऽग्निं यज्ञेषु पूर्व्यम् ॥ २ ॥

१ २ ३१२ ३१२ ३२
अच्छा नः शीरशोचिषं गिरो यन्तु दर्शतम् ।
१ २३२३ १२ ३१२ ३ २३१२
अच्छा यज्ञासो नमसा पुरूवसुं पुरु प्रशस्तमूतये ॥ १ ॥
३२ ३१२ २२ ३१२ ३२३ १२
अग्निꣳ सूनुꣳ सहसो जातवेदसं दानाय वार्याणाम् ।
३२उ ३२३ २ ३१- २२ ३१२ ३२
द्विताय्योऽभूदमृतो मर्त्येष्वाहोता मन्द्रतमो विशि ॥ २ ॥

१२ ३ २ ३२३१२ २२ २३२ ३१२
अदाभ्यः पुर एता विशामग्निर्मानुषीणाम् । तूर्णीरथः सदानवः ॥१॥

३ १र २र ३ १२ ३ १ २ २ १ २ १२
अभि प्रयाꣳसि वाहसा दाश्वाꣳ अश्नोति मर्त्यः । क्षयं
३ १ २
पावक शोचिषः ॥
३ १र २र ३२३ १ २३२ ३१२ ३२ ३ १२
साह्वान्विश्वा अभियुजः क्रतुर्देवानाममृक्तः । अग्निस्तु विश्र-
वस्तमः ॥ ९ ॥
३ १ २ ३१र २र ३२ ३१ २३२३१ २ ३२ २२
भद्रो नो अग्निराहुतो भद्रा रातिः सुभगभद्रो अध्वरः । भद्रा
३ १र २र
उत प्रशस्तयः ॥
३ १र २र ३ १ २३१ २ ३ २
भद्रं मनः कृणुष्व वृत्रतूर्ये येनासमत्सु सासहिः ।
१ २ ३ १ २ ३ २ ३ १ २ ३१ २ ३ १ २
अव स्थिरा तनुहि भूरि शर्द्धतां वने माते अभिष्टये ॥१०॥
२ ३ १ २ ३ १ २३ १ २ ३ १ २
अग्ने वाजस्य गोमत ईशानः सहसो यहो । अस्मे देहि जात-
३ २ ३ १ २
वेदो महिश्रवः ॥
१ २ ३ १र २र ३ २ ३ २ ३ १ २ ३ २
स इधानो वसुष्कविरग्निरीडेन्यो गिरा ।
३ २ ३ १ २
रेवदस्मभ्यं पुर्वणी कदीदिहि ॥
३ १ २ ३२उ ३ १ २ ३१र २र १ २ ३
क्षपो राजन्नुत त्मनाऽग्ने वस्तो रुतोषसः । स तिग्मजम्भर-
१ २ ३ १ २
क्षसो दह प्रति ॥ ११ ॥
३ १ २ ३ १ २ ३ १ २ ३ २
विशो विशो वो अतिथिं वाजयन्तः पुरुप्रियम् ।
३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
अग्निं वो दुर्यं वचस्तुषे शूषस्य मन्मभिः ॥
१ २क ३ १ २ ३ २उ ३ १ २ ३ १ २ ३
यं जनासो हविष्मन्तो मित्रं न सर्पिरासुतिम् । प्रशꣳसन्ति
१ २
प्रशस्तिभिः ॥
१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २र २र ३ २
पन्याꣳसं जातवेदसं यो देवतात्युद्यता । हव्यान्यैरयद्दिवि ॥१२॥

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
समिद्धमग्निꣳ समिधा गिरा गृणे शुचिं पावकं पुरो अध्वरे
३ २ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ध्रुवम् । विप्रꣳ होतारं पुरुवारमद्रुहं कविꣳ सुम्नैरीमहे जातवेदसम् ॥
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ २
त्वां दूतमग्ने अमृतं युगे युगे हव्यवाहं दधिरे पायुमीड्यम् ।
३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
देवासश्च मर्तासश्च जागृविं विभुं विश्पतिं नमसा निषेदिरे ॥
३ १ २ ३ २ ३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
विभूषन्नग्न उभयाꣳ अनु व्रतादूतो देवानाꣳ रजसी समी-
१ २ ३ १ २ ३ १ २ ३ १ २ २ २ ३ १ २ ३ १
यसे । यज्ञे धीतिꣳ सुमतिमावृणीमहे धस्मानस्त्रिवरूथः शिवो
२
भव ॥ १३ ॥
१ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ २ २
उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः । वायोरनीके
अस्थिरन् ॥
१ २ ३ १ २ २ २ ३ २ ३ १ २ २ २ १ २ ३ १ २
यस्य त्रिधात्ववृतं बर्हिस्तस्थावसन्दिनम् । आपश्चिन्निदधा
३ २
पदम् ॥
३ २ ३ १ २ ३ १ २ २ २ ३ १ २ ३ १ २ २ २
पदं देवस्य मीढुषोऽनाधृष्टाभिरूतिभिः । भद्रा सूर्य इवो
३ २
पदृक् ॥ १४ ॥

ततोऽष्टावाज्याहुतयः । तत्र मन्त्राः—अग्निमीडेति मधुच्छन्दाः, अग्न आयाह्यग्निरिति भर्गः, अग्न आयाहि वीतय इत्यस्य भरद्वाजः, अग्निर्ज्योतिस्त्रयाणां प्रजापतिः, अग्निं दूतं इत्यस्य मेधातिथिः, अग्ने मृड इत्यस्य वामदेवः, सप्तानां गायत्री, अग्न आयाह्यग्निर्बृहती, सर्वेषां अग्निर्देवता आज्यहोमे विनियोगः ।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ १ २
ॐ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारꣳ
३ १ २
रत्नधातमम् ॥ १ ॥

२ ३ १ २ ३ १ ३ १ २
अग्न आयाह्यग्निभिर्होतारं त्वा वृणीमहे ।
१२ २२ ३ १२ ३ १ २ ३ १ २ ३ १ ३ १ २
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥ २ ॥
२ ३ १ २ ३ १ २ ३ २ ३ १ २ १२ २२
अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि
३ १ २
बर्हिषि ॥ ३ ॥
३ २उ ३ १ २ ३ २ ३ २ ३ २ ३ २ २ ३
अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः । सूर्य्यो
२ ३ २ ३ १ २
ज्योतिर्ज्योतिः सूर्यः ॥ ४ ॥
१ २ ३ १२ २२ ३ १२ ३ १ २ १ २ ३ १ २
पुनरूर्ज्जा निवर्त्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यꣳ हसः ॥५॥
३ २ ३ १२ २२ २ २ ३ १ २ ३ १ २ ३ १ २ ३
सह रय्या निवर्त्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या वि-
२ ३ १ २
श्वतस्परि ॥ ६ ॥
३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य
३ १ २
सुक्रतुम् ॥ ७ ॥
१ २ ३ २ ३ २ ३ २ ३ १ २ ३ १२ २२ ३ १ २ ३ २ ३
अग्ने मृड महाꣳ असयय आ देव युञ्जनम् । इयेथ बर्हिरा-
१ २
सदम् ॥ ८ ॥

इदमग्नये न ममेति सर्वत्र त्यागः । एभिर्मन्त्रैराज्याहुत्यष्टकं हुत्वा, ततः पूर्णाहुत्यादिकं पूर्ववत् । सायम्प्रातर्होमौ तन्त्रेणाधानाङ्गभूतौ तदैव । इति पुनराधानप्रयोगः ॥

## अथ पक्षहोमप्रयोगः ।

प्रतिपदि सायङ्काले चतुर्दशाहुतीः संख्याय एकस्मिन्पात्रे कृत्वा, द्वितीयपात्रेऽपि तावत्यः सङ्गणय्य, कृताचमनप्राणायामो देशकालौ सङ्कीर्त्य, "पक्षहोममहं करिष्ये" इति सङ्कल्प्य, भूजप-

पर्युक्षण-समिद्धोमादीन्विधाय, होमद्रव्यपात्रमादाय, अग्नये स्वाहेति चतुर्दशाहुतीर्हुत्वा, द्वितीयपात्रेण प्रजापतये स्वाहेति हुत्वा, समिद्धोमानुपर्युक्षणप्रसेकान्विधाय वामदेव्यं गायेत् । एवं प्रातर्होमः । तत्र सूर्याय स्वाहेति पूर्वाहुतिः ।

सायङ्काले चेत्सायम्प्रातर्होमौ क्रियेते; तदा प्रजापतिदेवत्या आहुतय एकत्र कृत्वा, पात्रद्वये चतुर्दश पृथक्संख्यया सायंहोमतन्त्रेण होमं कुर्यात् । अग्नये स्वाहेति पूर्वाहुतिः । सूर्याय स्वाहेति द्वितीया । ततः प्रजापतये स्वाहेति । समानमन्यत् । इति पक्षहोमप्रयोगः ॥

विश्वेश्वरीं गुणातीतां शुद्धसत्त्वप्रकाशिनीम् ।
नमस्ये तामहं नित्यं कर्मबन्धनमुक्तये ॥ १ ॥

इति श्रीशुक्ल-विश्रामात्मज-शिवराम-विरचितायां गोभिलगृह्यपद्धतौ सुबोधिन्यां तृतीयप्रकाशे पर्वाहकृत्य-स्थालीपाकप्रयोगः समाप्तः ॥

## अथ चतुर्थः प्रकाशः ।

### अथ विवाहादिकर्मणां प्रयोगः ॥

धर्मार्थकाममोक्षादिसाधने भार्याया अन्तरङ्गत्वात्समावृत्तेन ब्रह्मचारिणा कन्यापाणिग्रहणं कर्तव्यम् । तत्र पूर्वं सामुद्रिकाद्युक्त-बाह्य-स्त्रीलक्षणाभिज्ञद्वारा वैधव्याभावपुत्रप्रसूत्वादि-सूचक-प्रशस्तलक्षणवतीं दौर्भाग्यादिसूचक-दोषरहितां आभ्यन्तरलक्षणसम्पन्नां यत्नतः कन्यां परीक्षेत् । तत्र आभ्यन्तरलक्षणज्ञानाय पूर्वोक्तप्रकारेण पिण्डान्कृत्वा, आद्यपिण्डचतुष्टयमाददानामुद्वहेत् । इतरपिण्डचतुष्टयमाददानां परिहरेत् । नवमपिण्ड-ग्रहणे केचित्परिणेयामाहुः ॥

### अथ ब्राह्मविवाहाङ्गभूत-वाग्दानविधिः ॥

तत्र ज्योतिर्विदादिष्टवैवाहिके मासि विवाहनक्षत्रयुते शुभे काले द्वौ चत्वारो अष्टादयो वा प्रशस्तवेषाचारेण तत्पित्रादिना तावतीभिः स्त्रीभिः सह शकुनावलोकनपूर्वकं कन्यापित्रादिर्वरस्य पितुर्गेहे गत्वा, शुभे सवस्त्रपीठासने उपविश्य, वरस्य पित्रादीन्स्वद्वातुदङ्मुखानुपवेश्य, कन्यापित्रादिः प्राङ्मुख उपविश्याचम्य देशकालौ स्मृत्वा "करिष्यमाण-विवाहाङ्गभूतं वाग्दानमहं करिष्ये" इति सङ्कल्प्य गन्धादिदक्षिणान्तैरुपचारैर्गणपतिं सम्पूज्य, वरपित्रादीनपि पूजयेत् । ततो वरं उपवीतफल-पुष्प-वस्त्रादिभिः पूजयेत् । अथ वरपित्रादिः कन्यापित्रादीनपि पूजयेत् । ततः स्वस्तिशब्दादि-मङ्गलशब्दानुच्चार्य, दाता सप्तपूगीफलानि हरिद्रादि-मङ्गलद्रव्यमादाय "अमुकगोत्रोत्पन्नायामुकपुत्रायामुकशर्मणे अमुकगोत्रोत्पन्नामुकपुत्रीं अमुकीनाम्नीं कन्यां ज्योतिर्विदादिष्टे मुहूर्ते दास्ये, वाचा सम्प्रददे" इत्युक्त्वा—

अव्यङ्गेऽपतितेऽक्लीबे दशदोषविवर्जिते ।
मम कन्यां प्रदास्यामि देवाऽग्निगुरुसन्निधौ ॥

इति पठित्वा वरपित्रादिहस्ते पूगीफलानि दद्यात् । ततस्तथैव वरपित्रादिः पूगीफलानि गृहीत्वा, "अमुकवराविषये भवन्तो निश्चिता भवन्तु" इत्युक्त्वा दातृहस्ते दद्यात् । ततो दाता—

वाचा दत्ता मया कन्या पुत्रार्थं स्वीकृता त्वया ।
कन्यावलोकनविधौ निश्चितस्त्वं सुखी भव ॥

इति पूगीफलदातारं प्रति पठेत् । भ्रात्रादौ स्वीकर्तरि "भ्रात्रर्थं" इत्याद्यूहः कार्यः । ततो ब्राह्मणाः 'शिवा आपः सन्त्वि-त्यादि एतद्वः सत्यमस्त्विति' ब्रूयुः । ततो वाग्दानदिवसादारभ्य कन्या पात्रस्थितसिततण्डुलपुञ्जे शचीमावाह्य गन्धादिभिरुपचारैः पूजयेद्विवाहपर्यन्तम् । सम्पूज्यैवं प्रार्थयेत्—

देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि ।
विवाहं भाग्यमारोग्यं पुत्रलाभञ्च देहि मे ॥ इति
ततस्ताम्बूलादि सर्वेभ्यो दत्वा आशीर्मन्त्रान्पठेत् ॥

इति वाग्दानप्रयोगः ॥

## अथ मण्डपादि ।

तत्र पूर्वोक्तनक्षत्रादियुते शुभेऽहनि यथासम्भवं षोडश द्वादशाष्टहस्तं वा मण्डपं चतुरस्रं चतुर्द्वारं कारयित्वा, तस्मिन्मण्डपे गृहात्पूर्वतश्चतुर्हस्तां हस्तोच्छ्रितां विदिक्षु स्तम्भचतुष्टयादियुतां वेदिं निर्माय, तन्मध्ये हस्तमात्रं समचतुरस्रं चतुरङ्गुलोच्चं स्थण्डिलं कारयित्वा, सौभाग्यपुत्रान्विता ब्राह्मणपत्नी तां वेदिमुपलिम्पेत् ।

अथ वरस्य पिता विवाहदिवसे तत्पूर्वदिवसे वा सूतकाद्यन्तरायसम्भवे विवाहादधस्तनदशमेऽहनि पुत्रस्योद्वाहाङ्गं नान्दीश्राद्धं कुर्यात् । देशान्तरविवाहे तत्रैव गत्वा कार्यम् । तत्रैवं प्रयोगः। "मम सुतस्य विवाहादिचतुर्थीकर्मान्त-कर्मगणप्रारम्भाङ्गं आभ्युदयिकं श्राद्धं अहं करिष्ये" इति । एवं कन्यापित्राऽपि कार्यम्—"मम सुतायाः विवाहाङ्गमाभ्युदयिकं श्राद्धमहं करिष्ये"

इति । ततो मधुपर्कसामग्रीं सम्पाद्य वरागमनमपेक्षेत । (१) अथ तत्प-

(१) श्रीमालीब्राह्मणज्ञातौ अत्रायं विशेषो द्रष्टव्यः—आचारात् स्वगृहात् सकुटुंबो वरः सोमं राजानं इत्यादिसामत्रयं पठन् (ब्राह्मणैः एतानि सामानि पठनीयानि)—ॐ सोमꣳ राजानं वरुणाम् । अग्निमन्वारभामहे ३ । होवा ३ हायि । आदित्यं विष्णुꣳसूर्यम् । होवा ३ हायि । ब्रह्माणा २ ३ ब्रा ३ । होवा ३ हायि । बृहा ३ उ वा ३ । पा २ ३ ४ तीम् ॥ १ ॥ ब्रह्मा । ब्रा २ ३ ह्मा । जज्ञानंप्रथमंपुरास्तात् । विसाइ । वा २ ३ इसी । मतः सुरुचोवेनआवः । सबू । सा २३ बू । ध्नियाउपमा- अस्यवाईष्ठाः । सताः । सा २ ३ ताः । चयोनिमसतश्चवा इवा ३ ४ ३ः । ओ २ ३ ४ ५ इ डा ॥ २ ॥ हुवे ३ हा ३ इ । हुवे ३ हा ३ इ । हिषा ३ या । ब्रह्मजज्ञा । ना३ म्प्रथ । मं पुरस्तात् । विसीमताः । सुरुचः । वेनआवाः । सबुध्नियाः । उपमाः । अस्याविष्ठाः । सतश्चयो । नी ३ मस । तश्चविवाः । हुवे ३ हा३ इ । २ । हिषा २ । या २ ३ ४ औहोवा । ए ३ । ऋतममृतं । ए ३ । ऋतममृतं । ए ३ । ऋतममृता ३ ४ ५ मू ॥ ३ ॥

श्वशुरगृहे समागत्य कलेवाकाले वरो वेदिकामध्ये आगत्य ईशानादिक्रमेण चतुरः स्तम्भान् संस्पृशेत् । ततः प्राङ्मुखस्थितस्य वरस्य श्वश्रूस्तिलकं कृत्वा रौप्यमुद्रां श्रीफलं हस्ताञ्जलौ निदध्यात् । ततो वरः स्वस्थाने गच्छेत् । ततो वरपक्षीया ब्राह्म-

क्षीयोऽन्यः सुहृद्यवान्माषान्वा सोदकान् पेषयित्वा, तेन कल्केन

---

णा अरिष्टवर्गस्य नव सामानि क्रदद् इत्यन्तानि पठेयुः । कले-
वाचारं कन्यावरयोर्मातरौ परस्परं कुर्याताम् । तत्र सामानि —

४ ५र ४ १ २ १२र१ ९ २ १ २
ॐ अबोधिया । ग्नाइः समिधाजना २ नाम् । प्रताइधे ३
२ १र २र १ २ १ २ २ १ ९ २१२ १ २ २
नूम् । इवायतीमुषासम् । यह्वाइ ३ वा । प्रवा २ यामुज्जिहानाः ।
१ २ २ २ १२२ १ २ १ २
प्रभाना २ ३ वाः । सस्रतेनाकमच्छ । इडा २ ३ भा ३४३ ।
१ ३ २ ३ ५
ओ २ ३ ४ ५ ई । डा ॥ १ ॥ महाइत्रा २ ३४ इणाम् ।
१ — १ ३ २ ३ ५ १ — १ ३ २ ३
अवा २ रस्तु । द्युक्षंमा २ ३ ४ इत्रा । स्या २ र्यम्णाः । दुराधा
५ २१र ५ ४ ५
२ ३ ४ र्षाम् । वरौहो २ ३ ४ । वा । णा ५ स्यो ६ हाइ ॥ २ ॥
५ २ २ ५ २ १ २ २१र
महित्रीणामवरस्तु ६ ए । द्युक्षंमित्रस्यार्यम्णाः । दुराधा २ ३
२ १र — १ — २ २ ३
र्षाम् । वरौहो २ । द्युम्मा २ । ण । स्यो २ । या २ ३ ४
५र २ २ १ २ १ ३ १ १ १ १ १र २
औहोवा । हा ओवा । ओवा २ ३ ४ ५ ॥ ३ ॥ त्वावतो
९ २ २२ ९ २ २ १
३ । हौ ३ हो ३ १ इ । पुरूवसो ३ । हौ ३ हो ३ १ इ । वय-
२ ९ २ २ २ ९ २
मिन्द्रा ३ । हौ ३ हो ३ १ इ । प्रणेता ३ः । हौ ३ हो ३ १
१ २र ९ २ २ २ ९
इ । स्मसिस्थाता ३ः । हौ ३ हो ३ १ इ । हरीणा ३ म् । हौ
२ २ ३
३ हो ३ १ २ ३ ४ ५ ई । डा ॥ ४ ॥ इन्द्रन्ना २ ३ ४
५ २ ३ ५ २१ २ ३
रो । नेमाधा २ ३ ४ इता । हवन्ता २ ३ इ । यत्पारा २ ३ ४
५ २ ३ ५ २ १ २ ३
याः । यूनाजा २ ३ ४ ताइ । धियास्ता २ ३ः । शूरोना २ ३ ४
५ २ ३ ५ २ १ २ ३
र्षा । ताश्रावा २ ३ ४ साः । चकामा २ ३ इ । आगो मा २

कन्यायाः सर्वाङ्गोद्वर्तनं कारयित्वा, सौभाग्यादियुक्तबन्धुवर्गव-
नितानिर्घटोदकैः प्लावितायाः शिरसि शुद्धजलेन त्रिवारमभि-

---

५ २ ^ ३ ५ १ १ २ १
३ ४ ती । त्रजाइभा २ ३ ४ जा । त्वन्ना ३ उ वा ३ । ए ३ ।
१२ ३ १ १ १ १ ६ २ २ २ १ १ १
आयू २ ३ ४ ५ः ॥ ५ ॥ त्यमूषु । वाजि । ना २ ३ ४
१२ १ ३ ५ २ ३१ २ १ २ २^ ३
५ मू । देवजूता २ ३ ४ मू । सहोवानन्ता । रुता ३ । रुॅर-
४ ५ २ ^३ ५ २२ २ ३१ ५
थानाम् । अरिष्टना २ ३ ४ इमीम् । पृतना३४३जमाशुं ।
२ १ २ ^२ ३ २ २ ४
स्वस्त । याइ । तार्क्ष्यमिहा ३ ४ ३ । हु ३ वा ५ इमा ६ ५ ६
२ २ ५ २ २ ४ २ ४ ३ २ २
॥ ६ ॥ इयइया ३ हाइ । त्यमूषुवाजिना ३ न्दे ३ वजूतं ।
२ ४ ३ २ २ ३ १ १ १ ४ २ ३ २ २ १ २ २
इ ३ यइया । हा २ ३ ४ ५ इ । सहोवानन्ता । रुता ३ । रुॅ-
३ ४ ५ २ २ २ १ २ १
रथानाम् । इयइया ३ हाइ । अरिष्टा ३ । नाइ । मी ३ म्पृत ।
^२ ३ ४ २ ५ २ ४ ३ २ २ ३ १ १ १ १ २ १
नाजमाशुम् । इ ३ यइया । हा २ ३ ४ ५ इ । स्वस्त । याइ ।
१२ ^२ ३ २ २ ४ २ १ १२
तार्क्ष्यमीहा ३ ४ ३ । हु ३ वा ५ इमा ६ ५ ६ ॥ ७ ॥ त्राता-
७ २ १ २ २ ७
रमिन्द्रमविता । रमी २ ३ न्द्राम् । हवेहवेसुहवॅंशू । रमी २ ३
२ १ ७ २ २ १ २ १ २
न्द्राम् । हुवाइनुशक्रम्पुरुहू । तमी २ ३ न्द्राम् । इदॅंस्वस्तिनो
२ १ २ २ २ ४
मघवा । वा ३ ४ ३ इ । तु ३ वा ५ इन्द्रा ६ ५ ६ः ॥ ८ ॥
३२ ४ ५ २ १ ३ ४ २ ५ ५ १ २ २ २
सोमः पुना । हो । नऊर्मिणा ६ ए । अव्यंवारंविधा १ वा ३
२ २ ^ ३ ३ १ १ १ २१ २
ती । अग्रे वा २ ३ ४ ५ । चा २ ३ ४ ५ः । पवमा २ ३ ना
१ ^ ३ ५२२ २ ३ १ १ १
३ः । का २ ना २ ३ ४ औहोवा । क्रदद्दे २ ३ ४ ५ ॥ ९ ॥

षिञ्चेयुः एभिर्मन्त्रैः—

काम वेद ते नाम मदो नामासि समानयामुमित्यत्र 'यज्ञदत्त-शर्माणं' सुरा ते अभवदिति द्वितीयान्तं वोढुर्नाम प्रयोज्यम्। उत्तर-मन्त्रद्वयेन तथाभिषिञ्चेद्यथा योनेः प्लावनं भवति। काम वेद तेत्यादित्रयाणां प्रजापतिराद्यान्त्ये ककुम्मती त्रिष्टुभे, द्वितीयाया ज्योतिष्मती त्रिष्टुप्, आद्यायाः कामो द्वितीयायाः कन्या तृतीयाया अग्निरभिषेके विनियोगः।

ॐ काम वेद ते नाम मदो नामासि समानयामुँ सुरा ते अभवत्। परमत्र जन्माग्ने तपसो निर्मितोऽसि स्वाहा ॥ १ ॥

इमन्त उपस्थं मधुना सँसृजामि प्रजापतेर्मुखमेतद्द्वितीयम्।
तेन पुँसोऽभिभवासि सर्वानवशान्वशिन्यसि राज्ञी स्वाहा ॥२॥

अग्निं क्रव्यादमकृण्वन् गुहानाः स्त्रीणामुपस्थमृषयः पुराणाः।
तेनाज्यमकृण्वँ स्त्रैशृङ्गं त्वाष्ट्रं त्वयि तद्दधातु स्वाहा ॥ ३ ॥

कन्यापक्षीयस्यैतत्कर्म। एवं अभिषेकानन्तरं विवाहवेद्यां सम्मार्गादिसुसंस्कृते स्थण्डिले "योजकनामानमग्निं प्रतिष्ठापयामि" इत्यग्निं निधायाग्नेः स्थापनं कार्यम्। अथानेकमङ्गलतूर्यवेदघोषेण समागच्छति वरे अर्हणकर्ताऽर्हणस्थाने सम्मार्जनादिभिः संस्कृतायां भुवि सकुशं प्रागग्रमुदगग्रं आसनद्वयं निधाय, कन्यापित्रादिः पूर्वाग्रासने उदङ्मुख उपविश्य अर्हणद्रव्याण्यासादयेत्।

विष्टरद्वयं पञ्चविंशतिकुशमयं वामावर्तलम्बकेशम्। ततस्ताम्रपात्रस्थं उदकं कुशकुसुमदूर्वाक्षतचन्दनोपेतं पाद्यपात्रम्। दधि-पुष्पाक्षतयुतमुदकं कांस्यपात्रस्थं अर्घ्यम्। ताम्रपात्रस्थं शुद्धोदकमाचमनार्थमाचमनीयम्। कांस्यपात्रस्थितानि कांस्यपात्रपिहितानि घृत–दधि--मधूनि दधि–मधु–दुग्धानि वा, मधुदध्युदकानि वा मधुपर्कार्थम्। तत आचारात्परिधानोत्तरीयवस्त्रद्वयं, सोपवीतम्। कुण्डले। मुद्रिका, चन्दनं, अक्षताः, पुष्पाणि। एवमेतानि प्रागुदक्संस्थानि वा आसाद्य, गृहद्वारि समागतं वरमाचारात्कन्या-

जननीं तिलकादिभिर्यथाचारं सम्पूज्य, (१)तमग्रतः कृत्वा, अर्हण-

---

(१)श्रीमालीब्राह्मणज्ञातावत्रायं विशेषः—तरोभिर्वो औहोहाइ ।
वाइदद्वा २३४ सूम् । इन्द्रꣳसबाध ऊतायो २३४ हायि । बृहद्गायंतः
सुतसोमेअध्वा ३४ । औहो वा । इहा २३४ हायि । उहुवा २३४
रायि । हुवेभ । राम्नकारा ३४ । औहो वा । इहा २३४ हायि । औहो
३१२३४ । णाम् । एहिया ६ हा ॥ हुवेभरा औहोहायि । नाका-
रा २३४ यिणाम् । हुवेभराम्नकारायिणो २३४ हायि । नयन्दु-
ध्रावरन्तेनास्थिरामू ३४ । औहो वा । इहा २३४ हायि । उहुवा
२३४ राः । मदेषु । शाइ ममन्धा ३४ । औहो वा । इहा २३४
हायि । औहो ३१२३४ । साः । एहिया ६ हा ॥ मदेषुशा औहो-
हाइ । मामन्धा २३४ साः । मदेषुशिममन्धासो २३४ हाइ ।
यआदृत्याशशमानायसुन्वा ३४ । औहो वा । इहा २३४ हाइ ।
उहुवा २३४ ताइ । दाता ज । राइत्रउक्था ३४ । औहो वा । इहा
२३४ हाइ । औहो ३१२३४ । याम् । एहिया ६ हा । हो ५ इ । डा
॥४॥ सोम्र । न्वेयोवसू २३ नाम् । योरा २ यामा २ । नेता
यइडा २३ नाम् । सो २३ माः । यः सुक्षिता २३४ इनो ६
हाइ ॥ सोमाः । यः सुक्षिता २३ इ नाम् । यास्या २ ताइ २ ।
द्रः पिबाद्यस्यमरू २३ ताः । यास्या २ ताइ २ । द्रः पिबाद्य-

स्थाने नयत् । तत्रोर्हणीयोऽर्हणस्थानं न्यस्तोदगग्रासनात्पश्चिमतास्ति-ष्ठेद्।विष्टरदानम् । ततस्तत्र सम्प्राप्तमर्हणीयं प्रत्युत्थानाभिवादना-दिभिः सत्कृत्य, कन्यापिता स्वासने समुपविश्याचम्य प्राणमायम्य देशकालौ सङ्कीर्त्य "सकलविघ्नौघविध्वंसनाय विनायकमहं पूजयिष्ये" इति सङ्कल्प्य, गन्धादिदक्षिणान्तैरुपचारैर्विघ्नेशं सम्पूज्य, पूजां परिसमाप्य, पुनराचामेत् । ततः प्राणमायम्य, ताम्र-पात्रे शुद्धोदकमापूर्य, गायत्र्याऽभिमन्त्र्य, कुशाग्रगृहीतजलैरर्हणी-योपहारान्प्रोक्ष्य, देशकालौ सङ्कीर्त्य "अस्य वैवाह्यस्य कन्यादा-नाङ्गभूतं मधुपर्केणार्चनमहं करिष्ये"इति सङ्कल्प्य, अर्हणीयशाखो-क्तविधिना अर्हयेत् । ततोऽर्हणकर्तार उत्तरस्यां दिशि बद्धां गां अभिमुखीभूय उपतिष्ठेरन्नर्हणा पुत्रवाससेति । अर्हणेत्यस्य वासि-ष्ठो निचृदनुष्टुप् धेनुः गोरुपस्थाने विनियोगः ।

ॐ अर्हणा पुत्रवाससा धेनुरभवद्यमे ।
सा नः पयस्वती दुहा उत्तरामुत्तरा१ समाम् ॥

ततोऽर्हणीयस्तत्रास्थितोऽर्हणकर्तृषु उपस्थितेषु अर्हणारम्भ-

---

२ १    २ १    २    १र २१र    ५
स्यमरू २३ ताः । या २३ स्या । वार्यमणाभा २३४ गो ६
५    १ २ १र    र    २    १ – –
हाइ ॥ यास्या । वार्यमणाभा २३ गाः । आये २ नामी २ ।
१र    र २१र    २    १ – – १र    र२१र
त्रावरुणाकरामा २३ हाइ । आये २ नामी २ । त्रावरुणाकरामा
२    २    १ २र १    ५ ५
२३ हाइ । आ २३ इन्द्राम् । अव सेमा २३४ हो ६ हाइ ॥५॥

ततः श्वश्रूस्तद्द्वारि गोमयादिना घफुलीसंज्ञकां दत्वा तत्र तन्दुलैः प्रदक्षिणावृतं स्वस्तिकं विधाय तत्रातपटं कृत्वा कन्या आगत्य वर-स्य चरणौ प्रक्षाल्य प्रणम्य गच्छेत् । ततः कन्याजननी धुराद्युत्तार्य तिलकं कृत्वा वर्द्धाप्य सम्पुटीपात्रमुत्तार्य वरः पादेनाक्रम्य एवं कन्याजननी यथाचारं सम्पूज्य तं अग्रतः कृत्वा अर्हणस्थाने नयेत् ।

काले वा इदमहमिति पठेत् । वसिष्ठो यजुर्विराट् जपे विनियोगः ।

ॐ इदमहमिमां पद्यां विराजमन्नाद्यायाधितिष्ठामि ।

ततः कर्त्ता आसादितं विष्टरद्वयं आदाय, स्वपुरुषैः सह "विष्टरौ ३ प्रतिगृह्येतामिति उक्त्वा, उत्तराग्रं विष्टरद्वयं तस्य हस्ते दद्यात् । ॐ प्रतिगृह्णामीत्युक्त्वा, विष्टरद्वयमादाय, सव्ये कृत्वा एकं दक्षिणेनादाय—या ओषधीरित्यनयोर्वसिष्ठोऽनुष्टुप् विष्टरौ आस्तरणे विनियोगः ।

ॐ या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।

तामह्यमस्मिन्नासनेऽच्छिद्राः शर्म यच्छत ॥

अनेन मन्त्रेणासनोपर्युदगग्रमास्तीर्य, तदुपरि प्राङ्मुख उपविशेत् । ततः सव्यहस्ताद्द्वितीयविष्टरमादाय, या ओषधीरिति द्वितीयमन्त्रेण पादयोरधस्तादुदगग्रमास्तीर्य्य, तदुपरि पादौ कुर्यात् ।

ॐ या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु ।

ता मह्यमस्मिन्पादयोरच्छिद्राः शर्म यच्छत ॥ इति

ततः कर्ता पाद्यपात्रमादाय सर्वैः सह "पाद्यं ३ प्रतिगृह्यतां" इत्युक्त्वा वरायार्पयेत् । ततो वरः "ॐ प्रतिगृह्णामीति" प्रतिगृह्य स्वप्रतिबिम्बमपश्यन्—यतो देवीरित्यस्य प्रजापतिर्विराडापः अवेक्षणे विनियोगः ।

ॐ यतो देवीः प्रतिपश्याम्यापस्ततो माराद्धिरागच्छतु ।

अनेन पाद्योदकमवेक्ष्य, ततः कर्त्ता निनीयमानमुदकं अञ्जलिना समादाय, सव्यं पादमिति वसिष्ठो विराड्गायत्र्यापः सव्यपादक्षालने विनियोगः ।

ॐ सव्यं पादमवनेनिजेऽस्मिन्राष्ट्रे श्रियं दधे ।

अनेनाञ्जलिगृहीतजलेन सव्यं पादं क्षालयेत् । एवं द्वितीयमन्त्रेण दक्षिणम्, ऋष्यादीनि पूर्ववत् । दक्षिणं पादमिति वासिष्ठो विराडगायत्र्यापः दक्षिणपादक्षालने विनियोगः ।

ॐ दक्षिणं पादमवनेनिजेऽस्मिन्राष्ट्रे श्रियमावेशयामि ।

तत एवमुभौ मन्त्रेण क्षालयेत् । पूर्वमन्यमिति वसिष्ठो विराडुष्णिगापः उभयपादप्रक्षालने विनियोगः ।

ॐ पूर्वमन्यमपरमन्यमुभौ पादाववनेनिजे । राष्ट्रस्यर्द्ध्या अभयस्यावरुध्यै ।

ततः समाचारात्कर्ता तूष्णीं वरस्य पादौ प्रक्षालयेत् । ततः कर्ता आसादितमर्घमादाय, स्वपुरुषैः सह अर्घ्यं ३ प्रतिगृह्यतामित्यभिधाय, वरस्याञ्जलावर्घ्यं निनयेत् । तत ॐ प्रतिगृह्णामीत्युक्त्वा, अञ्जलौ निनीयमानं अर्घ्यं मन्त्रेण प्रतिगृह्णीयात् । अन्नस्येति वसिष्ठो यजुरर्घः अर्घग्रहणे विनियोगः ।

ॐ अन्नस्य राष्ट्रिरसि राष्ट्रिस्ते भूयासम् ।

ततः कर्ता आचमनीयपात्रमादाय स्वपुरुषैः सह "आचमनीयं ३ प्रतिगृह्यतामित्युक्त्वा" वरायार्पयेत् । "ॐ प्रतिगृह्णामीति" प्रतिगृह्य, यशोसीति वसिष्ठो यजुः आचमनीयं आचमने विनियोगः ।

ॐ यशोसि यशो मयि धेहि ।

इति मन्त्रेणाचम्य द्विस्तूष्णीमाचामेत् । ततः कांस्यसम्पुटस्थं मधुपर्कमादाय, सर्वैः सह "मधुपर्को २ मधुपर्कः प्रतिगृह्यतामित्युक्त्वाऽर्पयेत् । वरः—ॐ प्रतिगृह्णामीति उक्त्वा, वसिष्ठो यजुर्मधुपर्कः ग्रहणे विनियोगः । 'ॐ यशसो यशोसीति' प्रतिगृह्य तत्कांस्यसम्पुटं वामहस्ते कृत्वा, उद्घाट्य, यशसो यशोसीति वसिष्ठो यजुर्मधुपर्कः भक्षणे विनियोगः । ततो—

ॐ यशसो भक्षोऽसि महसो भक्षोऽसि श्रीभक्षोऽसि श्रियं मयि धेहि ।

इति मन्त्रेण कनिष्ठाङ्गुष्ठाभ्यां प्राश्य, द्वितीयवारं मन्त्रपूर्वकं अनामिकाङ्गुष्ठाभ्यां प्राश्य, तृतीयवारं मन्त्रेण मध्यमाङ्गुष्ठाभ्यां

प्राश्य, चतुर्थं तर्जन्यङ्गुष्ठाभ्यां तूष्णीं प्राश्य, शेषं पुत्राय शिष्याय वा दद्यात् । तत आचमनम् । (१)ततश्चन्दनादिभिस्तं सम्पूज्य समाचारात्परिधानोत्तरीयवासोयुगं सोपवीतं चन्दनादिभिरर्चितमादाय "सोपवीते वाससी प्रतिगृह्येतामित्युक्त्वा" दद्यात् । वरः "ॐ प्रतिगृह्णामीति" प्रतिगृह्य, वाससी परिधायाचम्य, उपवीतद्वयं पृथङ्मन्त्रेण परिधायाचामेत् । ततः कुण्डलाद्यलङ्करणमादाय "अलङ्करणं प्रतिगृह्यतामित्युक्त्वा" अर्पयेत् । ततः समाचारात् 'सुसम्प्रोक्षितमस्तु'इत्यादि कृत्वा "अस्य अर्हणाङ्गत्वेन दत्ता-

---

(१)कोकिलमते विशेषः—अथ समाचारात् अत्र ब्राह्मणाः एतानि
२१२ २ ९ १
पूठी सामानि पठेयुः—सोमाः पवन्तइन्दवा२ए । अस्मभ्यं गा२तूवि
२ २ २ ९ २ २ १ — २ २९ १२
त्तमा२ः । हा२हा । औ२ हो३ वा । आइही२ । मित्रास्वाना२ आरे-
२ २ २ ९ २ २ २ — १२ २ २
पसा२ । हा२ हा । औ२ हो३ वा । आइ ही २ । सुवाधि या३ः । हा२
२ ९ २ २ १ — २१ १ ^ ३ ५१ २ २२
हाइ । औ३ हो२ वा । आइ ही२ । सुवः । वा२इदा२३४ औ होवा । ते
२ २ २ २ २२२ २ १ २ २ २ २ ९
पूतासोविपश्चिता३ए । सोमासो दा३धाआशिरा३ः । हा३ हा । औ३
२ २ १ — २२२ २ १ २ २ २ २ ९ २ २
हो२वा । आइ ही२ । सूरा सोना३ दार्शतासा२ः । हा२हा । औ२ हो२वा ।
२ १ २ २ २ ९ २ १२ १ ^ ३ ५२
आइ० । जाइ गत्नवा३ः । हा२ हाइ । औ३० । ध्रुवाः । घा२र्चा२३४औ
२ २ २ २ २ २ २१२२९ २ १ २ २
होवा ॥ सुष्वाणासो वियद्रिभा३इरे । चितानागो२राधित्वचा२ । हा२
२ ९ २ १ २ २ २ ९ १
हा । औ३० । इषमस्मा२भ्या मभिता२ः । हा२ हा । औ ३० । साम-
२ २ २ ९ २१ १ ^ ३ ५१२
स्वरा२नॄं । हा३ हाइ । औ ३० । वसु । वा२इदा२३४औहो वा ।
२ १ ३ १ १ १ १
मधुश्चूता२३४५ः ॥१॥

नि विष्टराद़ीनि वस्तूनि, तत्र ताम्रपात्रद्वयं रौद्रं, कांस्यपात्रत्रयं सौर्यं, बार्हस्पत्यं वासोयुगं, उपवीतद्वयमोङ्काराग्नि·नाग·सोम·पितृ·प्रजापति·वायु·यमसर्वदैवत्यमकङ्कणमाग्नेयं अमुकगोत्रायामुकप्रवरायामुकशर्म्मणे वराय तुभ्यमहं सम्प्रददे न ममेति" दद्यात् । 'ॐ स्वस्तीति' प्रत्युक्तिः । 'अर्हणदानप्रतिष्ठासिद्ध्यर्थं इमां दक्षिणां तुभ्यमित्यादि' प्राग्वत् । (१)ततो वरो नापिताद्गौर्गौर्गौरिति श्रुत्वा

---

(१)कोकिलमते विशेषः । वस्त्रादाने इदं वसो इति
२ २ २ २ २ १ १२७ २२
पूठी । इदं वसो सुतमन्धा३ ए । पिबासुपू३ र्णामुदरौ ।
२ २ १ २ २ ७ २२ २ २ १ २
हो३ वा । पिबा सुपूर्णामुदरौ । हो३ वा । आनाभा३
२ १ ३२१ २ ४ ५ २ २ २ २
यीन् । ररिमाता । औ३ होवा ॥ नृभिर्द्धौ तः सुतो ३ना३ इरे ।
२ २ २·१ २१ ७ २२ २ २ १ २ २ ७२ ३२
अव्यावारे३ः पारिपूतौ । हो३वा । अव्यावारेः पारिपूतौ ।
२ २ १ २ २ १२ २२ १ २ ४ ५ २२
हो३वा । आ श्वो ना३ नी । श्वो नदीषू । औ३हो वा ॥ ततेयवं
२ २ २ २२ १ ७२ २२ २ २
यथा गोभी३रे । स्वादुमका३र्म्मा श्रीणन्तौ । हो३ वा ।
२२ ७ २२ २ २ १ २ २
स्वादुमकर्म्मा श्रीणन्तौ । हो३ वा । आइन्द्रात्वा ३ स्मीन् ।
१ २२ १ २ ४ ५ ४ ५ २
सधमादा । औ३हो वा । होऽ५इ । डा ॥१॥ इदᳪ ह्यनू३
२२ २ १ २ १ २२ २ २ २ १ २ २
ओजसा । सुतᳪराधा । नाम्पातौ । हो वा३ हाइ । पि बातुव । स्य
१ २२ २ २ १ २२ २२ २ २ १
गाइर्वाणौ । होवा३ हाइ । पि बातुवौ । हो वा३ हा । स्य गाइः ।
१^३ ५२२ २२ २२ २ १
वा२ ना२३४ औहो वा ॥ यस्ते अनु स्वा३धामसात् । सुता
२ २ १ २२ २ २ २ १ २ २ १ २२
इनिय । छ तानुवमौ । हो वा३ हाइ । सत्वाामम । तुसौ मायौ ।
३२ २ २ १ २२ ३२ २ २ १२ १^३
हो वा३ हाइ । सत्वाममौ । हो वा३ हा । तु सो । मा२या२३४

मुञ्च गामिति पठेत् । मुञ्च गामिति वसिष्ठो बृहती गौः गोमोक्षणे विनियोगः ।

ॐ मुञ्च गां वरुणपाशाद्द्विषन्तं मेऽभिधेहि ।
तं जह्यमुष्य चोभयोरुत्सृज गामत्तु तृणानि पिबतूदकम् ॥

तत्र अमुष्येति पदस्थानेऽर्हणकर्तुर्नाम प्रयोज्यं, तं जहि देवदत्तस्य चेति । ततस्तामेव गामनुमन्त्रयेत्—माता रुद्राणामिति वसिष्ठस्त्रिष्टुप् गौः अनुमन्त्रणे विनियोगः ।

ॐ माता रुद्राणां दुहिता वसूना॑ स्वसाऽऽदित्यानाममृतस्य नाभिः । प्रनुवोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ठ ॥

ततोऽस्य वरस्य मधुपर्केणार्चनकृतस्य विधेः सर्वं परिपूर्ण-मस्तु । इति मधुपर्कः ॥

---

५र र २र र २ १ २ २ १ २र
औहो वा ॥ प्रते अश्नोतू२ कुक्षियोः । प्राइन्द्र ब्र । ह्मणाशाइरौ ।
२र २र २ १ २ २ १ २र र २ २ १ २र
हो वा२ हाइ । प्रबा हूशु । रराधासौ । हो वा२ हाइ । प्रबाहूशौ ।
२ २ २१र १ ^ ३ ५र र २ १ २ १ १ १ १
हो वा२ हा । ररा । धा२सा२३४ औहो वा । घृतश्चुता२३४५ः ॥२॥
२ र २ र २ र र ९ १ २ २ २
सुष्वाणासो वियद्रिभा३इरे । चितानागो२ राधित्वचा३ । हा२ हा ।
९ २ २ १ — २ १ २ २
औ३ हो३वा । आइही२ । इषमस्मा३भ्यामभिता३ः । हा२
२ ९ १ १ २ २ २ ९ २ १
हा । औ३० । आइ० । सामस्त्र रा२न् । हा२हाइ । औ३० । वसु ।
१ ^ ३ ५रर २ १ ३ १ १ १ १
वा२इदा२३४ औहो वा । मधुश्च्युता२३४५ः ॥ ३ ॥ मधु-श्च्युन्निधनं भवति परमस्यान्नाद्यस्यावरुद्ध्यै परमं वा एतदन्नाद्यं यन्मधु प्रजापतेर्वा एतौ स्तनौ यद्घृतश्च्युन्निधनं च मधुश्च्युन्निधनं च यज्ञो वै प्रजापतिस्तमेताभ्यां दुग्धे यं कामं कामयते तं दुग्धे ॥

### अथ कन्यादानम् ॥

तत्र दाता उदङ्मुखोपविष्ट एव यथाशक्त्यलङ्कृतां कन्यामग्रतः पश्चिमाभिमुखीमुपवेश्य, प्राङ्मुखोपविष्टाय वराय दद्यात् । तत्र वरपक्षीयाश्चत्वारो ब्राह्मणाः सुपूजितास्तावन्तः कन्यापक्षीयाश्च गोत्रप्रवचनार्थं तिष्ठेयुः । अथ चन्दनादिभिर्वरं सम्पूज्य दक्षिणहस्ते कुश-यव-जलान्यादाय—

"अद्य श्रीह कस्यचित्सच्चिदानन्दरूपस्य ब्रह्मणोऽनिर्वाच्यमायाशक्तिविजृम्भिताविद्यायोगात्कालकर्मस्वभावाविर्भूतमहत्तत्त्वोदिताहङ्कारतृतीयोद्भूतवियदादिपञ्चकेन्द्रियदेवतानिर्मिताण्डकटाहे चतुर्दशलोकात्मके, लीलया तन्मध्यवर्तिभगवतः श्रीनारायणस्य नाभिकमलोद्भूत-सकललोकपितामहस्य ब्रह्मणः सृष्टिं कुर्वतस्तद्धरणाय च प्रजापतिप्रार्थितस्य महापुरुषस्य सितवाराहावतारेण ध्रियमाणायामस्यां धरिण्यां भूर्लोकसञ्ज्ञिकायां सप्तद्वीपमण्डितायां, क्षीरोदाद्यब्धिद्विगुणद्वीपवलयीकृतलक्षयोजनविस्तीर्णे जम्बूद्वीपे स्वर्गस्थितामराद्याशासितावतारे गङ्गादिसरिद्भिः पाविते भारते वर्षे, निखिलजनपावनशौनकादिमुनिकृतनिवसतिके नैमिषारण्ये, अमुकनामक्षेत्रे, श्रीभगवतो मार्तण्डस्य कृपापात्र-कालत्रितयज्ञ-गर्ग-वराहाचार्यादिगणितायां संख्यायां श्रीब्रह्मणो द्वितीयपरार्द्धे, श्रीश्वेतवाराहनाम्नि प्रथमकल्पे, द्वितीये यामे, तृतीये मुहूर्त्ते, स्वायम्भुवस्वारोचिषोत्तमतामसरैवतचाक्षुषेति षण्मनूनामतिक्रम्यमाणे, सम्प्रति वैवस्वतमन्वन्तरे, युगानां त्रिंशे याते, अष्टाविंशतितमे कलियुगे, प्रथमचरणे, श्रीमन्नृपविक्रमार्कसमयातीतसम्वत्सराणां व्यतिक्रान्तानाममुकसम्वत्सरे, अमुकायनगते श्रीसूर्ये, अमुकऋतौ, (मास तिथिवाराद्युच्चार्य ) एवंविधे पुण्ये काले देशे च शत-शतगुणीकृत-ज्योतिष्टोमातिरात्रजन्य-फलसमफल-प्राप्तिकामोऽहं अमुकगोत्रस्यामुकशर्मणः प्रपौत्राय एवं पौत्राय पुत्रायेत्युक्त्वा, अमुकगोत्रा-

यामुकप्रवरायामुकशर्मणे प्रजापतिरूपिणे वरायेत्युक्त्वा, अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रीं, एवं पौत्रीं, पुत्रीं चेत्युक्त्वाऽमुकगोत्रां अमुकप्रवरां अमुकनाम्नीं इमां कन्यां (१)सवस्त्रां सालङ्कारां श्रौतस्मार्तकर्मसहायिनीं प्रजापतिदैवतां अमुकगोत्रोऽमुकशर्माऽहं सम्प्रददे" इत्युच्चार्य, वरस्य दक्षिणहस्तमध्ये कुश-यव-जलसहितं कन्यायाः दक्षिणं हस्तं दद्यात्।

ॐ प्रतिगृह्णामि स्वस्तीत्युक्ते, सति सम्भवे अशीति-रत्तिमितं सुवर्णं यथासम्भवं वा दक्षिणात्वेनोपकल्प्य "कृतैतत्कन्यादानप्रतिष्ठासिद्ध्यर्थं इदं हिरण्यं आग्नेयं" अमुकगोत्रायेत्याद्युच्चार्य 'दक्षिणां तुभ्यमहं सम्प्रददे न ममेत्युक्त्वा' दद्यात्। ॐ प्रतिगृह्णामि स्वस्तीत्युक्त्वा कामस्तुतिं पठेत्।

ॐ क इदं कस्मा अदात्कामः कामायादात्कामो दाता कामः प्रतिगृहीता कामः समुद्रमाविशत्कामेन त्वा प्रतिगृह्णामि कामैतत्ते॥

अत्रान्यद्गोभूमहिष्यादि देयम्। "धर्मे चार्थे च कामे च त्वयेयं नातिचरितव्या" इति वरं प्रति दात्रा उक्ते "बाढं" इति वरेण वाच्यम्। ततः समाचाराद्वस्त्रदशाग्रन्थिबन्धनं वरमालारोपणादि कार्यम्।(२) इति कन्यादानम्।

---

(१)कोकिलमते विशेषः। अमु० गो० अ० प्र० साम० अ० श० प्रतिदौहित्राय। अमु० गो० अ० प्र० साम० अ० श० दौहित्राय। अमु० गो० अ० प्र० सा० अमुकी दायाः पुत्राय। अमुकनाम्ने वराय। मातरि जीवन्त्यां, अमुकीदायाः। मृतायां देविदायाः॥

अ० गो० अ० प्र० साम० अ० श० प्रतिदौहित्रीं। अ० गो० अ० प्र० साम० अ० श० दौहित्रीं। अ० गो० अ० प्र० सा० अमुकीदायाः पुत्रीं अमुकनाम्नीं कन्यां॥

(२)अत्र कङ्कणबन्धनाद्यनन्तरं भियहोई, वीहाइवाई, इति सा-

मद्वयं पठित्वा, स्वस्तिवाचनं कृत्वा, अभिप्रव इति साम्ना आशीर्द्-
द्यात्। प्रियहो पाणिसंग्रहे इति पूर्वां पठेत्। हाउ। ३। प्रिय होयि। ३।
प्रिय मोइ। ३। अग्नआ या हि ३ वा इता १ या २ इ। गृणानोहव्या
३ दाता १ या २ इ। निहोता सत्सि ३ वाहा १ इषी २३। हाउ।
३। प्रिय होयि। ३। प्रियमोयि। २। प्रि। या २ मू। आ २३४।
औहोवा। ए। प्रियम्। ३। ए। ब्राह्मणानां यन्मनस्तन्मयि ब्राह्मणानां।
ए। पशूनां यन्मनस्तन्मयि पशूनां। ए। योषितां यन्मनस्तन्मयि
योषिता २३४९ म् ॥१॥ वीहायवाइ। ३। वीहायवाइ। ३।
कयानश्चाइ। त्रआ २ भू २३४ वात्। ऊताइ सदा। वा र्द्धः
सा २३४ खा। कयाश चाइ। ष्ठया २ वा २३४ र्त्ता।
वीहायवा इ। ३। वीहाय वाइ। २। वीहा। या २। वा २३४
औहो वा। ए। संयमन्नन्यायमन्वियमन्नसमायमन् ये के चोद-
रसर्पिणस्तेभ्यो नमा २३४५ः ॥ २ ॥ ततः कन्यादानानन्तरं
आधुनिकाः लघुस्वस्तिवाचनं कुर्वन्ति।

### कोकिलमते तिलकाशीः—

अभिप्रवः सुरा। धसा ३४ औहोवा। आ इन्द्रमर्च्च। यथा
विदा २३४ इ। ओ ६ हा। यो २३ जा। रितृभ्यः। मघ।
वा। पुरूवा २३४ सुः। सा २३ हा। स्रेणेवशो २३४ वा।

अथ वरसहायोऽन्यो विवाहवेद्यां गत्वा, संस्थापितस्याग्नेः पश्चिमतो यज्ञियवृक्षजे आसने सकुशे उदगग्रन्यस्ते प्राङ्मुख उपविश्य, प्रादेशमितां समिधमग्नौ प्रक्षिप्य, (१)भूजप-परिसमूहने

---

३ ५ ४३२४५ ३२ ३२ ४२५ १
क्षा २३४ ती ॥ सहस्रेणेवाशि । क्षता ३४ औहोवा । साहा-
२२२ १ ७ ५ ५ १ २ १ २
स्रेणे । वशाइक्षता २३४ इ । ओ ६ हा । शा २३ ता । नीकेव ।
१ २ १ २३ ५ १ ५ १२ २१
प्रजि । गा । ता इधाष्णू २३४ या । हा २३ न्ताइ । वात्राणिदो २३४
५ ३ ५ ३४ ३२ ४५२ ३२ ३२ ४२ ५ १
वा । शू २३४ षे ॥ हंतिवृत्राणिदा । शुषा ३४ औहो वा । हन्ति-
२ १ ७ ५ ५ १ २ १ २
वृत्रा । णिदाशुषा २३४ इ । ओ ६ हा । गा २३ इरेः । आइत्र ।
१ २ १ २ ३ ५ १ २
प्रर । साः । आ । स्थापिन्वा २३४ इ रा इ । दा २३ त्रा ।
२ २ १ ५ ३ ५
णाइपुरुभो २३४ वा । जा २३४ सा ॥१॥ इमौ वै लोकौ सहास्तां तावियंतावब्रूतां विवाहं विवहावहै सह नावस्त्वितयोरयममुष्मै श्यैतं प्रायच्छन्नौधसममसावस्मै ततयेनयोर्निधने विपर्यक्रमतां देवविवाहो वै श्यैतन्नौधसे वसीयांसं विवाहमाप्नोति य एवं वेद ।

**कोकिलमतानुसारिणां विवाहे कुशण्डयां तत्तत्कर्मसु सामानि पठ्यन्ते । तानि यथा —**

२ १२ २१ २२
(१) इमꣳस्तोममिति परिसमूहने पूर्वी पठेत्—इमꣳस्तोममर्हते-
२१२२१ १२ २ २ २
जातवेदसायि । रथमिव संमहे मामनीषया । भद्राहा२३यिनाः ।
१ २ १ २२२ १ ३ १ १२२ १२ २ १
प्रामतिरस्य सꣳस । घ्नायि ॥ भरामेध्मं कृणवामाहवीꣳषि तायि ।
२ २ २ २ १ २२
चिन्तयन्तः पर्वणा पर्वणा वयाम् । जीवाता२३वायि । प्रातराꣳ
२ २ २ १ २१२ २२ १ २२१२ १
साधयाधि । योग्नायि ॥ शकेम त्वा समिधꣳसाधयाधियाः ।

२ ८ २   २   १   २   १   २ २ २

त्वे देवा हविरदन्त्याहुताम् । तुश्मा२३दी । त्याꣳआवहताꣳह्यु-

१   २   ३२ २   ३१ २   १२

श्म । स्यग्नायि साख्या । औहो२४वाहायि । मा । शायिषा २३

२   २ २   १   २   १

मा ३ । होवा३हायि । वयन्ता२३वा ३४३। ओ२३४५ईडा ॥१॥

५१ २   ४ ५   १

ब्रह्मोपवेशने एषा इति पूर्ठां पठेत्—एषा३ ब्राह्मा । या

२   १   २   १   ३२ २२   २   १

२३ः । आ३ । त्वा२३ । याः । इन्द्रो नामौ । वा ३४३ ओ ३४

५   ४१   ५   ४   ५   १   २

वा । श्रुतो ६ गृणायि ॥ तुवा ३ मायित्सा । वा २३ । सा३ः ।

१   २   १   ३ २   २   ५   ४

पा २३ । तायि । यन्तायिगिरौ । वा ३४३ ओ ३४ वा । नसा६

५ २   ४ ५   १   २   १   २   १

यताः ॥ विभु ३ तायाः । या२३ । था३ । पा२३ । थाः । इन्द्रा-

३ २   २   ५   ४   ४

त्वद्यौ । वा३४३ओ३४ वा । तुरा५तयाः । हो५इ । डा ॥ २ ॥

१ २ २   —

शग्ध्यूष्वौ चरुपाचने इति पूर्ठां पठेत् । शग्ध्यूष्वौ होरायि

२ १   २ २   २ २   १९

शचीपताइ । आइन्द्रविश्वाभिरूतिभिः । भगा न्ना३ही । त्वायश-

२ २   १   —   २   २   १

साम् । वसू३हायि । वायिदा२म् । अनुशूरच रोवा ३ ओ २३४

५   ४   ५   २ २२   —   २१

वा । मा ६ सो ६ हायि ॥ अनुशूरौहो २ चरामसायि ।

१ २ २   २   २   २   १   २ २

आनुशूरचरामासि । पौरो आ ३ श्वा । स्यपुरुकृत् । गवा ३९

२   १   —   १ २ २   २   १   ५   ४

हायि । आसा २ यि । उत्सोदेवहिरोवा ३ओ २३४ वा । ण्या

५   १ २ २   २   —   १   २

६ यो ६ हायि ॥ उत्सोदे । वौहो २ यि हिरण्यया: । ऊऽत्सो

२   २   २   २   २   २

देवाहिरण्ययः । नक्कायिर्हा ३ यिदा । नम्परिमा । षिषा २ हायि ।

कृत्वा, प्रादक्षिण्येनाग्नेर्दक्षिणतो गत्वा, ब्रह्मासने प्रागग्रान्कुशानास्तीर्य, यथागतमागत्यासने समुपविशेत् । अथ ब्रह्माऽऽस्तृतदर्भाणां पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्नग्निमारभ्य प्रादक्षिण्येनोदङ्मुखीं वारिधारां दत्वा, स्वासनात्तृणं निरस्योदकमालभ्य, मन्त्रेणाग्न्यभिमुख उपविशेत् । तत आज्यतन्त्रेणासादनं वरसहायेन कर्तव्यम् । यथा—

शुद्धोदकपात्रम् । प्रादेशमितं समिद्वयम् । मुष्टित्रयं बर्हिः । प्रादेशद्वयमितो विंशतिकाष्ठक इध्मः । घृतम् । आज्यस्थाली । संमार्गकुशाः । स्रुवः । पूर्णपात्रम् ।

वरपक्षीयो ब्राह्मणः प्रावृतसर्वाङ्गः कृतोष्णीषो वापी–कूप–जलातिरिक्त–महानदी–ह्रदादिजलपूर्ण–घटहस्तोऽग्निं प्रदक्षिणीकृत्याग्नेर्दक्षिणत उदङ्मुखस्तिष्ठेत् कर्मसमाप्तिं यावत् । वरपक्षीयोऽन्यो ब्राह्मणः प्रतोदहस्तोऽग्नेर्दक्षिणत उदङ्मुखः कर्मसमाप्तिं यावत्तिष्ठेत् । अन्यः शमीपलाशमिश्रांश्चतुरञ्जलिमितांल्लाजांश्छूर्पे कृत्वाऽग्नेः पश्चादासादयेत् । पेषणीलोढकौ च तत्रैव ।

ततो वरवध्वोरुपवेशनार्थं यज्ञियतृणनिर्मितमन्यतृणानिर्मितं

---

१ — १ २ २ १ ५ ४
तूवा २ यि । यद्यद्यामित दोवा ३ ओ २३४ वा । भा ५ रो ६
५
हायि ॥ ३ ॥

२२ २ २ १
आघाये अग्निसंस्तरे इति पूर्वां पठेत् । आघाये अग्निमिन्धा-
२ २ २ १ २ १२
तायि । स्तृणंति बर्हिरानुषाक् ॥ बृहन्निदिध्मआयिषाम् । भूरिशः
२ २ १ २ १२ २
स्त्वंपृथुः स्वरूः ॥ अयुद्ध इद्युधावावाचाम् । शूरआजातिसत्वभायिः ।
२२ १२ २ २ १ ५ ४
येषामिन्द्रो युवाइहा । ऊवायि । ऊवो २३४ । वा । सा ५ खो
५
६ हायि ॥ ४ ॥

वा कटं संवेष्टितमग्नेः पश्चादासादयेत् । ततः प्राणानायम्य, सोमसा-मादीनि पठित्वा, ताम्रपात्रे शुद्धोदकमापूर्य, गायत्र्याभिमंत्र्य, तेनो-दकेनासादितं सर्वं प्रोक्ष्य, यथाविधिनाऽग्निं परिस्तीर्याग्नेरुत्तरतः प्रणीतामासाद्येध्ममभ्याधायाज्यं संस्कुर्यात् । ततो वरोऽहतेन वाससा कन्यां परिधापयेन्मन्त्रेण । या अकृन्तन्नित्यस्य प्रजापति-र्बृहती वासः परिधापने विनियोगः ।

ॐ या अकृन्तन्नवयन्या अतन्वत याश्च देव्यो अन्तान-भितो ततन्थ । तास्त्वा देव्या जरसा संव्ययन्त्वायुष्मतीदं परिधत्स्व वासः ॥

ततोऽपरेणाहतेन वाससा दक्षिणं बाहुं बहिः कृत्वोपवीतव-दुपरि प्रावृणुयान्मन्त्रेण । परिधत्तेति प्रजापतिस्त्रिष्टुप् वासः उत्त-रीयपरिधापने विनियोगः ।

ॐ परिधत्त धत्त वाससैनाᳪशतायुषीं कृणुत दीर्घमायुः ।
शतञ्च जीव शरदः सुवर्चा वसूनि चार्य्ये विभजासि जीवन् ॥

ततो वरः कन्यां गृहादग्न्याभिमुखीमानयन् जपेत्सोमो दद-दिति । सोमो ददेति प्रजापतिरनुष्टुप्सोमः जपे विनियोगः ।

ॐ सोमो ददद्गन्धर्वाय गन्धर्वो ददग्नये ।
रयिञ्च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥

ततोऽग्निं प्रदक्षिणीकृत्याग्नेः पश्चिमतो गत्वा, तत्र संवेष्टितं कटं दक्षिणपादेन प्रसारयन्तीं वधूं वरः पाठयेत् । प्र मे पतियान इति प्रजापतिस्त्रिष्टुप् पन्था वाचने विनियोगः ।

ॐ प्र मे पतियानः पन्थाः कल्पताᳪशिवा अरिष्टा पतिलोकं गमेयम् । प्रास्याः पतियानः पन्थाः कल्पन्ताᳪशिवा अरिष्टा पति-लोकं गम्याः ॥

यदि वधूर्लज्जावशान्न पठति तदा 'प्रास्या' इति वरः स्वयं पठेत् । ऋष्यादिः पूर्ववत् ।

ततो वधूवस्त्रेण प्रक्षालितकटस्य पूर्वप्रान्तभागं बर्हिषोपरि कृत्वा, कटस्य पूर्वदिगवस्थितप्रान्ते एव प्राङ्मुख उपविश्य, स्वदक्षिणे कटप्रान्ते एव वधूमुपवेशयेत् । (१)उपविश्याचम्य प्राणमायम्य देशकालौ स्मृत्वा "परिगृहीतायामस्यां वध्वां भार्यात्वसिद्धये विवाहहोममहं करिष्ये" इति सङ्कल्प्य, अदितेऽनुमन्यस्वेति तिसृभिर्मन्त्रैः परिषिच्य, देवसवितरिति मन्त्रेणाग्निं सम्प्रोक्ष्य, (२)स्रुवं

---

१ २ २ —
(१)अग्नेर्वाजस्य गोपत इति पूर्वां पठेत् । अग्नेर्वाजा २ स्य ।
२ १ १२ २१ २ १ २ ३१० १ २ १ २१ १२ २२ २ १
गोमतो वा । ईशान स्सा । हस्नोयहो । अस्माइ देहिजातवेदोम ।
२ २१ — १ २ —
हा २३ इ । श्रवाउवा । श्रुश्रिया २ ॥ सइंधानो २ व ।
१ २ १ २२ १ २ ३२ २ १ २ १ २ १ २ २ १
सुष्कवोवा । अग्निरीडाई । नियोगिरा । रेवदस्मभ्यं पूर्वणीक ।
२ २१ — १ २ २ —
दा २३ इ । दिहाउवा । श्रुधिया २ ॥ क्षपोराजा २ नु ।
१ २ १२ २ २ ३१ २ १ २ २ २२१
तत्मनोवा । अग्नेवस्तोः । उतोषसाः । सतिग्मजम्भरक्षसोद ।
२ २१ — १ २ १
हा २३ । मताउवा । श्रुधिया २ । ए २३ हिया ३४३ । ओ
२३४५ ई । डा ॥ १ ॥

४ ३
(२)विरूपाक्षे समाइद्धं इति पूर्वां पठेत्—समाऽ ५ यिद्धम् ।
४ २ ४ ५ १ २ २ २ २
आ ३ ग्ना ३ यि ४ समिधा । गायिराग्रणे शुचिं पावकंपुरो आ ।
२ १ २ २ — १२ २ २ २
ध्वा ३ रायिध्रु ३ वाम् । विप्रा २ ४ होतारं पुरुवारमद्रु । हक्का
२ १ २ २ २ २ २ ^
२३ वीम् । हुम्मायि । सु ३ म्नायिः । आयिमहेजातवा २
३ २ २ २ १२ २ २ २
यिदसा उ ॥ सान्त्वाम् । दूतमग्ने अमृतं युगे युगे हव्यवाहं-
२ २ १ २ २ १२ — १ २ २
दधिरेपा । यू ३मायिडा ३ याम् । देवा २ सश्च मर्त्तासश्च जागृ ।

सम्मार्ज्य, स्रुवेण व्याहृतिचतुष्टयं हुत्वा, बध्वा दक्षिणहस्तेन स्पृष्टदक्षिणस्कन्धोऽग्निरेतु प्रथमेत्यादिषण्मन्त्रैः षडाज्याहुतीर्जुहुयात् । अग्निरेत्वित्यादिषु प्रजापतिः आद्ये त्रिष्टुभावाग्नेय्यौ, द्यौस्ते शक्करी वैश्वदेवी, मा ते गृहेति जगत्याग्नेयी, अप्रजस्यमुपरिष्टादूबृहत्याग्नेयी, परैतु त्रिष्टुप् वैवस्वती होमे विनियोगः ।

ॐ अग्निरेतु प्रथमो देवताभ्यः सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयꣳ राजा वरुणोऽनुमन्यतां यथेयꣳ स्त्री पौत्रमघं न रोदात्स्वाहा ॥ १ ॥

इदमग्नये न ममेति त्यागः ।

ॐ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै जरदष्टिं कृणोतु ।

अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियꣳ स्वाहा ॥ २ ॥ इदमग्नये० ।

ॐ द्यौस्ते पृष्ठꣳ रक्षतु वायुरूरू अश्विनौ च । स्तनन्धयस्ते पुत्रान्त्सविताऽभिरक्षत्वावाससः परिधानाद्बृहस्पतिर्विश्वेदेवा अभिरक्षन्तु पश्चात्स्वाहा ॥३॥ इदं विश्वेभ्यो देवेभ्यो० ।

ॐ मा ते गृहेषु निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु । मा त्वꣳ रुदत्युर आ वधिष्ठा जीवपत्नी पतिलोके विराजपश्यन्ती प्रजाꣳ सुमनस्यमानाꣳ स्वाहा ॥४॥ इदमग्नये० ।

---

विंवा २३ यिभूम् । हुंमायि । वा ३ यिश्वा । तायिंनमसा निषा २ यिदिराउ ॥ रायिवायि । भूषन्नग्न उभयाꣳअनुव्रतादूतो देवानाꣳरजसी । सा ३ मीया ३ सायि । यत्ते २ धीतिꣳ सुमति मावृणीम । इआ २३ धा । हुंमायि । स्मा ३ नाः । त्रायिवरूथः शिवो २ भवाउ । वा २३४५ ॥ १ ॥

ॐ अग्रजस्यं पौत्रमर्त्यं पाप्मानमुत वा अघम् । शीर्ष्णः स्रजामिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशꣳ स्वाहा ॥५॥ इदमग्नये० ।

ॐ परैतु मृत्युरमृतं म आगाद्वैवस्वतो नो अभयं कृणोतु ।
परं मृत्यो अनुपरे हि पन्थां यत्र नो अन्य इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳरीरिषो मोत वीराꣳ स्वाहा ॥ ६ ॥ इदं वैवस्वताय० ।

पुनर्भूरादिव्याहृतिचतुष्टयहोमः । (१)ततस्तौ वधूवरौ सहैव उत्तिष्ठतः । ततो वरो वध्वाः पश्चिमेन गत्वा, तद्दक्षिणतः उदङ्मुखः स्वेनाञ्जलिना वध्वञ्जलिं गृहीत्वाऽवतिष्ठते । ततस्तयोः पूर्वस्यां दिशि स्थिता वधूमाता भ्राता वा अग्नेः पश्चिमत आसादितं लाजाशूर्पं वामहस्तेनादाय, दक्षिणहस्तेन वधूदक्षिणपादेन दृषदमाक्रामयेद्वरस्तु मन्त्रं पठेत् । इममश्मानमित्यस्य आथर्वणोऽनुष्टुप् अश्मा अश्माक्रमणे विनियोगः ।

ॐ इममश्मानमारोहाऽश्मेव त्वꣳ स्थिरा भव ।

---

५ १२ १
(१)व्याहृतीनां भूस्तथा इति पूर्वी पठेत्—भूः । भूः । होयि ।
२ १ २ २ — २ १ २ ३
भूः । होयि । भूः । हा ३१ उवा २ । ए । सुव ज्योंती
२ १ २ १ ६ २ २ २
२३४५ः ॥ सुवाः । सुवः । होयि । सुवः । होयि । सुवः ।
२ — २ १ २ ३ १ १ १ २ ५ १
हा ३१ उवा २ । ए । सुवर्ज्योंती २३४५ः ॥ सत्याम् । सत्यम् ।
२ — २ १
होयि । सत्यम् । होयि । सत्यम् । हा ३१ उवा २ । ए । सुव-
२ ३ १ १ १ २ ५ १
ज्योंती २३४५ः । पुरुषाः । पुरुष । होयि । पुरुष । होयि । पुरुष ।
२ — २ १ २ ३
हा ३१ उवा २ । ए । सुवर्ज्योंती २३४५ः ॥

द्विषन्तमपबाधस्व मा च त्वं द्विपतामघः(१) ॥

ततो वधूमाता भ्राता वा लाजाञ्छूर्पे सूर्पे धृत्वाऽथवाऽन्यस्मै दत्त्वा, वराञ्जलिस्थे वध्वञ्जलौ आज्यमुपस्तीर्य, सकृत्सव्यग्गृहीतं लाजाञ्जलिं वध्वञ्जलौ क्षिप्त्वा, पुनराज्येनाभिघारयेत् । ततो वधूर्वराञ्जलिमविमुञ्चती समिद्धेऽग्नौ लाजाञ्जलिं जुहुयाद्वर-पठितमन्त्रेण । इयं नारीत्यस्य आथर्वणोऽनुष्टुप् अग्निः लाजाहोमे विनियोगः ।

ॐ इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती । दीर्घायुरस्तु मे पतिः शतं वर्षाणि जीवत्वेधन्तां ज्ञातयो मम स्वाहा ॥

इदमग्नये न ममेति त्यागः । ततो वरो वध्वाः पृष्ठतः परि-क्रमणेन वामतो गत्वा, अञ्जलिमविमुञ्चन् प्रतोदग्राहं कुम्भग्राहं

---

१ २ २ १ २ १

(१) भ्रान्त्वागते यत इन्द्रेति पूर्वी पठेत्—यत इन्द्रभयामहायि ।

१ १ २ १ २ १ २ १ २

ततोनोआभयं कृधायि । मघवा २३ ञ्छा । ग्धायिवतत् । न ऊताया ।

३ २२ ३२ २ १ २ १ २ २

औहो ३४ वा हायि । विद्वायिषो २३ वी ३ । होवा ३ हायि ।

१ २ २ २ २२ १ १२ २ २

मृधोजा २३ हा ३४३ यि ॥ विद्विषो विमृधोजहायि । विद्विषोवायि-

२ १२ २ २ २ २२ १ २̂

मृधोजहायि । तुवꣳ हा २३ यिरा । धास्त्स्य तेरा । धसोमाहा ।

३२ २ ३२ २ १ २ १ २ २

औहो ३४ वाहायि । स्व । यास्या २३ सी ३ । होवा ३ हायि ।

१ २ १ २ १२ २ १ २ २ १

विधा २३ र्त्ता ३४३ ॥ क्षयस्यासि विधर्ता । क्षयस्यासीविधर्त्ता ।

२ २ १ २ १ २̂ ३२ २ ३२ २

तंत्वा वा २३ याम् । माघवाम्नि । द्रुगायिर्वाणा । औहो ३४ वा हायि ।

२ २ १ २ २ १२ २

सु । तावा २३ ना ३ः । होवा ३ हायि । हवामा २३ हा ३४३ यि ।

२

ओ २३४५ इ । डा ॥ १ ॥

ब्रह्माणं परिणयनकारयितारं बाह्यतः कुर्वन्, लाजानाज्यं स्रुवमुदकुम्भं प्रतोदमश्मानं चान्तरतः कुर्वन्वधूं प्रदक्षिणमग्निं परिणयति कन्यलेति मन्त्रेण । मन्त्रवान्ब्राह्मणः परिणयेत्प्रति परिणयनं मन्त्रावृत्तिः । कन्यलेत्यस्य प्रजापतिस्त्रिष्टुबग्निः परिणयने वि० ।

ॐ कन्यला पितृभ्यः पतिलोकं यतीयमपदीक्षामयष्ट ।

कन्या उत त्वया वयं धारा उदन्या इवातिगाहेमहि द्विषः ॥

एवमग्नेः प्रादक्षिण्येन परिणयनं कृत्वा, अग्नेः पश्चादवस्थाय, वध्वानुपृष्ठगमनेन तद्दक्षिणत उदङ्मुखः स्वाञ्जलिना गृहीतवध्वञ्जलिर्वरोऽवतिष्ठते । ततस्तथैव माता भ्राता वा अश्माक्रमणं कारयित्वा, उपस्तारपूर्वकं वध्वञ्जलौ लाजान्प्रक्षिप्य, पुनरभिघारयेत् । ततो वधूः पूर्ववज्जुहुयाद्वरपठितमन्त्रेण । अर्यमणमित्यस्याथर्वणोऽनुष्टुबर्यमा लाजाहोमे विनियोगः ।

ॐ अर्यमणं नु देवं कन्या अग्निमयक्षत । स इमां देवो अर्यमा प्रेतो मुञ्चातु मामुत स्वाहा ॥ इदमर्यम्णे न मम ।

ततो वरो वध्वाः पृष्ठतः परिक्रमणेनोत्तरतो गत्वाऽञ्जलिमविमुञ्चन्परिणयेन्मन्त्रेण । ततः पूर्ववदनुपृष्ठगमनाद्यञ्जलिग्रहणान्तं वरः कुर्यात् । ततः शूर्पादानाश्माक्रामण-लाजावाप-होमादि पूर्ववत् । पूषणमित्यस्याथर्वणोऽनुष्टुप् पूषा लाजाहोमे वि० ।

ॐ पूषणं नु देवं कन्या अग्निमयक्षत । स इमां देवः पूषा प्रेतो मुञ्चातु मामुत स्वाहा ॥ इदं पूष्णे न ममेति ।

पुनस्तथैव परिणयनं मन्त्रवत् । ततोऽग्नेः पश्चादवस्थानानन्तरं तथैवावस्थिता कन्यामाता भ्राता वा वध्वञ्जलौ शूर्पं स्थापयेत् । ततो वधूः शूर्पाग्रकोणेन लाजानां शेषं तूष्णीमग्नौ जुहुयात् । नात्रानुपृष्ठगमनाश्माक्रामणोपस्तरणप्रत्युपस्तरणादीनि भवन्ति ।(१)

---

(१) सोम उष्वाण लाजके इति पूर्वी पठेत्–हाव।यि । सोमउष्वा-

णः सोतृभिः । होवाई । आधिष्णुभिरवीनाम् । आश्वयेव । हारी- ताया ३१ । तिधा २ रा २३४ या । मन्द्राया २३ या ३ । ता २ यिधा २३४ औहोवा । रा २३४ या ॥ होवायि । मन्द्रयायाति- धारया । होवायि । मान्द्रयायातिधारया । आनुपे । गोमान् गो ३१ । भारयिरा २३४ औहोवा । आ २३४ क्षाः ॥ होवायि । सोमो दुग्धाभिरक्षाः । होवायि । सोमो दुग्धाभिरक्षाः । सामुद्रन्न । सांवरणा ३१ । निया २ आ २३४ ग्मान् । मन्दायि मा२३दा ३ । या २ ता २३४ औहोवा । शा २३४ ते ॥१॥ इति लाजाहोमसमये पूर्वी पठित्वा, अग्निप्रदक्षिणासमये अभिसोमास इति पूर्वी पठेत्—आभी । सोमास आ ३१ उवा २३ । या २३४ वाः । पवन्तेमदियं मद६ समुद्रस्याधिविष्टपेमनीषिणा २३४५ः । मत्सारा १ सा२ः । मदा ३ । हुं २३ बा ३ । च्यूता २३४५ः ॥ मात्सा । रासोमदा हुं १ उवा २३ । च्यू २३४ ताः । मत्सरासोम दच्युतस्तरत्समुद्रंपवमानऊर्मिणा २३४५ । राजादा १ यिवा २ः । ऋता२म् । हुं २३ बा ३ । बृहा २३४५ त् ॥ राजा । दायिवऋता ३१ उवा २३ । वृ २३४ हात् । राजादेवऋतंबृहद- र्षामित्रस्यवरुणस्यधर्मणा २३४५ । महायिन्वा १ ना २ः । ऋता २म् । हुं २३ म्बा ३ । बृहा २३४५ त् ॥२॥ इति प्रदक्षिणे पूर्वी ॥

तत उत्तरस्यां दिश्यवस्थितेन वरेण गृहीताञ्जलिकां वधूमीशानदिगभिमुखीं दक्षिणपादाङ्गुष्ठमुत्थाप्य काश्चित्सप्तपदानि क्रामयेत् । ततो गृहीताञ्जलिरेव वरो "मा सव्येन दक्षिणमतिक्रामेति" वधूं प्रति वदेत् । अथ वधूर्दक्षिणपादेनाक्रम्य, तस्य पश्चाद्वामपादेनाक्रामेत् । वामं पादमग्रतो न कुर्यात् । वरपठितैरेव सप्तभिर्यजुर्भिः सप्तपदाक्रमणम् । एकमिषेत्यादीनां प्रजापतिरेकपदा विराड्विष्णुः पदाक्रमणे विनियोगः ।

ॐ एकमिषे विष्णुस्त्वा नयतु ॥ १ ॥

„ द्वे ऊर्ज्जे विष्णुस्त्वा नयतु ॥ २ ॥

„ त्रीणि व्रताय विष्णुस्त्वा नयतु ॥ ३ ॥

ॐ चत्वारि मायोभवाय विष्णुस्त्वा नयतु ॥ ४ ॥

„ पञ्च पशुभ्यो विष्णुस्त्वा नयतु ॥ ५ ॥

„ षड्रायस्पोषाय विष्णुस्त्वा नयतु ॥ ६ ॥

„ सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वा नयतु ॥ ७ ॥

तत एकमिषेत्यादिभिः सप्तपदाक्रमणं कृत्वा, ततोऽष्टमेन सखा सप्तपदी भवेत्यनेन मायोष्ठ्या इत्यन्तेनाशंसनं कुर्यात् । सखा सप्तेत्यस्य प्रजापतिः पङ्क्तिराशास्यमानो देवता आशंसने विनियोगः ।

ॐ सखा सप्तपदी भव सख्यन्ते गमेयꣳ सख्यन्ते मायोषाः सख्यन्ते मायोष्ठ्याः ॥(१)

---

१ २ २ १
(१) इदं विष्णाथ विक्रमे इति पूर्वी पठेत्—इदं विष्णाऔहो
२ ^३ ५ ३२ १
हायि । वायिचक्रा २३४ मायि । त्रेधाना २३४ यि
५ २ २ ३२४२ ६ १ ३ ५
हायि । दधेपा ३४ । औहोवा । इहा २३४ हायि ।
२ ३ ५ २१२२ १ ७ २ २ ३२
उहुवा २३४ दाम् । समूढम् । आस्य पाꣳ सू ३४ । औ-

ततो वधूं प्रेक्षितुमागतान्वरः प्रतिमन्त्रयेत्सुमङ्गलीरिति मन्त्रेण । सुमङ्गलीरित्यस्य प्रजापतिरनुष्टुब्वधूः ईक्षकजनप्रतिमन्त्रणे विनियोगः ।

ॐ सुमङ्गलीरियं वधूरिमा१ँ समेत पश्यत ।
सौभाग्यमस्यै दत्त्वा याथास्तं विपरेतन ॥

ततोऽग्नेर्दक्षिणतः स्थितः सहोदकुम्भो विप्रोऽग्नेः पश्चिमतः संवृतगतिरेत्य, कलशादुदकं कुशैरादाय, समञ्जन्तु विश्वेदेवा इति मन्त्रं स्वयं पठित्वा, वरं शिरस्यभिषिञ्चेत् । पुनर्जलमादाय मन्त्रेणैव वधूं शिरस्यभिषिञ्चेत् । समञ्जन्त्विति अथर्वणोऽनुष्टुब्विश्वेदेवा, आपो वा मूर्द्धाभिषेके विनियोगः ।

ॐ समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ ।
सं मातरिश्वा सं धाता समुदेष्ट्री दधातु नौ ॥

---

४र ५ १ ३ ५ ३१ २ ५र
होवा । इहा २३४ हायि । औहो ३१२३४ । ळायि । एहिया
५ २र र ११ २ २ ३ ५
६ हा ॥ त्रीणि पदा औहो हायि । वायिचक्रा २३४ मायि ।
२ १ ५ १र ११ ३र ४र ५ १३
विष्णुर्गो २३४ हा । पाअदाभा ३४ । औहो वा । इहा २३४
५ २ ३ ५ २१र २ १ ७ र २ ३र ४र ५
हायि । उहुवा २३४ धाः । अतोध । र्माणिधारा ३४ । औहो वा ।
१३ ५ ३१ २र ५र ५
इहा २३४ हायि । औहो ३१२३४ । यान् । एहिया ६ हा ॥
२ र र र १ २ ^ ३ ५ २ १
विष्णोः कर्मा औहो हायि । णायिपश्या २३४ ता । यतो व्रा
५ १र २ ३र ४र ५ २ ५
१२३४ हा । तानि पस्पा ३५ । औहो वा । इहा २३४ हायि ।
२ ३ ५ २ १ २ १ ७ २ ३र ४र ५
उहुवा २३४ शायि । इन्द्रस्य । यूजियः सा ३४ । औहो वा ।
१ ३ ५ ३र २ ५र ५
इहा २३४ हायि । औहो ३१२३४ । खा । एहिया ६ हा । हो
५ ई । डा ॥ १ ॥

ततोऽभिषेकानन्तरं दक्षिणस्यां दिश्यवस्थितः प्रतोदहस्तो ब्राह्मणः सप्ताहं त्र्यहं वा रक्षार्थं वरमनुगच्छेत् । अथ वरः पूर्वगृहीतं वध्वञ्जलिं वामहस्तेन मणिबन्धदेशे गृहीत्वा, दक्षिणेन वध्वा दक्षिणहस्तं साङ्गुष्ठमुत्तानं गृहीत्वा, अभिषेकदेशेऽवस्थित एव गृभ्णामितेत्यादि षट् पाणिग्रहणमन्त्रान्पठेद्यावत्खण्डसमाप्तिः । गृभ्णामितेत्यस्य याज्ञवल्क्यस्त्रिष्टुप् भगादयः, अघोरेति प्रजापतिस्त्रिष्टुप् कन्या, आनरिति प्रजापतिर्जगती प्रजापतिः, इमां त्वमिन्द्रेति प्रजापतिरनुष्टुबिन्द्रः, सम्राज्ञीति प्रजापतिरनुष्टुबाशास्यमानाः, मम व्रतेति प्रजापतिस्त्रिष्टुप् बृहस्पतिः, पाणिग्रहणजपे विनियोगः ।

ॐ गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥१॥

अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः ।
वीरसूर्जीवसूर्देवकामास्योना शन्नो भव द्विपदे शं चतुष्पदे ॥२॥
आ नः प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा ।
अदुर्मङ्गलीः पतिलोकमाविश शन्नो भव द्विपदे शं चतुष्पदे ॥३॥
इमां त्वमिन्द्र मीढ्वः सुपुत्राꣳ सुभगां कृधि ।
दशास्यां पुत्रानाधेहि पतिमेकादशं कुरु ॥ ४ ॥
सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव ।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥ ५ ॥

मम व्रते ते हृदयं दधातु मम चित्तमनुचित्तं ते अस्तु । मम वाचमेकमना जुषस्व बृहस्पतिस्त्वा नियुनक्तु मह्यम् ॥ ६ ॥

ततः समाचारादुभावग्निं तूर्णीं परिक्रम्याग्नेः पश्चात्पूर्ववदुपविशतः । अथ वरो व्याहृतिचतुष्टयं हुत्वा, पुनस्त्रयञ्च जुहुयात् । ततः समिदाधानादि तन्त्रं समाप्य पूर्णपात्रं दक्षिणां च दद्यात् ॥

## अथोत्तरविवाहः ।

तत्र तस्मिन्स्थानादैशान्यां दिशि यदभिरूपं ब्राह्मणगृहं तत्र तदभावेऽन्यत्रापि यदभिरूपं ब्राह्मणगृहं तत्र वरसहायाः अश्वादिना वधूवरौ नयेयुः । यदि विवाहाग्निर्गृह्याग्नित्वेन परिगृहीतो भवति, तदा समिदादौ समारोप्य तमग्निं नयेत् । अथवा शकटे आरोप्य प्रत्यक्षो नेयः । तत्र संमार्गादि-सुसंस्कृते कुण्डे स्थण्डिले वा गृह्याग्निं लौकिकाग्निं वा संस्थाप्य, आज्यतन्त्रेणासादनादिव्याहृतित्रयहोमान्तं कुर्यात् । अथान्यः कश्चिदग्नेः पश्चिमतो रक्तवृषभचर्म तदभावेऽन्यवर्णमपि प्राग्ग्रीवमुपरिकृतलोमभागमास्तीर्य तस्मिन्कृतमौनां वधूमुपवेशयेत् । अभिरूपब्राह्मणगृहाभावे विवाहवेद्यांश्चेदेतत्क्रियते तदा विवाहाग्नेरेव पश्चिमतस्तादृशं चर्मास्तीर्य, वधूमुपवेशयेत् । सा नक्षत्रदर्शनपर्यन्तमुपविष्टैव तिष्ठेन्न भुञ्जीत नोत्तिष्ठेदन्यत्र मूत्रादिकरणात् । एतद्दिवा विवाहविषयम् ।

गोरजादिलग्नवशाद्रात्रिविवाहे तु कालदेशकर्त्रैक्यात्तन्त्रेणानुष्ठानेन कर्मद्वयं कुर्यात् । तत्रैवं क्रमः—पाणिग्रहणजप-चतुर्थपरिक्रमणानन्तरं व्याहृतिचतुष्टयं त्र्यक्षं हुत्वा, उत्तरतन्त्राङ्गं व्याहृतित्रयं हुत्वा, चर्मोपवेशनम् । ततो "दृश्यते ध्रुव" इति केनचिदुक्ते वरो लेखासन्धिष्वित्यादिषणमन्त्रैः षडाज्याहुतीर्जुहुयात् । षण्णामाहुतीनां हुतशेषमाज्यबिन्दुं वध्वाः शिरसि पातयेत् । लेखासन्धिष्वित्यादीनां षण्णां प्रजापतिरनुष्टुप् कन्या होमे विनियोगः ।

ॐ लेखा सन्धिषु पक्ष्मस्वावर्त्तेषु च यानि ते ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥ १ ॥
शीले यच्च पापकं भाषिते हसिते च यत् ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥ २ ॥
आरोकेषु च दन्तेषु हस्तयोः पादयोश्च यत् ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥ ३ ॥

ऊर्वोरुपस्थे जङ्घयोः सन्धानेषु च यानि ते ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥ ४ ॥
यानि कानि च घोराणि सर्वाङ्गेषु तवाऽभवन् ।
पूर्णाहुतिभिराज्यस्य सर्वाणि तान्यशीशमम् ॥ ५ ॥

इदं कन्यायै न ममेति सर्वत्र त्यागः । अथ वधूवरौ सहैवोत्थाय, परिवृताद्बहिरुत्तरतो गत्वा, वरो वधूं ध्रुवं दर्शयेत् "ध्रुवं पश्येति" सम्बोध्य । ततो ध्रुवं पश्यन्तीं वधूं वरो मन्त्रं पाठयेत्(१) ।

ॐ ध्रुवमसि ध्रुवाहं पतिकुले भूयासं देवदत्तशर्मणः शुभदा ॥

ततो "अरुन्धतीं पश्येति" सम्बोध्य पश्यन्तीं मन्त्रं पाठयेत् ।

"ॐ अरुन्धत्यसि रुद्धाहमस्मि देवदत्तशर्मणा शुभदा" इति ॥

---

२ १
(१) ध्रुवदर्शने समोवा इति पूर्वां पठेत्॥ समोवा । घमग्निꣳ समि·
र २ र १ — र २ र १ —
धा । गिरागार्णा २ यि । शुचिं पावकं पुरो आ । ध्वरे ध्रुवा २ म् ।
२ र २ १ १ २ ४ ५
विप्रꣳ होतारं पुरुवा । रमद्रुहा २३ म् । कावी ३ꣳ सुम्नायिः ।
२ १ १ ४
ईमहायिजा २३ । ता वा ३ यिदा ५ सा ६५६ म् ॥ १ ॥
२ १ र र २ र १ — र
तुवो वा । दूतमग्ने अमृताम् । युगे युगा २ यि । हव्यवाहं दधि·
र २ र १ — र र २ र १
रेपा । शुमीडाया २ म् । देवासश्च मर्त्तासाः । चजागृवा २३ यिम् ।
१ २ ४ ५ २ १ १ २ ४
वोयिभू ३ म्वायिश्पा । तिन्नमासा २३ । नायिषा ३ यिदा ५
२ १ र २ १ —
यिरा ६५६ यि ॥२॥ विभो वा । षन्नग्र उभयाꣳ । अनुव्राता २।
र र र र र २ र १ — र ९
दूतो देवानाꣳ रजसी । समीयासा २ यि । यत्तेधीतिꣳ सुमतिमा ।
२ र १ १ २ ४ ५ २ १ १
वृणीमाहा २३ यि । आधा २ स्मानाः । त्रिवरूथा २३ । शायि
२ ४
वो ३ भा ५ वा ६५६ ॥ ३ ॥

अथैनामनामिकया स्पृष्ट्वाऽनुमन्त्रयेत् मन्त्रेण। ध्रुवा द्यौरित्यस्य प्रजापतिरनुष्टुबाशास्यमाना अनुमन्त्रणे विनियोगः।

ॐ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत्।

ध्रुवासः पर्वता इमे ध्रुवा स्त्री पतिकुले इयम्॥

तदनन्तरं भर्तृगोत्रेण स्वपतिमभिवादयेत्। "अमुकगोत्रा शुभदा अहं भो अभिवादयामी"त्यभिधाय नमस्कुर्यात्। अयं वध्वा वाग्विसर्गो यः पूर्वमासीत्। ततो वधूसहितो वरस्तथैवाग्नेः पश्चादुपविश्य, व्याहृतिचतुष्टयं पुनस्त्रयश्च हुत्वा, समिधमाधायानु पर्युक्ष्य, यज्ञवास्तु कृत्वा, वस्वाहुतिं हुत्वाग्निं परिक्रम्य, चमसं निनीय, पुनः पूरयेत्। ततः समाचारात्सुसम्प्रोक्षितमस्त्वित्यादि कृत्वा, ब्रह्मणे पूर्णपात्रदानं दत्वा, ब्राह्मणभोजनादिसङ्कल्पान्कुर्यात्। ततो वामदेव्यं गीत्वा, अग्निं वृद्धांश्च प्रणमेत्॥

इत्युत्तरो विवाहः॥

## अथ समशनीयचरुः।

अथ विवाहकर्मण ऊर्द्ध्वं दम्पती त्रिरात्रं सर्ज्जिकादिक्षार-सैन्धवादिलवणव्यतिरिक्तान्नभोजनौ मैथुनरहितौ भूमावेकत्र सह शयीयाताम्। ततो यदि महानिशादिदोषवर्ज्जितः कालः प्रातः समशनीयचरुकरणासम्भवस्तदा शुद्धे पात्रे ओदनादि हविष्यमन्नं यत्प्रथमं परिविष्टं तद्द्विधा कृत्वा, एकं भागं दक्षिणहस्तेन स्पृष्ट्वा अभिमन्त्रयेन्मन्त्रेण। अन्नपाशेनेति प्रजापतिरनुष्टुबन्नं, यदेतदिति प्रजापतिरनुष्टुबाशास्यमानाः अभिमन्त्रणे विनियोगः।

ॐ अन्नपाशेन मणिना प्राणसूत्रेण पृश्निना।

बध्नामि सत्यग्रन्थिना मनश्च हृदयं च ते॥ १॥

यदेतद्धृदयं तव तदस्तु हृदयं मम।

यदिद१ँ हृदयं मम तदस्तु हृदयं तव।

अन्नं प्राणस्य षड्विँशस्तेन बध्नामि त्वाऽसौ॥ २॥

बध्नामि त्वासावित्यत्र शुभदेति सम्बोधनान्तं वधूनाम प्रयोज्यम् । ततोऽभिमन्त्रितस्यैकदेशं बलिदानादिपूर्वकं यथाचारं भुक्त्वा, शेषं भार्यायै भोजयेत्(१) ।

इदं निशि चेत्क्रियते तदा वस्वन्तकर्माणि कृते एतत्कृत्वा, पश्चात्तन्त्रसमाप्तिरित्येवं क्रमानुग्रहः । एवं भोजनं परिसमाप्याचम्य, ब्रह्मणे गां दत्वा, वामदेव्यं गायेदिति ।

अथ यदि तस्यां रात्रौ भोजनासम्भवस्तदा प्रातःस्नानादिनित्यक्रियां निर्वर्त्य, विवाहवेद्यां कृतलक्षणे स्थण्डिलेऽग्निं स्मार्त्तं लौकिकं वा संस्थाप्य, चरुतन्त्रेण सम्यगशनाय चरुं श्रपयेत् ।

---

(१)अस्मिन् भोजनावसरे ब्राह्मणाः आयंतइवेति पूर्वां पठेयुः ॥

२र २ १ — १ —
आयन्त इव सू १ रायाम् । विश्वा २ यि दिन्द्रा २ ।
१ — १ १ र २ २२१र २र २ १ २ —
स्यभा २ क्षाता । वासूनि जातो जनिमा । नियोजा १ सा २ ।
१ २र १ — १ २ १ २ २ १
प्रतिभागन्नदी २ धिमः । प्रा २३ ती । भागान्ना ३ दा । हुम् ।
३ २ १ ५ २र २
धिमा ३ः । ओ २३४ वा ॥ १ ॥ प्रतिभागन्नदा १ यिधायिमाः ।
१ — १ — १ — १ १ २र १
प्रता २ यि भागा २ मू । नदा २ यि धायिमाः । आलर्षिरातिं
२र १ २ — १र २ र १ २ १
वसूदाम् । उपास्तु १ हा २ यि । भद्रा इन्द्रस्य रातयः । भा २३
२ १ २ २ १ ३ १ ५
द्राः । इन्द्रास्या ३ रा । हुम् । तया ३ः । ओ २३४ वा ॥ २ ॥
२ र २ १ — — १ — १
भद्रा इन्द्रस्य रा १ तायाः । भद्रा २ इन्द्रा २ । स्यरा २ ता याः ।
१र २ र १ २ १ २ — १ २र १ र र २
यो अस्य कामं विधतः । नरोषा १ ता २ यि । मनो दानाय
र १ २ १ २ १र २ २ १ ३ २ १
चोदयन् । मा २३ नाः । दानाया ३ चो । हुम् । दया ३ । ओ
५ २
२३४ वा । श्रिये १ ॥ ३ ॥

तत्र पात्रासादने स्रुगासादनं न, अनुपयोगात् । तत्र प्रधानदेवताः १-अग्नये त्वा जुष्टं निर्वपामि । २-प्रजापतये त्वा० । ३-विश्वेभ्यो देवेभ्यस्त्वा० । ४-अनुमतये० । एवं निरूप्य कण्डनादिपूर्वकं चरुं श्रपयित्वा, पात्रसम्मार्गान्ते चरावाज्यं प्रक्षिप्य, मेक्षणेन प्रधानहोमः । नात्राज्यभागौ ।

१-ॐ अग्नये स्वाहा । इदमग्नये न मम । २-ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम । ३-ॐ विश्वेभ्यो देवेभ्यः स्वाहा । इदं विश्वेभ्यो देवे० । ४-ॐ अनुमतये स्वाहा । इदमनुमतये० । अथ व्याहृतिचतुष्टयं हुत्वा पुनस्त्रयञ्च हुत्वा, वसुभ्यः स्वाहेति चरुशेषं पात्रान्तरे समुद्धृत्य अभिमन्त्रण-भोजनादि-वामदेव्यगानान्तमुक्तवत्कार्यम् ॥ इति समशनीयचरुः ।

## अथ पतिगृहगमनम् ।

तच्च विवाहदिवसादारभ्य दिनपञ्चकपर्यन्तमुक्तवारनक्षत्र युतायां तिथावसम्भवे देशान्तरवशतश्च षष्ठं दिनं विहाय समेषु दिवसेषु षोडशदिवसपर्यन्तं प्रशस्तनक्षत्र-वार-युतेऽहनि कार्यम् । तत्र पतिगृहगमनाय रथाश्वादियानमारोहन्त्यां वध्वां सुकिंशुकं इति मन्त्रं जपेत् । सुकिंशुकमिति प्रजापतिस्त्रिष्टुप् वधूः जपे विनियोगः ।

ॐ सुकिंशुकं शल्मलिं विश्वरूपं सुवर्णवर्णं सुकृतं सुचक्रम् । आरोह सूर्ये अमृतस्य नाभिं स्योनं पत्ये वहतुं कृणुष्व ॥

ततो वध्वा सह गच्छन्पतिश्चतुःपथ-नदी-व्याघ्र-चौरादियुत-स्थान-महावृक्ष-श्मशानादीन्प्रतिमन्त्रयेन्माविदन्निति मन्त्रेण । माविदन्निति प्रजापतिऋषिरनुष्टुप्छन्द आशास्यमाना देवता चतुःपथाद्यामन्त्रणे विनियोगः ।

ॐ मा विदन्परिपन्थिनो य आसीदन्ति दम्पती ।
सुगेभिर्दुर्गमतीतामपद्रान्त्वरातयः ॥

ततः पथि यदि यानाक्षभङ्ग-नद्धरज्जुविमोक्षचौरसङ्गमादि विपदुत्पद्यते तदा यदि विवाहाग्निरानीतो भवति तदातं, इतरथाऽन्यं लौकिकं पञ्चभूसंस्कारपूर्वकं संस्थाप्य, क्षिप्रहोमविधिना व्याहृतिहोमं कुर्यात् । तत्र क्रमः—अग्निं संस्थाप्य, आचम्य प्राणमायम्य, देशकालौ स्मृत्वा 'अक्षभङ्ग-चौराद्युत्पन्नोपद्रवनिमित्तं व्याहृतिहोममहं करिष्ये' इति सङ्कल्प्य, आज्यं संस्कृत्य, भुजपपर्युक्षणे कृत्वा, समिधमाधाय, व्याहृतिचतुष्टयं हुत्वा, पुनः समिद्धोमानुपर्युक्षण-मसेकादीन्विधाय अन्यदक्षादि विनष्टमाहृत्य हुतशेषाज्येन 'य ऋते चिदिति' मन्त्रेणाभ्यञ्जेत् । य ऋते चिदिति मेधातिथिर्बृहतीन्द्रः अभ्यञ्जने विनियोगः ।

ॐ यऋऽते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।
सन्धाता सन्धिं मघवा पुरूवसुर्निष्कर्ता विहुतं पुनः ॥

ततो वामदेव्यं गीत्वा याने वधूमारोहयेत् । ततो गृहं प्राप्य पुनर्वामदेव्यं गायेत् । ततः पतिपुत्रशीलवत्यो ब्राह्मण्यो यानाद्वधूमवताय्यं, उत्तरलोम्नि प्राग्ग्रीवे रक्तवृषभचर्मणि 'इह गाव' इति मन्त्रेण वरपठितेनोपवेशयेयुः । "मन्त्रो वरेण पठनीय" इति वृद्धाः । इह गाव इति प्रजापतिरनुष्टुप् गृहं उपवेशने वि० ।

ॐ इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः ।
इहो सहस्रदक्षिणोऽपि पूषा निषीदतु ॥

ततस्ता एव ब्राह्मण्यः चर्मण्युपविष्टाया एव वध्वा उत्सङ्गे अकृतचूडं कुमारं उपवेश्य, कुमारस्याञ्जलौ कमलबीजान्यन्यानि फलानि वा दत्वा, उत्सङ्गात्कुमारमुत्थाप्य, वधूसन्निधावुपविश्य, कृतलक्षणे स्थण्डिले धृतिनामानमग्निं संस्थाप्य, आज्यतन्त्रेण व्याहृतित्रयहोमान्तं विधाय, इह धृतिः स्वाहेत्याद्यष्टावाज्याहुतयो होतव्याः। इह धृतिरित्यस्य प्रजापतिर्बृहती कन्या होमे वि०(१)।

---

२ २ १ २ २
(१)धृतिहोमे अभिहाउ इति पूर्वी पठेत् ॥ अभिहाउ । सोमास

ॐ इह धृतिः स्वाहा । इदमिह धृत्यै न मम ॥ १ ॥

,, इह स्वधृतिः स्वाहा । इदमिह स्वधृत्यै न मम ॥ २ ॥

,, इह रन्तिः स्वाहा । इदं इह रन्त्यै० ॥ ३ ॥

,, इह रमः स्वाहा । इदं इह रमाय० ॥ ४ ॥

,, मयि धृतिः स्वाहा । इदं मयि धृत्यै० ॥ ५ ॥

,, मयि स्वधृतिः स्वाहा । इदं मयि स्वधृत्यै० ॥ ६ ॥

मयि रमः स्वाहा । इदं मयि रमाय० ॥ ७ ॥

मयि रमस्व स्वाहा । इदं मयि रमस्वाय० ॥ ८ ॥

अथ व्याहृतिचतुष्टयं पुनस्त्रयं च हुत्वा, समिधमाधायानुपर्युक्ष्य, यज्ञवास्तु-वस्वाहुति-दक्षिणादानान्तं कृत्वा, विद्यागुरु-मातृ-पितृक्रमेण यथाज्येष्ठं गोत्रेणाभिवादयेत् । अमुकगोत्रोऽमुकशर्माऽहं भो अभिवादयामीत्युक्त्वा, स्वदक्षिणहस्तेन दक्षिणं; सव्येन सव्यं गुरोश्चरणं संस्पृशेत् । एवमन्यानभिवादयेत् । ततो वामदेव्यं गायेत् । इति धृतिहोमः ॥

## अथ विवाहदिवसाच्चतुर्थेऽहनि चतुर्थीकर्म ।

तत्र स्मार्ताग्निं तदभावे लौकिकं शिखिनामानमग्निं प्रतिष्ठाप्य,

---

३ ५ २ २र १ २ १ २ १

आ ३१ उवा २३ । या २३४ वाः । पवन्ते मदियं मद६ समु-

र २ १ र २ र १ ३ १ १ २ १ २ २ १

द्रस्याधिविष्टपे मनीषिणाः २३४५: ॥ १ ॥ मत्साहाउ । रासो-

२ ३ ५ २ १र र २ १ र

मदा ३१ उवा २३ । च्यू २३४ ताः । मत्सरासो मदच्युतो

२ १र र २ १ २ १ २ १ २र र १ ३ १ १ १

मत्सरासो मदच्युतस्तरत्समुद्रं पवमान ऊर्मिणा २३४५ ॥ २ ॥

२र २ १ २ ३ ५ १र र

राजाहाउ । दायिवऋता ३१ उवा २३ । बृ २३४ हात् । राजा-

२र १ २ १ र र २र १ २ १ २ १ र २ १ र १ २ १ ३

देवऋतं बृहद्राजा देवऋतं बृहदर्षामित्रस्य वरुणस्य धर्मणा

१ १ १ १ १ २ १ २ ३ ५

२३४५। महायि हाउ । न्वानऋता ३१ उवा २३ । बु २३४ हात् ॥३॥

आज्यतन्त्रेण व्याहृतित्रयहोमान्तं कृत्वा, अग्ने प्रायश्चित्तेत्याद्यू-हवद्भिर्विंशतिभिर्मन्त्रैर्होमः । प्रत्याहुति स्रुवलग्नहुतशेषं आज्य-बिन्दुमग्नेरुत्तरस्यां स्थापितोदपात्रे प्रक्षिपेत् । मन्त्राणामूहप्रकारो यथा—अग्ने प्रायश्चित्ते, वायो प्रायश्चित्ते, चन्द्र प्रायश्चित्ते, सूर्य प्रायश्चित्ते, अग्निवायुचन्द्रसूर्याः प्रायश्चित्तयः स्थेति पञ्चस्वपि मन्त्रेषु 'पापीलक्ष्मीः' इति पदं योज्यम् । एवं द्वितीयपञ्चके 'पतिघ्नी'प-दम् । तृतीये 'अपुत्र्येति' पदम् । चतुर्थे 'अपशव्येति' पञ्चमे निगदे सर्वत्र अपहत स्वाहेति । अग्ने प्रायश्चित्तेत्यादिपञ्चमन्त्राणां प्रजा-पतिर्यजुः प्रथमस्याग्निर्द्वितीयस्य वायुस्तृतीयश्चन्द्रमसश्चतुर्थः सौर्यः अग्निवायुचन्द्रसूर्याणां पञ्चमः, तथा तथा त्यागः ।

ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मण-स्त्वा नाथकाम उपधावामि यास्याः पापीलक्ष्मीस्तामस्या अप-जहि स्वाहा । इदमग्नये न मम ॥ १ ॥

ॐ वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्याः पापीलक्ष्मीस्तामस्या अपजहि स्वाहा । इदं वायवे न मम ॥ २ ॥

ॐ चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्याः पापीलक्ष्मीस्तामस्या अपजहि० । इदं चन्द्राय० ॥ ३ ॥

ॐ सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि यास्याः पापीलक्ष्मीस्तामस्या अपजहि स्वा-हा । इदं सूर्याय० ॥ ४ ॥

अग्निवायुचन्द्रसूर्याः प्रायश्चित्तयो यूयं देवानां प्रायश्चित्तयः स्थ ब्राह्मणो वो नाथकाम उपधावामि यास्याः पापीलक्ष्मीस्ता-मस्या अपहत स्वाहा ॥ इदं अग्निवायुचन्द्रसूर्येभ्यो न मम ॥ ५ ॥

ततो व्याहृतिहोमादि तन्त्रं समाप्य(१)।

---

(१)अस्य प्रत्ना चतुर्थके इति पूर्वां पठेत् ॥ अस्य प्रत्नामनुद्युतं । शुक्रं दुदुह्रे अह्रयः । पयः सहस्रसामृषिम् ॥ अयꣳ सूर्य्य इवो पदृक् । अयꣳ सराꣳसि धावति । सप्तप्रवत आदिवम् । अयं विश्वानि तिष्ठति । पुनानो भुवनोपरि । सोमो देवो न सूर्य्यः । ए । भ्राज ॥ १ ॥ विभ्राड्बृहत्पिबतु सोम्यं मधु । आयुर्द्दधद्यज्ञप-तावविह्रुतम् । वातजूतो यो अभिरक्षति त्मना । प्रजाः पिपर्ति बहु-धा विराजति ॥ विभ्राड्बृहत्सुभृतं वाजसातमम् । धर्म दिवो धरुणे सत्यमर्पितम् । अमित्रहा वृत्रहा दस्युहन्तमम् । ज्योतिर्यज्ञ असु-रहा सपत्नहा ॥ इदꣳ श्रेष्ठꣳ ज्योतिषाञ्ज्योतिरुत्तमम् । विश्वजिद्ध-नजिदुच्यते बृहत् । विश्वभ्राड्भ्राजोमहि सूर्य्योदृशे । उरुपप्रथे सह ओजो अच्युतम् ॥ २ ॥ तवाहꣳ सोमरारण । सख्यइन्दोदि वे दिवे । पुरूणि बभ्रो निचरन्ति मामव । परिधीꣳ रतिताꣳ इहि । ३ । तवाहं नक्तमुत सोम ते दिवा । दुहानोबभ्रऊधनि । ३ । घृणातपन्तमति सूर्य्यं परः । शकुना इव पप्तिम ॥ ३ ॥ बण्म हाꣳ असि सूर्य्य । बडादित्यमहाꣳ असि । महस्ते सतो महिमा प-निष्टम । मन्हादेवमहाꣳ असि । ३ । बट्सूर्य्य श्रवसा महाꣳ असि । सत्रादेवमहाꣳ असि । ३ । मन्हादेवानामसूर्य्यः पुरोहितः । विभु-

२ २ १ २ १ २ १२२१ २ २ २ १ २ १ २ १ २

ज्योतिरदाभ्यम् ॥४॥ इन्द्रमिद्देवतातये । इन्द्रं मयत्यध्वरे । इन्द्र४
२ १ १ २ १ २ २ १ २२ २ २ १ २ २ १ २ १ २ १ २ २

समीकेवनिनोहवामहे । इन्द्रं धनस्य सातये । इन्द्रं धनस्य सा-
१ २ २ १ २ २ १ २ २ १ २ १ २ २२ १

तये । इन्द्रं धनस्य सातये । इन्द्रो मन्हा रोदसीपप्रथच्छवः ॥२॥
१ २ १२ २ २ १ २ २ १ २२ १ २२ १२ २ १ २

इन्द्रः सूर्यमरोचयत् । ३ । इन्द्रे ह विश्वा भुवनानि येमिरे । इन्द्रे
२ २ २ १ २ १२ २ १२ २ २

स्वानास इन्दवः ॥५॥ आयन्त इव सूर्यम् । विश्वेदिन्द्रस्य भक्षत ।
२ १ २ २ १ २ २ १ २ १ २ १ २ २ १

वसूनि जातो जनिमान्योजसा । प्रतिभागन्न दीधिमः । ३ । अळ-
२२ १ २२ १ २ २ १२ २ २ १ १२ २ २ १

र्षिरातिं वसुदामुपस्तुहि । भद्रा इन्द्रस्य रातयः ।३। यो अस्य कामं
२ २ १२ २ १ २२ १२ २ २ २ २ २ ३ १ १ १ १

विधतो नरोषति । मनोदानाय चोदयन् । ई २३४५ ॥ ६ ॥
१ २ १ २ २

मातुले आगते मोषु इति पूर्वी पठेत् ॥ मोषू । त्वावाधता
३ ५ २२ १२ २ १ २२ २ १५ २

३१ उवा २३ । चा २३४ ना । आरे अस्मन्निरीरमन्नाम्रचा
२ २ १ २ २ १ २ ३ १ १ १ १ २ १ २ ^ ३ २

द्रा सधमादन्न आगही २३४५ । इहा वा १ सा २ नू । उपा
१ ४ १ १ १ १ १ १ २

३ । हुं २३ बा ३ । श्रूधा २३४५ यि ॥ १ ॥ आयि हा ।
२ २ ५ २१ २२ १ २ २

वासन्नुपा ३१ उवा २३ । श्रू २३४ धी । इह वासन्नुप श्रुधी-
२ १२ २ १ २ १ २ ३ १ १ १ १ २ १ २ ^ ३

मेहिते ब्रह्मकृतः सुतेसचा २३४५ । मघोना १ मा २ । क्ष
२ १ ४ १ १ १ १ १ १ २

आ ३ । हुं २३ बा ३ । साता २३४५ यि ॥ २ ॥ माघौ ।
१ २ ५ १ २२ १ २ १२ २

नामक्ष आ ३१ उवा २३ । सा २३४ ते । मघौ ना मक्ष आसत
१२ २२ २ १२ २ २ ३ १ १ १ १ २ १ २ ^

इन्द्रेकामञ्जरितारोवसूय वा २३४५ः । रथायिना १ पा २ ।
३ २ १ ४ १ १ १ १ १

दमा ३ । हुं २३ बा ३ । दाधू २३४५ः ॥ ३ ॥

अस्ताहाउ । वायिमन्मपू ३ आउवा २३ । री २३४
याम् । ब्रह्मेन्द्राय वोचत पूर्वीऋतस्य बृहतीरनूषता २३४५ ॥१॥
स्तोतुर्हाउ । मायिधा असा ३१ उ वा २३ । क्षा २३४ ता । स्तोतु
र्मेधा असृक्षत समिन्द्रो रायो बृहतीरधूनुता २३४५ ॥ २ ॥
सक्रोहाउ । णाइसमुद्र ३ आउवा २३ । री २३४ याम् । सक्रो-
णी समुद्रियꣳ सꣳ शुक्रासः शुचयः सङ्गवाशिरा २३४५ः ।
सोमाहाउ । आइन्द्रममा ३१ उवा २३ । दी २३४ षूः ॥ ३ ॥
अच्छा नः शीरशो १ चाइषाम् । गिरो २ यन्तू २ । दा २ र्शा-
ताम् । आच्छायज्ञ । सोनमसा । पुरूवा १ सू २ मू । पुरुप्रश-
स्तमूतये । पू २३ रू । प्रशास्ता ३ मू । हुं । तया ३ । ओ २३४
वा ॥ १ ॥ पुरुप्रशस्तमू १ तायायि । पुरू २ प्रशा २ । स्तमू २
ताया ई । आग्निꣳ सूनुꣳ सहसोजा । तवाइदा १ सा २ मू ।
दानाय वारियाणाम् । दा २३ ना । यावा ३ री । हुं । याणा ३
म् । ओ २३४ वा ॥ २ ॥ दानायवारी १ याणाम् । दाना २
यवा २ । री २ याणाम् । द्वाइतायोभूदमृतोम । तियाइषू १
वा २ । होता मन्द्रतमो विशि । हो २३ ता । मन्द्राता ३ सा : ।
हुं । विशा ३ । ओ २३४ वा । हे २३४५ ॥ ३ ॥ प्रतिष्ठासि-
प्रति । ष्ठा । ३ । वर्च्चोसि मनोसि ऐही । मन्ये वान्द्यावापृथिवी-

उदपात्रस्थापिताज्येन तां वधूं स्थानान्तरे नीत्वा, केशादिनखपर्यन्तेषु सर्वाङ्गेष्वभ्यज्य, यवाद्युद्वर्त्तनैरुद्धृत्य त्रिर्घटोदकैराप्लावयेत् ॥

इति चतुर्थीकर्म ॥

इति विवाहादिचतुर्थीकर्मान्तकर्मणां प्रयोगः ॥

## अथ गर्भाधानप्रयोगः ॥

तत्र विवाहात्त्रिरात्रानन्तरं पत्न्याः पुरुषोपभोगेच्छायां भर्त्रा संयोगः कर्त्तव्य इति याज्ञवल्क्यपारस्करादिस्मृतिकाराः । आचार्यास्तु ऋतुमतीमुपरतशोणितां गम्यामाहुः । तत्र रजोदर्शनात्षोडशाहोरात्राणि ऋतुस्तन्मध्ये आद्यं रात्रिचतुष्कं, पर्वादिनिषिद्धादिनानि वर्जयित्वा, मघामूलादिव्यतिरिक्ते पूर्वोक्ततिथ्यादियुते शुभकाले दम्पत्योश्चन्द्रानुकूले गर्भाधानं कार्यम् ।

---

२ २ २ २ २ २ २ २ २ २ २ २

सुभोजसावेही । ये अप्रथेथाममितमभियोजनावेंही । द्यावा पृथि-
१ २ २ २ २ २ २ २ २ २ २ १ २

वी भवताऽस्योनाऐही । तेनो मुञ्चतमꣳहसाऐही । प्रतिष्ठासिप्रति ।
१ २ २ २ २ २ २ २२ २१

ष्ठा । ३ । वर्चोसि मनोसि ऐही ३ । हाउवा । ए । भूतम् ॥ १ ॥
२ २ १ २ १ २ २ २ २ २ १

हरित इन्द्रश्मश्रूणी । उतो तेहरिता २ उहा ३ री । तन्त्वास्तुवं
२ ४ ५ १ २ २ २ ४ ५ १ २ २

तिका २ । वा याः । परुषासोवना ३ । गावा : । ऋष्यास
१ २ १ २ १ २ १ २१ २२ १ २

इन्द्रमुडिति मघवन्निन्द्र मुडिति मुडिति प्रमुडितिन्द्रस्त स रपूता
१ १ २ १

२३४५: ॥ २ ॥ वाक् मनः प्राणः प्राणोपानो व्यानश्चक्षुः श्रोत्रꣳ शर्म्म वर्म्म भूतिः प्रतिष्ठा ॥ एता एव समहाव्रताः सर्वा वा एता विराजो दशिनी प्रथमा विꣳशिनी द्वितीया त्रिꣳशिनी तृतीयैषा वै परमा विराड्यच्चत्वारिꣳशद्रात्रयः पङ्क्तिर्वै परमा विराट् परमायामेव विराजि प्रतितिष्ठन्ति ॥

तत्र कर्त्ता मातरभ्यङ्गस्नानादि कृत्वा, पत्नीमपि नवोदकुम्भस्य जलेन सप्तमृत्तिकया पञ्चपल्लव-पञ्चत्वक्सहितैर्यथाचारं स्नापयित्वा, मङ्गलवस्त्रादि धृत्वाऽऽचम्य स्वस्तिवाचनमाभ्युदयिकं मातृपूजापूर्वकं कार्यम् । तत्र "गर्भाधानाङ्गनान्दीश्राद्धमहं करिष्ये" इति प्रयोगः । ततः कृतावसथ्यश्चेत्स्मार्त्तमथवा लौकिकं कृतलक्षणे स्थण्डिले मारुतनामानमग्निं संस्थाप्य, देशकालौ सङ्कीर्त्य "अस्याः मम भार्यायाः प्रतिगर्भसंस्कारातिशयद्वारा अस्यां जनिष्यमाण-सर्वगर्भाणां बीजगर्भसमुद्भवैनोनिबर्हणाय गर्भाधानाख्यं कर्माहं करिष्ये" इति सङ्कल्प्याज्यतन्त्रेणासादनादि कार्यम् । ब्रह्माणमुपवेश्य, पात्राणि सम्प्रोक्ष्याग्निं परिस्तीर्याज्यसंस्करणादि स्रुवसम्मार्गान्तं कृत्वा, व्याहृतित्रयं पुनश्चतुष्टयं पुनस्त्रयं च हुत्वा, समिदनुपर्युक्षणादि यज्ञवास्त्वन्तं कृत्वा, ब्राह्मणेभ्यो दक्षिणां दत्वा, तेभ्यः स्वस्त्ययनपूर्वकमाशिषो गृहीत्वा, ब्राह्मणान्भोजयित्वा, स्वयं भुञ्जीत । ततः सायङ्कालीननित्यकर्म कृत्वोभौ शुक्लाम्बरानुलेपनमाल्याभरणादिभिरलङ्कृतौ स्वलङ्कृत-सुधूपित-गन्धमाल्यामलदीपयुक्तं गृहं प्रविशेयाताम् । ततो निशायामाद्यप्रहरेऽतीते उदगग्रासनोपरि प्राङ्मुखोपविष्टायाः पत्न्या उपस्थं दक्षिणहस्तेनाभिमृशेन्मन्त्रद्वयेन । विष्णुर्योनिमिति प्रजापतिरनुष्टुप् विष्ण्वादयः, गर्भं धेहीति प्रजापतिरनुष्टुप् सिनीवाली सरस्वत्यश्विनौ, गर्भाधानकर्मण्युपस्थाभिमर्शने विनियोगः ।

ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ १ ॥
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ २ ॥

ततोऽनन्तरं रुचिरशय्यायां पत्नीसंयोगं कुर्यात् । ततो सुखोदकेन स्नायात् । अथवा पूर्वं व्याहृतित्रयहोमान्तं कृत्वा

गर्भाधानं विधाय, ऋतुदानानिमित्तस्नानान्ते उत्तरतन्त्रसमाप्तिरिति । इति गर्भाधानप्रयोगः ॥

## अथ पुंसवनप्रयोगः ॥

तृतीयस्य गर्भमासस्य प्रथमतृतीयभागे शुभदिवसे सूर्योदयसमीपे एव उत्तराग्रेषु दर्भेषु उपविश्य, गर्भवती सशिरस्कं त्रिर्घटोदकैः स्नात्वा, शुभवस्त्रादि धारयेत् । पतिस्तु स्नानादिकं विधाय, मातृपूजापूर्वकं तदङ्गनान्दीश्राद्धं कुर्यात् । तत्र "पुंसवनकर्माङ्गनान्दीश्राद्धमहं करिष्ये" इति सङ्कल्पः । ततः कृतलक्षणे स्थण्डिले स्मार्तं लौकिकाग्निं वा चान्द्रमसनामानमग्निं प्रतिष्ठाप्य, देशकालौ स्मृत्वा "मम भार्यायामुत्पत्स्यमानगर्भाणां बैजिकगार्भिक-दोषपरिहाराय पुंसवनकर्माहं करिष्ये" इति सङ्कल्प्य, आज्यतन्त्रेणासादनादि विरूपाक्षान्तं कृत्वाऽग्नेः पश्चिमतः स्वदक्षिणभागे आसनोपरिआस्तीर्णेषु उत्तराग्रेषु दर्भेषु प्राङ्मुखीं पत्नीमुपवेश्य, व्याहृतित्रयं जुहुयात् ।

ततो वध्वाः पश्चिमतः प्राङ्मुखोऽवस्थाय, दक्षिणहस्तेन पत्न्या दक्षिणस्कन्धं तूष्णीमभिमृश्य, वस्त्रादिभिरव्यवहितां नाभिमभिमृशेन्मन्त्रेण । पुमांसावित्यस्य प्रजापतिरनुष्टुप् मित्रावरुणादयः नाभ्यभिमर्शने विनियोगः ।

ॐ पुमा ँ्सौ मित्रावरुणौ पुमा ँ्सावश्विनावुभौ ।
पुमानग्निश्च वायुश्च पुमान् गर्भस्तवोदरे ॥ १ ॥

ततो व्याहृतिहोमादितन्त्रं समाप्य दश ब्राह्मणान्भोजयेत् । पूर्णपात्रं दक्षिणा ।

इति पुंसवनप्रयोगः ॥

## अथ शुङ्गाख्यमपरं पुंसवनम् ॥

अथ पुंसवनानन्तरं शुभदिने उक्तनक्षत्रयुतेऽहनि एकविंशति यवान्माषान्वा हस्ते आदाय । प्रजापतिर्यजुः शुङ्गा देवता न्यग्रोध-

शुङ्गापरिक्रयणे विनियोगः ।

ॐ यद्यसि सौमी सोमाय त्वा राज्ञे परिक्रीणामि ॥ १ ॥
यद्यसि वारुणी वरुणाय त्वा राज्ञे परिक्रीणामि ॥ २ ॥
यद्यसि वसुभ्यो वसुभ्यस्त्वा परिक्रीणामि ॥ ३ ॥
यद्यसि रुद्रेभ्यो रुद्रेभ्यस्त्वा परिक्रीणामि ॥ ४ ॥
यद्यस्यादित्येभ्य आदित्येभ्यस्त्वा परिक्रीणामि ॥ ५ ॥
यद्यसि मरुद्भ्यो मरुद्भ्यस्त्वा परिक्रीणामि ॥ ६ ॥
यद्यसि विश्वेभ्यो देवेभ्यो विश्वेभ्यस्त्वा देवेभ्यः परिक्रीणामि ॥७॥

इति पठित्वा हस्ते गृहीतान्यवान्माषान्वा वटमूले निधाय ऐशान्यां दिशि या वटशाखा तदग्रपल्लवमूलं शुङ्गाख्यमुभयतः फलमम्लानं कीटाद्यदूषितं मन्त्रेणोत्थापयेत् । प्रजापतिर्यजुरोषधयः शुङ्गोत्थापने विनियोगः ।

"ॐ ओषधयः सुमनसो भूत्वाऽस्यां वीर्यꣳ समाधत्तेयं कर्म करिष्यै" इति मन्त्रेणाच्छिद्यादाय, यज्ञियतृणैर्वेष्टयित्वा, समानीय स्थूणादावाकाशे धारयेत् ।

गर्भवती तु सूर्योदयसमीपे एवोदगग्रेषु दर्भेषु उपविश्य, त्रिघटोदकेन सशिरस्का स्नायात् । ततो भर्त्ता स्नानादिनित्यक्रियां विधाय, मातृपूजापूर्वकमाभ्युदयिकं पुंसवनाङ्गभूतं विधाय, कृतलक्षणे कुण्डे स्थण्डिले वाऽग्निं स्मार्त्तं लौकिकं वा शोभननामानं संस्थाप्य, देशकालौ सङ्कीर्त्य, पूर्वं पुंसवनवत् सङ्कल्पं विधायाऽयतन्त्रेणासादनादि स्रुवसम्मार्गान्तं विधाय, व्याहृतित्रयं हुत्वा, शिलालोढकौ सुप्रक्षाल्याग्नेरुत्तरतो धृत्वा, ब्रह्मचारि–पतिव्रताऽमूर्खब्राह्मणकन्यानामन्यतमः प्रत्याहरणवर्जितां शुङ्गां सुश्लक्ष्णां पेषयेत् । ततोऽग्नेः पश्चादुत्तराग्रेषु दर्भेषु पूर्वशिरस्कामुत्तानां गर्भवतीं संवेश्य, तस्या उत्तरतोऽग्नेः पश्चात्प्राङ्मुख उपविश्य, दक्षिणहस्ताङ्गुष्ठानामिकाभ्यां शुङ्गां गृहीत्वा, पुमानग्निरिति प्रजा-

पतिरनुष्टुबग्न्यादयः शुङ्गारसावनयने विनियोगः ।

ॐ पुमानग्निः पुमानिन्द्रः पुमान्देवो बृहस्पतिः ।
पुमाꣳसं पुत्रं विन्दस्व तं पुमाननुजायताम् ॥

इति मन्त्रेण पत्न्या नासिकादक्षिणस्रोतसि गालयेत् । ततः पत्नीमुत्थाप्य व्याहृतिहोमादितन्त्रं समाप्य, दश ब्राह्मणान्भोजयेत् । ब्रह्मणे पूर्णपात्रम् ।

इति शुङ्गाकर्माख्यपुंसवनप्रयोगः ।

## अथ सीमन्तकर्म ।

तच्च प्रथम एव गर्भे चतुर्थे षष्ठेऽष्टमे वा मासि यत्रोत्तरायणग्रहाद्यनुकूलतालाभस्तत्र सूर्योदय एवोत्तराग्रेषु दर्भेषु उपविश्य, गर्भवतीं त्रिर्घटोदकैः स्नापयेत् । भर्ता स्नानादिनित्यक्रियां विधाय मातृपूजापूर्वकं "सीमन्तोन्नयनाङ्गं नान्दीश्राद्धमहं करिष्ये" इति सङ्कल्पपूर्वकं नान्दीश्राद्धं विधाय, बहिःशालायां कृतलक्षणे स्थण्डिले स्मार्त्तं लौकिकं वा मङ्गलनामानमग्निं प्रतिष्ठाप्य, देशकालौ सङ्कीर्त्य "मम पत्न्याः प्रतिगर्भं बीजगर्भसमुद्भवैनोनिबर्हणाय स्त्रीसंस्काररूपं सीमन्तोन्नयनाख्यं कर्माहं करिष्ये" इति सङ्कल्पं कुर्यात् । तत्र आज्यतन्त्रेणाऽऽसादनं, तत्र विशेषः । फलत्रययुतमौदुम्बरं नीलस्तवकं सूत्रनवतन्तुग्रथितं मालारूपम् , प्रादेशमात्राः कुशमञ्जर्यस्तदलाभे पवित्ररूपास्तिस्रः पिञ्जूलयः, शरः, सूत्रकर्त्तनसाधनं लोहशलाकामयं, त्रिषु स्थानेषु श्वेता सेधाशलाका, एतान्यग्नेरुत्तरतः प्राक्संस्थान्यासादयेत् ।

अथ ब्रह्माणमुपवेश्य द्विःक्षालितं तिलतण्डुलमिश्रं निर्वापहितं कृसरं श्रपयित्वाऽग्नेरुत्तरतः स्थापयेत् । ततो मङ्गलस्नातां परिहितप्रावृताऽहतवासोयुगलामलङ्कृतापत्नीं पश्चात्स्वदक्षिणत उत्तराग्रेषु दर्भेषु उपवेश्य, व्याहृतिहोमान्तं कृत्वा, पत्न्याः पश्चाद्-

वस्थाय मन्त्रेण औदुम्बरस्तबकस्रजं स्वयं कण्ठे बध्नीयात् । अयमूर्जेति प्रजापतिरनुष्टुप् उदुम्बरः हरितयुग्मौदुम्बरावलम्बने विनियोगः ।

ॐ अयमूर्जावतो वृक्ष ऊर्जीव फलिनी भव ।

पर्णं वनस्पते नुत्वा नुत्वा सूयता ँ रयिः ॥

ततस्तत्रस्थ एव पिञ्जूलीत्रयमादाय, तन्मूलेन नासिकाग्रतः शिरोन्तं सीमन्तमूर्द्ध्वमुन्नयेन्मन्त्रैः । भूरादीनां विश्वामित्र-जमदग्नि-भारद्वाजा गायत्र्युष्णिगनुष्टुभः अग्निवायुसूर्याः सीमन्तोन्नयने विनियोगः । पिञ्जूलीत्रयस्य मूलेन-

"ॐ भूः उन्नयामि" इति प्रथमम् ।

"ॐ भुवः उन्नयामीति" द्वितीयम् ।

"ॐ स्वः उन्नयामीति" तृतीयम् ।

एवं वारत्रयं पिञ्जूलीत्रयेण सीमन्तोन्नयनं कृत्वा, शरमादाय तेन सीमन्तमुन्नयेन्मन्त्रेण । येनादितेरिति प्रजापतिस्त्रिष्टुप् प्रजापतिः सीमन्तोन्नयने विनियोगः ।

ॐ येनादितेः सीमानं नयति प्रजापतिर्महते सौभगाय ।

तेनाहमस्यै सीमानं नयामि प्रजामस्यै जरदष्टिं कृणोमि ॥

ततः सूत्रकर्त्तनसाधनमादाय सीमन्तमुन्नयेत् । राकामहमिति प्रजापतिर्जगती राका देवता, विनियोगः पूर्ववत्सर्वत्र ।

ॐ राकामह ँ सुहवा ँ सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्या च्छिद्यमानया ददातु वीर ँ शतदायुमुक्थ्यम् ॥

ततस्त्रिःस्थानश्वेतां सेधाशलाकां समादाय सीमन्तमुन्नयेत् । यास्ते राक इति प्रजापतिर्जगती राका, विनियोगः प्राग्वत् ।

ॐ यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।

ताभिर्नो अद्य सुमना उपागहि सहस्रपोष ँ सुभगे रराणाः ॥

ततः कृसरचरौ प्रतिबिम्बदर्शनक्षमं घृतं प्रक्षिप्य पतिः

पत्नीं दर्शयेत् । ततः कृसरचरौ प्रतिबिम्बं पश्यन्तीं पत्नीं "किं पश्यासि" इति पृष्ट्वा प्रजां पशूनित्यादि वाचयेत् । किं पश्यसीति प्रजापतिर्यजुः कृसरः वाचने विनियोगः ।

किं पश्यसि प्रजां पशून्सौभाग्यं मह्यं दीर्घायुष्ट्वं पत्युः ॥

इति वाचयित्वा, ततस्तं चरुं सर्वमेव मेक्षणेनोद्धृत्य पात्रान्तरे कृत्वा, गर्भवती भुञ्जीत । ततस्तां भुञ्जानां ब्राह्मण्यो "वीरसूस्त्वं भव" "जीवसूस्त्वं भव" "जीवपत्नी भवे"त्येवं मङ्गलवचनरूपेण यजुषा गायेरन् । पतिस्तु व्याहृतिहोमादि तन्त्रं समाप्य, ब्रह्मणे पूर्णपात्रं दक्षिणां दत्वा दश ब्राह्मणान्भोजयेत् ।

इति सीमन्तकरणप्रयोगः ॥

## अथ सोष्यन्तीहोमप्रयोगः ॥

स्वस्थानात् प्रच्युते योनिद्वारं प्राप्ते गर्भे पतिः स्नानादि विधाय, स्मार्त्तं लौकिकं वाऽग्निं संस्थाप्य, क्षिप्रहोमविधिना होमं कुर्यात् । देशकालौ सङ्कीर्त्य "मम भार्यायाः सुखप्रसवार्थं होममहं करिष्ये" इति सङ्कल्प्याग्निं यथाविधिना परिस्तीर्याज्यं संस्कृत्य, व्याहृतिहोमं कुर्यात् । ततो या तिरश्चीत्यस्य प्रजापतिरनुष्टुप्संराधनी, विपश्चिदिति प्रजापतिरनुष्टुप् धाता सुखप्रसवार्थहोमे विनियोगः ।

ॐ या तिरश्ची निपद्यते अहं विधरणी इति ।

तां त्वा घृतस्य धारया यजे सꣳराधनीमहम् । सꣳराधन्यै देव्यै देष्ट्र्यै स्वाहा । इदं संराधन्यै न मम ।

ॐ विपश्चित्पुच्छमभरत्तद्धाता पुनराहरत् ।

परेहि त्वं विपश्चित्पुमानयं जनिष्यते देवदत्त नाम स्वाहा । इति जुहुयात् । इदं धात्रे न मम । ततः समिदाधानानुपर्युक्षण-प्रदक्षिणाचमसनिनयन-पुनःपूरणवामदेव्यगानादिभिर्होमं समापयेत् ।

इति सोष्यन्तीहोमप्रयोगः ॥

## अथ जातकर्मप्रयोगः ॥

पिता पुत्रस्य जन्म श्रुत्वा "यावज्जातकर्म क्रियते तावन्नाभिनालच्छेदनं स्तनदानं च मा कुरुत" इत्युक्त्वा, दिवाहृताभिः शीताभिरद्भिः सुवर्णयुताभिर्गृहे सचैलं स्नात्वाचम्य पुत्रजन्मनिमित्तमामश्राद्धेन हेमेन वा पितॄन्सन्तर्प्य, ब्राह्मणैः सह पुण्याहं वाचयित्वा, अकृतस्तनपानं प्रक्षालितमलं कुमारं उत्सङ्गे प्राङ्मुखमवस्थाप्य, देशकालौ सङ्कीर्त्य "अस्य कुमारस्य गर्भाम्बुपानजनितसकलदोषनिबर्हणायुर्मेधाभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणाय जातकर्माहं करिष्ये" इति सङ्कल्प्य, शुक्लाकृष्णव्रीहियवौ जलेन पेषयित्वा, पात्रे कृत्वा, दक्षिणाङ्गुष्ठानामिकाभ्यां आदाय, कुमारस्य जिह्वायां निदधाति मन्त्रेण । इयमाज्ञेति प्रजापतिर्यजुरन्नं कुमारस्य जिह्वायां मार्जने विनियोगः ॥

ॐ इयमाज्ञेदमन्नमिदमायुरिदममृतम् ।

ततः प्रागल्भनामानमग्निं कुमारस्य मुखे विचिन्त्य, दक्षिणाङ्गुष्ठानामिकाभ्यां हिरण्येन घृतमादाय, पृथक् मन्त्राभ्यां कुमारस्य मुखे जुहुयात् । मेधान्तेति प्रजापतिरनुष्टुप् मित्रावरुणौ, सदसस्पतिरिति मेधातिथिर्गायत्री सदसस्पतिः सर्पिःप्राशने विनियोगः ।

ॐ मेधां ते मित्रावरुणौ मेधामग्निर्दधातु ते ।
मेधां ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ १ ॥
ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।
सनिं मेधामयासिषम् ॥ २ ॥

अथ ब्राह्मणेभ्यो गोभूतिलहिरण्यादिकं यथाशक्ति दद्यात् । जन्मकालीयदुष्टस्थानस्थितग्रहस्य पीडानिवृत्तये तत्प्रीत्यै दानं देयम् । ततो "नाभिनालं कृन्तत, स्तनं च प्रतिदत्तेति" वदेत् । कुमारी चेज्जातकर्म अमन्त्रकं कार्यम् । इति जातकर्म ॥

## अथ षष्ठिकापूजाप्रयोगः ॥

जन्मदिवसात्षष्ठे दिवसे पूर्वरात्रे शिशुपित्रादिः कर्ता सुस्नातः शुक्लद्विवासा पादौ प्रक्षाल्य, कुशहस्त आचान्तः पूजामारभेत् । तत्र क्रमः—सूतिकागृहस्य बहिर्द्वारसमीपे उपविश्य, देशकालौ सङ्कीर्त्य "अमुष्य बालस्य रक्षाकामो रक्षिकानां पूजामहं करिष्ये" इति सङ्कल्प्य, "रक्षिकाभ्यो नम" इति पाद्यादिभिः सम्पूज्य, "अनया मत्कृतपूजया रक्षिकाः प्रीयन्तामिति" निवेद्य, एवमेव द्वारमातॄः पूजयेत् ।

जयन्ती मङ्गलाख्या च सुभगा चैव पिङ्गला ।
भद्रकालीति पूज्यन्ते पञ्चैता द्वारमातरः ॥

पूर्ववत्पूजां निवेद्यान्तः समुपविश्य, स्वस्त्ययनानि पठित्वा, देशकालौ सङ्कीर्त्य, "मम कुमारस्य दीर्घायुष्ट्वारोग्यसर्वोपद्रवशान्तिसर्वाभ्युदयकामो गणपतिपूजापूर्वकं महाषष्ठिपूजामहं करिष्ये" इति सङ्कल्प्य, पाद्याद्युपचारैर्गणपतिं सम्पूज्य प्रार्थयेत् ।

सर्वविघ्नहरो देव एकदन्तो गजाननः ।
भक्त्या सम्पूजितः प्रीत्या शिशुं दीर्घायुषं कुरु ॥

ततः षट् कृत्तिकाः पूजयेत् । ताश्च शिवाः ।१। सम्भूतिः ।२। प्रीतिः । ३ । सन्नतिः । ४ । अनसूया । ५ । क्षमा । ६ । एताश्चतुर्थ्यन्तनमोऽन्तमन्त्रैः सम्पूज्य प्रार्थयेत् ।

मातरः सर्वभूतानां सर्वकल्याणहेतवः ।
पूजिता भक्तितः सर्वा मम रक्षन्तु बालकम् ॥

ततः "कार्तिकेयाय नम" इति पाद्यादिभिः सम्पूज्य प्रार्थयेत् ।

कार्तिकेय महाबाहो गौरीहृदयनन्दन ।
कुमारं रक्ष मे प्रीतः कार्त्तिकेय नमोऽस्तु ते ॥

ततो "विष्णवे नम" इति पाद्यादिभिः सम्पूज्य प्रार्थयेत् ।

त्रैलोक्यपूजित श्रीमन्सदा विजयवर्द्धन ।
शान्तिं कुरु गदापाणे नारायण नमोऽस्तु ते ॥

ततः—

इयं येन धृता क्षोणी हतश्च महिषासुरः ।
तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः ॥ इति खड्गम् ।
पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानां च मङ्गलम् ।
विष्णुना विधृतोऽसि त्वमतः शान्तिं प्रयच्छ मे ॥ इति शङ्खम् ।
मन्थान मन्दरोऽसि त्वं मथितः सागरस्त्वया ।
अतो ममास्य बालस्य मथ विघ्नं नमोऽस्तु ते ॥
इति मन्थानम् ॥
वंशं वर्द्धय मे वंश गोविन्दस्य सदा प्रिय ।
रक्षां मे कुरु बालस्य वंशराज नमोऽस्तु ते ॥ इति वंशम् ।

ततो महाषष्ठिं पूजयेत् । प्रणवेन प्राणायामं विधाय, षाँ षीं षूमित्यादिना षडङ्गं विधाय, प्रसन्नवदनां चतुर्भुजां पीतवस्त्रावृतां दक्षिणे धृतमन्थानां वामे नीलोत्पलधरां सर्वालङ्कारभूषितां ध्यात्वा, अष्टदले प्रतिमादौ वा आवाहयेत् ।

आयाहि वरदे देवि महाषष्ठीति विश्रुता ।
शक्तिरूपेण मे बालं रक्ष जागर वासरे ॥

एवमावाह्य प्रतिष्ठां कृत्वा, "इदं पाद्यं महाषष्ठ्यै नमः" एवं पाद्याद्युपचारैरभ्यर्च्य, पुष्पाण्यादाय—

जय देवि जगन्मातर्जगदानन्दकारिणि ।
प्रसीद मम कल्याणि महाषष्ठि नमोऽस्तुते ॥

इति त्रिः सम्पूज्य, अक्षतधूपदीपनैवेद्यैर्बहुविधैरभ्यर्च्य प्रणमेत् ।

देवतानामृषीणां च मनुष्याणां च वत्सले ।
अमुं मम शिशुं रक्ष महाषष्ठि नमोऽस्तु ते ॥

ततो बालकसमर्पणम् ।

गौर्याः पुत्रो यथा स्कन्दः शिशुः संरक्षितस्त्वया ।
तथा ममाप्ययं बालो रक्षतां षष्ठिके सदा ॥ १ ॥
षष्ठि देवि नमस्तुभ्यं सूतिकागृहवासिनि ।
पूजितासि मया भक्त्या सबालां रक्ष सूतिकाम् ॥
त्वमेव वैष्णवी देवि ब्रह्माणी च व्यवस्थिता ।
रुद्रशक्तिः समाख्याता महाषष्ठि नमोस्तु ते ॥
त्वत्प्रसादादविघ्नेन चिरञ्जीवतु मे सुतः ॥

ततो गव्यघृत-सर्षप-सैन्धव-निम्बपत्रैः सूतिकासद्म धूपयेत् । ततो "क्षेत्रपालाय नमः" । "नानारूपधरेभ्यो गन्धर्वेभ्यो नमः ।" "आदित्यादिग्रहेभ्यो नमः"। "इन्द्रादिदिक्पालेभ्यो नमः ।" एतान्सम्पूज्य बलीन्दद्यात् । ततश्चामुण्डां सम्पूज्य, बलिं दत्वा, ततः सूतिकागृहसमीपे बलिं सोपस्करं दद्यात् । "बलिद्रव्याय नमः" दर्भपुष्पैः सम्पूज्य, जलं गृहीत्वा तत्र मन्त्रः ।

क्षेत्रस्थाधिपते देवि सर्वारिष्टविनाशिनि ।
बलिं गृहाण मे रक्ष क्षेत्रं सन्तानबालकम् ॥

इति मन्त्रेण बलिं मुक्त्वा दक्षिणादिभिर्विप्रान्सन्तोष्य, शस्त्रपाणिपुरुषान् गृहरक्षायै नियोज्य, स्त्रियश्च गीतनृत्यादि कुर्युः ॥

इति षष्ठिकापूजाप्रयोगः ॥

## अथ चन्द्रदर्शनप्रयोगः ।

जन्ममासात्तृतीये मासि शुक्लतृतीयायां प्रातः सशिरस्कं कुमारं स्नापयित्वा, स्नानादिकं विधाय, मातृपूजापूर्वकं चन्द्रदर्शनकर्माङ्गं नान्दीश्राद्धं विधाय, अस्तमिते सवितरि विगतसन्ध्यारागे कृताञ्जलिः प्रत्यङ्मुखश्चन्द्रमुपतिष्ठते । आचम्य प्राणमायम्य, देशकालौ सङ्कीर्त्य "मम शिशोरायुर्वृद्धिबीजगर्भसमुद्भवैनोनिबर्हणाय चन्द्रदर्शनाख्यं कर्माहं करिष्ये" इति सङ्कल्पं कुर्यात् ।

ततो माता शुचिना वसनेन मुखवर्जं कुमारमाच्छाद्य कुमारस्य पितुर्दक्षिणस्यां दिशि गत्वोदक्शिरसमुत्तानं पित्रे प्रदाय, पृष्ठतः पतिं परिक्रम्योत्तरतः प्रत्यङ्मुख्युपतिष्ठते। ततः पिता यत्ते सुसीमेति प्रजापतिरनुष्टुप् चन्द्रः, यत्पृथिव्येति प्रजापतिरनुष्टुप् लिङ्गोक्ताः, इन्द्राग्नीति प्रजापतिरनुष्टुप् इन्द्राग्नी देवता, कुमारस्य चन्द्रदर्शने विनियोगः।

ॐ यत्ते सुसीमे हृदयꣳहितमन्तः प्रजापतौ।
वेदाहं मन्ये तद्ब्रह्म माहं पौत्रमघꣳरिषम् ॥ १ ॥
ॐ यत्पृथिव्या अनामृतं दिवि चन्द्रमसि श्रितम्।
वेदामृतस्याहं नाम माहं पौत्रमघꣳरिषम् ॥ २ ॥
इन्द्राग्नी शर्म यच्छतं प्रजायै मे प्रजापती।
यथायं न प्रमीयेत पुत्रो जनित्र्या अधि ॥ ३ ॥

ततः कुमारमुदक्समुत्तानं मात्रे दत्त्वोपविश्य वामदेव्यं गायेत्।

तत ऊर्ध्वं ये द्वादश शुक्लपक्षास्तेषु प्रतिपदि द्वितीयायां वा प्रथमोदित एव चन्द्रमसि कुमारतज्जनीनिरपेक्षः पिता शुचौ देशे जलेनाञ्जलिं पूरयित्वाऽभिमुखश्चन्द्रमसमुपतिष्ठेत्। यददश्चन्द्रमसीति प्रजापतिरनुष्टुप् चन्द्रः चन्द्रोपस्थाने विनियोगः।

ॐ यददश्चन्द्रमसि कृष्णं पृथिव्या हृदयꣳश्रितम्।
तदहं विद्वाꣳस्तत्पश्यन्माहं पौत्रमघꣳरुदम् ॥

इति मन्त्रेण जलाञ्जलिमुत्सृज्यापरमञ्जलिद्वयं चन्द्रमसं प्रति तूष्णीमुत्सृज्योपविश्य वामदेव्यं गायेत्। एतद्यदि प्रतिमासं कर्तुं न शक्नोति तदैकस्यामेव प्रतिपदि द्वितीयायां वा पूर्ववदञ्जलिप्रक्षेपं द्वादशवारं कृत्वा, वामदेव्यगानं कुर्यादिति समाचारः। अतिक्रान्तकालेऽपि प्रायश्चित्तहोमपूर्वकमेव।

इति चन्द्रदर्शनप्रयोगः ॥

## अथ नामकरणप्रयोगः ।

तत्र जन्मदिवसादेकादशे द्वादशे वा एकोत्तरशते वा द्वितीयवर्षारम्भकेऽन्हि वा, पूर्वदिवसेषु कर्त्रसान्निध्यविष्ट्यादिदोषसम्भवे उत्तरेषु नाम कुर्यात् । तत्र पिता स्नानादिकं विधाय, मातृपूजापूर्वकं वृद्धिश्राद्धं कुर्यात् । "मम सुतस्य नामकरणकर्माङ्गं नान्दीश्राद्धमहं करिष्ये" इति सङ्कल्प्य, वृद्धिश्राद्धं विधाय, कृतलक्षणे स्थण्डिले लौकिकं पार्थिवनामानमग्निं प्रतिष्ठापयामीत्यग्निं प्रतिष्ठाप्य, अग्नेः पश्चादुदगग्रासनोपरि उदगग्रांस्त्रीन्कुशानास्तीर्य, प्राङ्मुख उपविशेत् ।

ततो देशकालौ स्मृत्वा "अस्य शिशोर्बीजगर्भसमुद्भवैनोनिबर्हणायुरभिवृद्धिव्यवहारासिद्धये नामकरणं करिष्ये" इति सङ्कल्प्याज्यतन्त्रेणाऽऽसादनादिवैरूपाक्षान्ते कृते माता शुचिना वसनेन मुखवर्जं कुमारमाच्छाद्य, कुमारपितुर्दक्षिणतो गत्वा, उदक्शिरसमुत्तानं पित्रे प्रदाय, अनुपृष्ठं परिक्रम्योत्तरतो गत्वोत्तराग्रेषु दर्भेषु प्राङ्मुख्युपविशेत् । ततस्तथोपविष्टायै मात्रे कुमारं दत्वा, स्रुवेण व्याहृतित्रयं हुत्वा, मनसा प्राजापत्यामाहुतिं हुत्वा, कुमारजन्मतिथये प्रतिपदे स्वाहेत्यादि हुत्वा, तिथिदेवतायै जुहुयात् । ततः कुमारजन्मनक्षत्राय नक्षत्रदेवतायै हुत्वा, कुमारस्य मुखनासिकाचक्षुःश्रोत्राणि सप्त प्राणस्थानानि दक्षिणहस्तेन संस्पृश्य मन्त्रद्वयं पठेत् । तत्र मन्त्रयोरसाविति स्थानद्वयेऽपि वर्गाणां तृतीयचतुर्थपञ्चमयरलवेहष्वन्यतराद्यं यरलवान्यतममध्यं दीर्घविसर्गान्यतरान्तं कृत्प्रत्ययान्तं करणीयं नाम योज्यम् । कोसीत्यस्य प्रजापतिर्यजुरादित्यः, स त्वान्हेति प्रजापतिर्यजुरादित्यः नामकरणे विनियोगः ।

ॐ कोऽसि कतमोऽस्येषोऽस्यमृतोऽसि । आहस्पत्यं मासं प्रविशामुकशर्मन् ।

ॐ स त्वाऽन्हे परिददात्वहस्त्वा राज्यै परिददातु रात्रिस्त्वाऽहोरात्राभ्यां परिददात्वहोरात्रौ त्वाऽर्द्धमासेभ्यः परिदत्तामर्द्धमासास्त्वा मासेभ्यः परिददतु मासास्त्वर्तुभ्यः परिददत्वृतवस्त्वा संवत्सराय परिददतु संवत्सरस्त्वाऽयुषे जरायै परिददात्वमुकशर्मन् ॥

कोऽसीत्यादि पठित्वा प्रविशामुकशर्मन्निति सत्वान्हेति पठित्वा परिददाम्यमुकशर्मन्निति स्थानद्वयेऽपि नाम प्रयोज्यम्। कन्यायास्तु अयुग्माक्षरं दान्तं नाम कुर्यात् । एवं नाम कृत्वा, प्रथमं कुमारजनन्यै श्रावयेदमुकनामाऽयं कुमार इति । ततः सुहृदः श्रावयित्वा तन्त्रं समाप्य ब्रह्मणे गां दद्यात् ।

अत्र तिथ्यादीनामेकद्वित्वबहुत्वकृतो विशेषो निर्णये उक्तस्तथापि सुखावबोधाय प्रयोगः प्रदर्श्यते । यथा—प्रतिपदे स्वाहा । ब्रह्मणे स्वाहेति सर्वत्र योज्यम् । द्वितीयायै, त्वष्ट्रे । तृतीयायै, विष्णवे । चतुर्थ्यै, यमाय । पञ्चम्यै, सोमाय । षष्ठ्यै, कुमाराय । सप्तम्यै, मुनिभ्यः । अष्टम्यै, वसुभ्यः । नवम्यै, पिशाचेभ्यः । दशम्यै, धर्माय । एकादश्यै, रुद्राय । द्वादश्यै, रवये । त्रयोदश्यै, मन्मथाय । चतुर्दश्यै, यक्षेभ्यः । पञ्चदश्यै, विश्वेभ्यो देवेभ्यः । अमावास्यायै, पितृभ्यः ॥

अश्विनीभ्यः, अश्विभ्याम् । भरणीभ्यः, यमाय । कृत्तिकाभ्यः, अग्नये । रोहिणीभ्यः, ब्रम्हणे । मृगशिरसे, सोमाय । आर्द्रायै, रुद्राय । पुनर्वसवे, अदितये । पुष्याय, बृहस्पतये । अश्लेषाभ्यः, सर्पेभ्यः। मघाभ्यः, पितृभ्यः। पूर्वाफाल्गुनीभ्यां, भगाय । उत्तराफाल्गुनीभ्यां, अर्यम्णे। हस्ताय, सवित्रे। चित्रायै, त्वष्ट्रे। स्वातये, वायवे। विशाखाभ्यः, इन्द्राग्निभ्याम्। अनुराधायै, मित्राय। जेष्ठायै, इन्द्राय । मूलाय, निर्ऋतये । पूर्वाभ्योऽऽषाढ़ाभ्यः, अद्भ्यः । उत्तराभ्योऽऽषाढ़ाभ्यः, विश्वेभ्यो देवेभ्यः । श्रवणाय, विष्णवे । धनिष्ठाभ्यः, वसुभ्यः । शतभिषाभ्यः, वरुणाय । पूर्वाभ्यां प्रौष्ठपद्भ्यां,

अजैकपदे । उत्तराभ्यां प्रौष्ठपदाभ्याम् , अहिर्बुध्न्याय । रेवत्यै, पूष्णे । सर्वत्र नाम्नोऽन्ते स्वाहा प्रयोज्यमन्ते तन्नाम्ना त्यागश्च । इति नामकरणप्रयोगः ॥

### अथ पर्यङ्किकारोपणम् ।

तत्र नामकरणादिने षोडशे द्वाविंशे वान्यास्मिन्वा उक्तनक्षत्रादियुते शुभे काले यथाचारं कुलदेवतादिपूजां विधायाऽलङ्कृतं शिशुं कुङ्कुमाद्यलङ्कृते पर्यङ्के मात्राद्याः सौभाग्ययुक्ताः स्त्रियो योगशायिनं हरिं कुलदेवीं स्मरन्त्यो गीतवाद्यादिसमकालं प्राक्शिरसं न्यसेयुः । कुलाचारप्राप्तमन्यदपि कार्यम् । इति पर्यङ्किकारोपणप्रयोगः ॥

### अथ कर्णवेधप्रयोगः ।

उक्तकालानामन्यतमे शुभेऽन्हि पूर्वाण्हे मध्याह्ने वा गणपतिं स्वकुलदेवतां ब्राह्मणांश्च सम्पूज्य, सूर्यरश्मिपातस्थलेऽङ्गणादौ मातुरुत्सङ्गस्थस्यालङ्कृतशुभासनस्थशिशोः कर्णयोर्वेधस्थलमलक्तकरसेनाङ्कयित्वा, कर्णावभिमन्त्रयेत्पृथङ्मन्त्रेण । गौतमस्त्रिष्टुप् विश्वेदेवाः दक्षिणकर्णाभिमन्त्रणे विनियोगः ।

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥
भरद्वाजस्त्रिष्टुबग्निः वामकर्णाभिमन्त्रणे विनियोगः ।
वक्ष्यन्ती वेदागनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना ।
योषेव शिङ्क्ते वितताधिधन्वं ज्या इयं समने पारयन्ती ॥

एवमभिमन्त्र्य कुमारास्ये मधुरं दत्वा, सुवर्णादिसूच्या द्विगुणपट्टसूत्रोपेतया सौचिकेनान्येन कुशलेन सुभगास्त्रिया वा प्राङ्मुखोदङ्मुखस्य वा कर्णौ वेधयेत्कुमारस्य, पूर्वं दक्षिणः । कुमार्यास्तु पूर्वं वामकर्णो वेध्यः । वेधनक्षत्रात्तृतीये नक्षत्रे उष्णोदकेन कर्णक्षालनपूर्वकं रोहणं कार्यम् । रूढौ तथा वर्द्धनीयौ यथा पुंसः सूर्यरश्मिप्रवेशयोग्यं रन्ध्रं भवति । इति कर्णवेधप्रयोगः ॥

## अथ कुमारस्योपवेशनप्रयोगः ।

पञ्चममासे शुक्लपक्षे शुभतिथौ उक्तनक्षत्राणामन्यतमे पूर्वाह्णे स्वस्तिवाचनं कृत्वा, वराह-पृथिवी-गुरु-देव-द्विजान्पूजयित्वा, भूभागमुपलिप्य, तत्र मण्डलं कृत्वा, शङ्ख-तूर्यादि-माङ्गलिकध्वनौ क्रियमाणे शिशुमुपवेशयेदेतैर्मन्त्रैः ।

रक्षैनं वसुधे देवि सदा सर्वगतं शुभे ।
आयुःप्रमाणं निखिलं निःक्षिपस्व हरिप्रिये ॥ १ ॥
अचिरादायुषस्त्वस्य ये केचित्परिपन्थिनः ।
जीवितारोग्यवित्तेषु निर्दहस्वाऽचिरेण तान् ॥ २ ॥
धरिण्यशेषभूतानां मातस्त्वमधिका ह्यसि ।
कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यतामिति ॥ ३ ॥

ततो ब्राह्मणान्पूजयित्वा, आशिषो वाचयित्वा, मङ्गलानि कुर्यात् । एवं कुमार्या अपि । इत्युपवेशनप्रयोगः ॥

## अथान्नप्राशनप्रयोगः ।

जन्मतः षष्ठे मासि अष्टमे वा जातदन्तेषु वा उक्तनक्षत्रादिके काले पित्रादिः सभार्यो मङ्गलस्नानं विधाय, मातृपूजाभ्युदयिके कृत्वा, शिशुमलङ्कृत्य, कृतलक्षणे स्थण्डिले लौकिकं शुचिनामानमग्निं प्रतिष्ठाप्य, ब्रह्मोपवेशनादि कृत्वा, देशकालौ सङ्कीर्त्य "ममास्य शिशोर्मातृगर्भमलप्राशनशुध्यन्नाद्यब्रह्मवर्चसतेजइन्द्रियायुर्लक्षणफलसिद्धिबीजगर्भसमुद्भवैनोनिबर्हणाय अन्नप्राशनमहं करिष्ये" इति सङ्कल्प्य, चरुतन्त्रेणासादनानि कृत्वा निर्वपणे "प्राणाय त्वा जुष्टं निर्वपामि । अपानाय त्वा० । चक्षुषे त्वा० । श्रोत्राय त्वा० ।" द्विस्तूष्णीम् । ततः कण्डनादि चरोरुद्गुद्वासनान्ते कृते कुमारमाता स्नापितमलङ्कृतं कुमारं शुचिवस्त्रेण मुखवर्जमाच्छादितमादाय, उत्तराग्रेषु दर्भेषु स्ववामभागे समुपविष्टायां पत्न्यामाज्यभागौ हुत्वा, स्रुवेणाज्याहुतिद्वयं जुहुयात् ।

देवीं वाचमिति भृगुस्त्रिष्टुप् वाणीहोमे विनि० । वाजो न अद्येति भृगुस्त्रिष्टुबन्नं होमे० ।

ॐ देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहा ॥

इदं देव्यै वाचे न मम । उत्तरामृग्द्वयेन । देवीं वाचमित्यादि नुपसुष्टुतैतु ।

ॐ वाजो नो अद्य प्रसुवातिदानं वाजो देवाँऽऋतुभिः कल्पयामि । वाजो हि मा सर्ववीरं जजान विश्वा आशा वाजपतिर्जयेयं स्वाहेति द्वितीयाम् । इदं वाजायेति त्यागः । ततः प्रधानहोमः ।

ॐ प्राणेनान्नमशीय स्वाहा । इदं प्राणाय न मम ।
ॐ अपानेन गन्धानशीय स्वाहा । इदमपानाय न मम ।
ॐ चक्षुषा रूपाण्यशीय स्वाहा । इदं चक्षुषे न मम ।
ॐ श्रोत्रेण यशो यशीय स्वाहा । इदं श्रोत्राय न मम ।

ततो व्याहृतिचतुष्टयहोमादि यज्ञवास्त्वन्तं कृत्वा, दधिमधुघृतमिश्रमन्नं सर्वरसोपेतं सुपात्रे कृत्वा, मातुरुत्सङ्गे प्राङ्मुखोपविष्टस्य सकृदेव सुवर्णहस्तोऽन्नमादाय कुमारं तूष्णीं प्राशयेत् हन्तेति वा मन्त्रेण ॥

ततो मुखं प्रक्षाल्य बालकं भूमावुपवेश्य, तदग्रे पुस्तकायुधवस्त्रादिशिल्पानि विन्यस्य जीविकापरीक्षां कुर्यात् । शिशुः स्वेच्छया यत्प्रथमं स्पृशेत्सा तस्य जीविकेति विद्यात् । तत आशीर्वादादि माङ्गल्यं कुर्यात् । कुमार्या अप्येतदमन्त्रकं कार्यम् । इत्यन्नप्राशनप्रयोगः ॥

## अथ जन्मदिनादिकृत्यप्रयोगः ।

ततः प्रथमे संवत्सरे मासि मासि कुमारजन्मतिथिसजातीयायां तिथौ, प्रतिमासमशक्तौ सांवत्सरिकेषु वा फाल्गुन्याआषाढी-

कार्तिकीषु संवत्सरे वा अग्नीन्द्रादीन्यजेत । तत्र कर्त्ता स्नानादि नान्दीश्राद्धान्तं कृत्वा, कृतलक्षणे स्थण्डिले पावकनामानमग्निं प्रतिष्ठाप्य, देशकालौ सङ्कीर्त्य "अस्य शिशोर्बीजगर्भसमुद्भवैनोनिबर्हणाय होममहं करिष्ये" इति सङ्कल्प्य आज्यतन्त्रेण व्याहृतिहोमान्तं विधाय ।

ॐ अग्नीन्द्राभ्यां स्वाहा । इदमग्नीन्द्राभ्यां न मम ।

ॐ द्यावापृथिवीभ्यां स्वाहा । इदं द्यावापृ० ॥

ॐ विश्वेभ्यो देवेभ्यः स्वाहा । इदं विश्वेभ्यो देवेभ्यो न मम ।

ततः पूर्वोक्तप्रकारेण जन्मतिथिनाम्ना कुमारजन्मतिथिदेवतानाम्ना जन्मनक्षत्रदेवतानाम्ना जन्मनक्षत्रनाम्ना हुत्वा, व्याहृतिहोमादितन्त्रं समापयेत् । पूर्णपात्रं दक्षिणा । इति जन्मदिनादिकृत्यप्रयोगः ॥

## अथाब्दपूर्त्तिप्रयोगः ।

प्रतिवर्षं जन्मदिने सौरमानेन जन्मनक्षत्रे वा सुगन्धतैलाभ्यक्तः स्नात्वा, सर्वौषधियुतजलपूरितं कलशं सम्पूज्य, पुण्यर्ग्भिरभिमन्त्र्य, तदुदकेन स्नातः शुक्लाम्बरधरो यथाविभवमलङ्कृतो विधिवत्स्वस्ति वाचयित्वा, स्वकुलदेवतां गुरुदेवाग्निविप्रान्स्वनक्षत्रं पितॄन्प्रजापतिञ्च सम्पूज्य दूर्वाहोमं कुर्यात् ।

देशकालौ सङ्कीर्त्य "ममाब्दपूर्त्तिजन्मदिवसे आयुरभिवृद्धिद्वारा श्रीपरमेश्वरप्रीतये दूर्वाहोममहं करिष्ये" इति सङ्कल्प्य, विधिवदग्निं प्रतिष्ठाप्य, क्षिप्रहोमधर्मेण होमं कुर्यात् । तत्र पूर्वं यथाविधिना आज्यं संस्कृत्य, भूजपपर्युक्षणसमिद्धोमादीन्विधाय, स्रुवं संमार्ज्य, व्याहृतित्रयमाज्येन हुत्वा, केवलाज्याक्तं दूर्वात्रयमादाय मृत्युञ्जयमन्त्रेणाष्टोत्तरशतं हुत्वा, व्याहृतिचतुष्टयं पुनस्त्रयं च हुत्वानुपर्युक्षणादि वामदेव्यगानान्तं विधाय, यथाशक्ति दक्षिणादानादि ब्राह्मणभोजनान्तं कार्यम् । इदं सर्वं यावद्बाल्यं पित्रादिभिः कार्यम् । पश्चात्तु प्रत्यब्दं स्वयमेव ।

अश्वत्थामा बलिर्व्यासो हनुमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ॥
सप्तैतान्संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम् ।
जीवेद्वर्षशतं सोऽपि सर्वव्याधिविवर्जितः ॥

इति वाक्यादश्वत्थामादीन्मार्कण्डेयान्तानष्टौ नित्यं स्मरेत् । इत्यङ्गपूर्त्तिप्रयोगः ॥

## अथ प्रवासादागतप्रयोगः ॥

ग्रामान्तरात्पिता यदा आगच्छति तदा, अथवा पुत्रः स्वपितृत्वेन पितरं जानाति तदा कृतोपनयनस्य वा सुस्नातः शुचिर्वासोयुगधृतः कुलदेवतां सम्पूज्य, ज्येष्ठस्य पुत्रस्योभाभ्यां हस्ताभ्यां मूर्द्धानं परिगृह्य जपेन्मन्त्रत्रयम् । अङ्गादङ्गादित्यादिमन्त्राणां प्रजापतिरनुष्टुप् प्रजापतिः, पशूनान्त्वेति प्रजापतिर्यजुः प्रजापतिः पुत्रस्य मूर्द्धालम्भाघ्राणे विनियोगः ।

ॐ अङ्गादङ्गात्सꣳस्रवसि हृदयादधिजायसे ।
प्राणं ते प्राणेन सन्दधामि जीव मे यावदायुषम् ॥
अङ्गादङ्गात्सꣳस्रवसि हृदयादधि जायसे ।
वेदो वै पुत्रनामासि सजीव शरदः शतम् ॥
अश्मा भव परशुर्भव हिरण्यमस्तृतं भव ।
आत्मासि पुत्र मा मृथाः सजीव शरदः शतम् ॥
पशूनां त्वा हिङ्कारेणाभिजिघ्राम्यमुकशर्मन्निति ।

एवमेव तत्कनिष्ठानां पुत्राणां ज्येष्ठक्रमेणाथवा पूर्वं यो यः सन्निधावागच्छति तस्य तस्य वा मूर्द्धालम्भाघ्राणे पिता कुर्यात् । कन्यानामपि मूर्द्धालम्भाघ्राणे मन्त्रं विना कर्त्तव्ये। इति प्रवासागत कृत्यप्रयोगः ॥

## अथ चूडाकरणप्रयोगः ॥

जन्मतस्तृतीये वर्षे प्रथमे वा उदगयने शुक्लपक्षे कृष्णपक्षेऽ न्त्यभागद्वये उक्ततिथ्याद्युपेते शुभेऽह्नि मङ्गलस्नानं विधाय,

मातृपूजापुरःसरं नान्दीश्राद्धं कुर्यात् । देशकालौ सङ्कीर्त्य "मम सुतस्य चूडाकरणकर्माङ्गं नान्दीश्राद्धमहं करिष्ये" इति सङ्कल्प्य, नान्दीश्राद्धं विधाय, कृतमङ्गलस्नानं कुमारमलङ्कृत्य, ब्राह्मणैः पुण्याहं वाचयित्वा, गृहस्य पुरस्तादुपलिप्ते भूप्रदेशे स्थण्डिलं निर्माय, तस्मिन्कृतलक्षणे सभ्यनामानमग्निं प्रतिष्ठाप्य, ब्रह्माण-मुपवेश्याचम्य प्राणमायम्य, देशकालौ सङ्कीर्त्य "ममास्य कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणेन बलायुर्वर्चोऽभिवृद्धये चौलाख्यं कर्मा-हं करिष्ये" इति सङ्कल्प्याज्यतन्त्रेणासादनम् । तत्र विशेषः—सप्त सप्त त्रिधा बद्धैकविंशतिदर्भपिञ्जूलीः, उष्णोदकपूर्णकांस्यपात्रं, ता-म्रमयं क्षुरं, तदभावे आदर्शं वा, क्षुरहस्तं नापितमेतान्यग्नेर्दक्षिण-तः प्राक्संस्थान्यासादयेत् । रक्तवृषभगोमयं, विशेषसंस्काररहितं कृसरस्थालीपाकं अग्नेरुत्तरतः प्राक्संस्थमेतद्द्वयमासादयेत् । ततो व्रीहिभिर्यवैस्तिलैर्माषैः पृथक् चत्वारि पात्राणि पूरयित्वाऽग्नेः पूर्वत उदक्संस्थानि स्थापयेत् ।

ततो द्रव्यप्रोक्षणादिपरिस्तरणान्ते कृते कुमारमाता शुचिना वसनेन मुखवर्जं कुमारमाच्छादितमादायाग्नेः पश्चिमतो भर्तुरुत्तर-तः उत्तराग्रेषु दर्भेषु प्राङ्मुख्युपविशेत् । ततः प्रणीतासादनादि स्रुक्सम्मार्गान्तं कृत्वा, व्याहृतिचतुष्टयं जुहुयात् । अथ गृहीत-कुमारायाः कुमारमातुः पश्चात्प्राङ्मुखोऽवस्थाय सवितारं मनसा ध्यायन्नापितं प्रेक्षमाण आयमगादिति जपेत् । आयमगादिति प्र-जापतिर्यजुः सविता जपे विनियोगः ।

ॐ आयमगात्सविता क्षुरेण ।

ततो वायुं ध्यायन् कांस्यस्थमुष्णोदकं प्रेक्षमाणो जपेत् । उष्णेत्यस्य प्रजापतिर्यजुर्वायुः जपे वि० ।

ॐ उष्णेन वाय उदकेनैधि ।

ततस्ता एवोष्णा आपो दक्षिणेन पाणिना आदाय, प्राङ्मु-

स्तस्य कुमारस्य कपुष्णिकाख्यां दक्षिणचूडां आप उन्दन्त्विति सि-ञ्चति । आप इति प्रजापतिर्यजुराप: कपुष्णिकाक्लेदने वि० ।

ॐ आप उन्दन्तु जीवसे ।

ततस्ताम्रक्षुरमादर्शं वा प्रेक्षमाणो विष्णोरिति जपेत् । विष्णो-रिति प्रजापतिर्यजुरादर्शः प्रेक्षणे वि० ।

ॐ विष्णोर्द४ंष्ट्रोऽसि ।

ततो दक्षिणचूडासंलग्नाः शिरोभिमुखाग्राः सप्त दर्भपिंजूली-रोषध इति धारयेत् । ओषध इति प्रजापतिर्यजुरोषधीः दर्भपिंजू-लीनिधाने वि० ।

ॐ ओषधे त्रायस्वैनम् ।

ततो वामेन पाणिना सपिंजूलीकां चूडां गृहीत्वा, दक्षिणेन पाणिना ताम्रक्षुरमादर्शं वा गृहीत्वा, स्वधितेति संलग्नं कुर्यात् । स्वधितेति प्रजापतिर्यजुः स्वधितिः निधाने विनियोगः ।

ॐ स्वधिते मैनं४ हि४ंसीः ।

ततस्तत्रस्थमेव ताम्रक्षुरेण आदर्शेन वा केशच्छेदनमकुर्वन् प्राङ्मुखं प्रेरयेद्येन पूषेति सकृद्यजुषा, द्विस्तूष्णीम् । येन पूषेति प्रजापतिर्यजुः पूषा प्रोहणे वि० ।

ॐ येन पूषा बृहस्पतेर्वायोरिन्द्रस्य चावपत् ।

तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय दीर्घायुष्ट्वाय वर्चसे ॥

ततो नापितहस्तादायसं क्षुरमादाय पिंजूलीसहितां कपुष्णि-कां प्रतिच्छिन्द्यादग्नेरुत्तरत आसादिते वृषभगोमये निदध्यात् ।

ततः कुमारमुदङ्मुखं कृत्वा, शिरःपश्चाद्भागस्थकेशसमूहरूपां कपुच्छलसंज्ञां द्वितीयचूडामुष्णोदकमादाय, आप उन्दन्तु जीवसे इत्यारभ्य गोमयनिधानान्तं पूर्ववत्सर्वं कुर्यात् ।

ततः कुमारं प्राङ्मुखं कृत्वा, कपुष्णिकासंज्ञामुत्तरचूडां तृती-यां आप उन्दन्तु जीवसे इत्यारभ्य गोमयनिधानान्तं उक्तवत् कुर्यात् ।

अथ हस्ताभ्यां कुमारस्य मूर्द्धानं परिगृह्य जपेत् त्र्यायुषमिति। त्र्यायुषमित्यस्य नारायणस्त्रिष्टुप् विश्वेदेवा देवताः जपे विनि०

ॐ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषमगस्त्यस्य त्र्यायुषं यद्देवानां त्र्यायुषं तत्ते अस्तु त्र्यायुषम् ॥

ततः कुमारमग्नेरुत्तरतो नीत्वा, गोत्रकुलानुसारेण सशिखमशिखं वा मुण्डनं तेनैव नापितेन कारयेत्। तदैव कर्ता तन्त्रं समाप्य ब्रह्मणे गां दद्यात्। "कृतैतच्चूडाकर्मसाङ्गतासिद्ध्यर्थं गां तत्प्रतिनिधिभूतं निष्क्रयद्रव्यं वा तुभ्यमहं सम्प्रददे"। ततो ब्राह्मणान्सम्भोज्य दक्षिणाभिस्तोषयेत्। ततः कश्चित्तत्सर्वान्केशानादाय आनडुहे गोमये कृत्वा, अरण्ये शुचौ देशे क्वचिन्निखनेद्व्रीह्यादिस्तम्बे वा क्षिपेत्। कृसरव्रीह्यादि नापिताय देयम्। इति चूडाकरणप्रयोगः ॥

## अथोपनयनप्रयोगः।

तत्र गर्भवर्षमारभ्याष्टमवर्षे उक्तानामन्यतमे वा उक्ततिथ्यादियुते शुभेऽह्नि उपवीती पुराचार्यः पूर्वेद्युर्बटोः परिधानार्थं क्षौमं शाणं वाऽभावे कार्पासं वस्त्रखण्डमुत्तरीयार्थं कृष्णमृगचर्म त्रिचतुरङ्गुलविस्तृतं द्विहस्तं ब्रह्मसूत्रमयमुपवीतमुक्तलक्षणं मौञ्जी मेखला-दण्डं कटिबन्धनसूत्रं भिक्षाभाजनं च सम्पादयेत्।

ततः स्वस्योपनेतृत्वाधिकारसिद्ध्यै कृच्छ्रत्रयं द्वादशसहस्रं गायत्रीं च जप्त्वा, कुमारेणापि कामचार-कामवाद-कामभक्षणादिदोषपरिहाराय कृच्छ्रत्रयं कारयेत्। एतत्प्रायश्चित्तं मुख्यविधिनाकरणासमर्थेन गोदान-गायत्र्या तिलाहुतिसहस्र दशसहस्रगायत्रीजप द्वादश ब्राह्मणभोजनाद्यन्यतमप्रत्याम्नायद्वारा वा कर्त्तव्यम्। एतत्पूर्वदिवसे कर्त्तव्यम्। अथ तद्दिने पूर्वदिने वा मातृपूजापूर्वकं नान्दीश्राद्धं कुर्यात्। "मम सुतस्य उपनयनकर्माङ्गं नान्दीश्राद्धमहं करिष्ये" इति सङ्कल्पः। अन्यस्तु कश्चित्पूर्वाह्णे

एव माणवकं भोजयित्वा, वपनं कारयित्वा, आप्लाव्य यथाविभवमलङ्कुर्यात् ।

ततः पिता गृहस्य पुरस्तादुपलिप्ते भूप्रदेशे स्थण्डिले संमार्जनादिभिः सुसंस्कृते समुद्भवनामानमग्निं प्रतिष्ठाप्य, आज्यतन्त्रेणासादनं कुर्यात् । तत्र विशेषः—कटिसूत्र परिधानवस्त्रखण्डोपवीत मेखला दण्डाऽजिन भिक्षापात्राणि प्राक्संस्थान्यग्नेरुत्तरत आसादयेत् । गोनिष्क्रयद्रव्यं पूर्णपात्रञ्च ।

अथ भूजपादि पात्रप्रोक्षणान्तं विधाय, देशकालौ सङ्कीर्त्य "अस्य कुमारस्य द्विजत्वसिद्धये उपनयनकर्माहं करिष्ये" इति सङ्कल्प्य, माणवकं स्वदक्षिणे उपवेश्य, कटिसूत्रमाबध्य, वस्त्रखण्डं परिधाप्य, यज्ञोपवीतं मन्त्रेण परिधापयेत् । यज्ञोपवीतमित्यस्य प्रजापतिस्त्रिष्टुप् यज्ञोपवीतं, यज्ञोपवीतमसीति प्रजापतिर्यजुर्यज्ञोपवीतं श्रौतस्मार्त्तकर्मानुष्ठानसिद्ध्यर्थं यज्ञोपवीतधारणे विनियोगः ।

ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥
ॐ यज्ञोपवीतमसि यज्ञस्य त्वा उपवीतेनोपनह्यामि ॥

इति मन्त्रद्वयं वाचयित्वा दक्षिणं बाहुमुद्धार्य शिरोपरि नीत्वा वामस्कन्धोपरि संस्थापितं दक्षिणबाहुमूलादधोलम्बमेवं धारयेत् । ततो माणवकमात्मनोऽग्नेश्च मध्येन यज्ञपात्रोत्तरं गमयित्वा, तत्र विधिवदाचामय्य पुनस्तथैवानीय स्वदक्षिणतः प्राङ्मुखं उपवेशयेत् ।

ततो बर्हिस्तरणादि स्रुवसंमार्गान्तं कृत्वा, व्याहृतिचतुष्टयं हुत्वा, माणवकानुपठितैः पञ्चभिर्मन्त्रैश्चरिष्यामीति पदानन्तरं प्रक्षिप्तव्रतनाम–कालपरिमाणवाचकपदैः स्रुवेण पञ्चाज्याहुतीर्जुहुयात् । अग्ने व्रतपत इत्यादि पञ्चानां प्रजापतिर्यजुरग्निवायुसूर्यचन्द्रेन्द्राः होमे विनियोगः ।

ॐ अग्ने व्रतपते व्रतं चरिष्यामि सावित्रमष्टवार्षिकमष्टमासिकमष्टदैवसिकं तत्ते प्रब्रवीमि तच्छकेयं तेनर्ध्यासमिदमहमनृतात्सत्यमुपैमि स्वाहा । इदमग्नये व्रतपतये न मम ।

एवं "वायो व्रतपते०" । इदं वायवे व्रतपतये न मम ।

सूर्य व्रतपते० । इदं सूर्याय व्रतपतये न मम ।

चन्द्र व्रतपते० । इन्दं चन्द्राय व्रतपतये न मम ।

व्रतानां व्रतपते० । इदमिन्द्राय न मम ।

ततः स्वासनात्पश्चिमदेशे उदगग्रदर्भोपरि स्वयं प्राङ्मुखस्तिष्ठेत् । माणवकोऽप्यग्न्याचार्ययोर्मध्ये प्रसृताञ्जलिरुदगग्रेष्वेव दर्भेषु आचार्याभिमुखस्तिष्ठेत् । ततो मन्त्रविद्ब्राह्मणो माणवकस्य वामत उदङ्मुखोऽवस्थाय, जलेन माणवकस्याञ्जलेरुपरि आचार्यस्याप्यञ्जलिं पूरयेत् । ततो माणवकं प्रेक्षमाण आचार्यो मन्त्रं जपेत् । आगन्त्रासेति प्रजापतिरनुष्टुप् माणवकः, अग्निष्टेति प्रजापतिः पङ्क्तिर्माणवकः प्रेक्षणे विनियोगः ।

ॐ आगन्त्रा समगन्महि प्रसुमर्त्यं युयोतन ।

अरिष्टाः सञ्चरेमहि स्वस्ति चरतादयम् ॥

ॐ अग्निष्टे हस्तमग्रहीत्सविता हस्तमग्रहीदर्यमा हस्तमग्रहीन्मित्रस्त्वमसि कर्मणाग्निराचार्यस्तव ।

ब्रह्मचर्येति प्रजापतिर्यजुराचार्यः वाचने वि० । "ॐ ब्रह्मचर्यमागामुप मा नयस्वेति ब्रूहीत्युक्त्वा" वाचयेत् । प्रजापतिर्यजुः माणवकः प्रश्ने विनियोगः । "को नामाऽसीति" माणवकं पृच्छेत् । ततो देवतानक्षत्रगोत्राणामन्यतमाश्रितं नाम कल्पयित्वा, प्रजापतिर्यजुर्माणवकः प्रतिवचने विनियोगः । "अमुकशर्मनामास्मि" इति आचार्यं प्रति वदेत् । तत आचार्यो माणवकश्च स्वाञ्जलिस्थमुदकमुत्सृज्य, आचार्यः स्वदक्षिणहस्तेन माणवकस्य साङ्गुष्ठं दक्षिणहस्तं मन्त्रेण गृह्णीयात् । प्रजापतिर्यजुर्माणवकः हस्तग्रहणे विनि० ।

ॐ देवस्य ते सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णाम्यमुकशर्मन् ।

ततस्तथैव गृहीतहस्तं तत्रैव स्थितं प्रदक्षिणमावृत्य प्राङ्मुखं कुर्यान्मन्त्रेण । सूर्यस्येति प्रजापतिर्यजुर्माणवकः आवर्त्तने वि० ।

ॐ सूर्यस्यावृतमन्वावर्तस्वामुकशर्मन् ।

ततो दक्षिणहस्तेन माणवकस्य दक्षिणं स्कन्धं तूर्ष्णीं स्पृष्ट्वा, वस्त्राद्यनन्तर्हितां नाभिं स्पृशेन्मन्त्रेण । प्राणेति प्रजापतिर्यजुरन्तकः नाभिस्पर्शने विनि० ।

ॐ प्राणानां ग्रन्थिरसि मा विस्रसोऽन्तक इदन्ते परिददाम्यमुकशर्माणम् ।

तत उदरं स्पृशेन्मन्त्रेण । प्रजापतिर्यजुरहुरः उदराभिमर्शने विनियोगः ।

ॐ अहुर इदं ते परिददाम्यमुकशर्माणम् ।

ततो हृदयं स्पृशेत् । प्रजापतिर्यजुरग्निः हृदयस्पर्शने विनि० ।

ॐ कृशन इदं ते परिददाम्यमुकशर्माणम् । ततो दक्षिणहस्तेन दक्षिणस्कन्धं स्पृशेन्मन्त्रेण । प्रजापतिर्यजुः प्रजापतिः अंसालम्भने विनियोगः ।

ॐ प्रजापतये त्वा परिददाम्यमुकशर्माणम् ।

ततो वामहस्तेन वामस्कन्धं स्पृशेत् । प्रजापतिर्यजुः सविता अंसालम्भने विनि० ।

ॐ देवाय त्वा सवित्रे परिददाम्यमुकशर्माणम् । अथांसयोर्गृहीतं माणवकं प्रेषैर्बोधयेत् । प्रजापतिर्यजुर्ब्रह्मचारी आदेशने विनि० ।

ॐ ब्रह्मचार्यस्यमुकशर्मन् "अद्यारभ्य ब्रह्मचारी भवसि" इत्यर्थं बोधयेत् । ब्रह्मचारी प्रतिप्रैषं बाढमोमिति वा वदेत् । प्रजापतिर्यजुः प्रजापतिः आदेशने विनि० ।

समिधमाधेह्यपोशानकर्म कुरु मा दिवा स्वाप्सीः। "सायं प्रातः समिदाधानममृतोपस्तरणमसि स्वाहेति भोजनादौ, अमृतापिधानमसि स्वाहेति भोजनान्ते च आचमनद्वयं गुरुपरिचर्यादि कर्म कुरु, दिवा शयनं मा कार्षीरित्यर्थं" बोधयेत्। प्रतिवचनं पूर्ववत्।

तत आचार्योऽग्नेरुत्तरत उत्तराग्रेषु कुशेषु प्राङ्मुख उपविश्य, माणवकमप्युत्तराग्रेषु कुशेषु आचार्याभिमुखं भूगतदक्षिणजानुमुपवेश्य, त्रिवृतया मौञ्ज्या कटिदेशे प्रदक्षिणं त्रिर्वेष्टयन्मन्त्रद्वयं वाचयेत्। इयं दुरुक्तेत्यादिमन्त्रद्वयस्य प्रजापतिरनुष्टुप् मेखलावाचने विनियोगः।

ॐ इयं दुरुक्तात्परिबाधमाना वर्णं पवित्रं पुनती म आगात्।
प्राणापानाभ्यां बलमाहरन्ती स्वसा देवी सुभगा मेखलेयम्॥
ऋतस्य गोप्त्री तपसः परस्वी घ्नती रक्षः सहमाना अरातीः।
सा मा समन्तमभि पर्येहि भद्रे धर्त्तारस्ते मेखले मा रिषाम॥

मेखलां त्रिर्वेष्टयित्वा, प्रवरसंख्यया ग्रन्थीन्कुर्यात्। अथ प्रशस्तलग्नांशकमुहूर्त्ते तथैवोपविष्टं कृताञ्जलिमाचार्यगतमनोनयनं माणवकं आचार्यः किञ्चित्स्वसमीपं नयन्वाचयेत्। "अधीहि भोः सावित्रीं मे भवाननुब्रवीतु" इति। एवमुक्त आचार्यः सावित्रीमनुवाचयेत्। तत्सवितुर्विश्वामित्रो गायत्री सविता सावित्रीमनुवाचने विनियोगः।

"ॐ तत्सवितुर्वरेण्यम्"। पुनः—"भर्गो देवस्य धीमहि"। पुनः—"धियो यो नः प्रचोदयात्"। ततः-"तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि" ततः—धियो यो नः प्रचोदयात्"। ततः समस्ताम्।

ततो भूरादीनां विश्वामित्र-जमदग्नि-भरद्वाजा गायत्र्युष्णिगनुष्टुबग्निवायुसूर्याः वाचने विनियोगः। प्रणवस्य ब्रह्मा दैवी गायत्री परमात्मा व्याहृत्यन्ते विनि०। भूः ॐ, भुवः ॐ, स्वः ॐ,

एवं वाचयित्वा, पालाशदण्डं प्रयच्छन्वाचयेन्मन्त्रेण । प्रजापतिः पङ्क्तिर्दण्डः वाचने विनि० ।

ॐ सुश्रवः सुश्रवसं मा कुरु यथा त्वꣳ सुश्रवः सुश्रवा देवेष्वेवमहꣳ सुश्रवः सुश्रवा ब्राह्मणेषु भूयासम् ।

ततो अजिनं परिधापयेन्मन्त्रेण । प्रजापतिस्त्रिष्टुप् अजिनं अजिनपरिधापने विनियोगः ।

ॐ मित्रस्य चक्षुर्द्धरुणं बलीयस्तेजो यशस्वी स्थविरं समिद्धम् । अनाहनस्य वसनं जरिष्णुः परीदं वाज्यजिनं दधेयम् ।

अथ ब्रह्मचारिणमाचार्यो द्वादश प्रैषानुक्त्वा प्रैषार्थं बोधयेत् । ब्रह्मचारी प्रतिप्रैषं बाढमोमिति वा वदेदनुपालयेच्च । ते यथा—आचार्याधीनो भवान्यत्राऽधर्मचरणात् । "अधर्मं विहाय आचार्यस्य वश्यो भव ॥१॥ क्रोधाऽनृते वर्जय । "कोपं मिथ्याभाषणं च त्यज" ॥२॥ मैथुनं वर्जय । "मैथुनं स्त्रीरतं भोग इत्यर्थः" ॥३॥ उपरि शय्यां वर्जय । "आचार्यशय्याऽऽसनयोरुच्चैः शय्याऽऽसने" ॥४॥ कौशीलवगन्धाञ्जनानि वर्जय । "नर्त्तनगानवाद्य-वादन-चन्दनादिना गन्धलेपनं कज्जलादिना नेत्राञ्जनानि" ॥५॥ स्नानं वर्ज्जय । "अभ्यङ्गोद्वर्त्तनपूर्वकं स्नानम्" ॥६॥ अलेखन-दन्तप्रक्षालन-पादप्रक्षालनानि वर्जय इत्यादि । "कङ्कतिकादिना केशप्रसाधनं, प्रयोजनं विना भूमेर्वा लेखनं, पर्णादिना दन्तघर्षणमुद्वर्त्तनपूर्वकं पादेन वा पादप्रक्षालनं च" ॥७॥ पुनरक्षुरं कृतं वर्जय । "वपनं वर्जयेत्यर्थः" ॥८॥ मधुमांसे वर्जय ॥९॥ गोयुक्तारोहणं वर्जय । "युक्तवृषस्य शकटादेरारोहणम्" ॥१०॥ अन्तर्ग्राम उपानहोद्धारणम् स्वयमिन्द्रियमोचनं । "पुरुषानिवासमध्ये उपानत्परिधानं, चक्षुरादीनामिन्द्रियाणां स्वस्वविषये रागतः प्रवर्तनम्" ॥११॥ मेखलाधारणभैक्षचर्यदण्डसमिदाधानोदकोपस्पर्शनप्रातरभिवादा इत्येति । मेखलादण्डधारण-भिक्षाचरण-सायम्प्रातः स्नान-सायम्प्रातर्हो-

मदेवर्षिपितृतर्पणाभिवादनानि यथाशास्त्रं त्वया कर्त्तव्यानि ॥१२॥

अथ ब्रह्मचारी तूष्णीमादित्यमुपस्थायाग्निं प्रदक्षिणीकृत्याग्नेः पश्चात्प्राङ्मुख उपविश्य, भिक्षापात्रमादाय, आदौ मातरं "भवति भिक्षां देहीति" अथवा मातुः स्वसारं स्वभगिनीमप्रत्याख्यायिनी-मन्याश्च याचित्वा, लब्धं भैक्षं 'भो' इत्याचार्याय निवेदयेत्। तत 'इदं त्वं गृहाणे'त्याचार्येण दत्तं तद्भैक्षं शुचि स्थाने भोजनार्थं स्थापयेत्। तत्र आचार्यो व्याहृतिचतुष्टयहोमादि तन्त्रं समापयेत्। ततः कुलपरम्परासमागताय ऋत्विजेऽन्यस्मै गुणवते वा उपनयन-कर्माङ्गभूतां दक्षिणां दद्यात्। दक्षिणां सकुशोदकामादाय, मासा-दिकमुल्लिख्य "ममास्य सुतस्य उपनयनकर्मसाङ्गतासिद्ध्यर्थं गो-निष्क्रयद्रव्यं इदमाग्नेयं अमुकगोत्रायेत्याद्युच्चार्य तुभ्यमहं सम्प्र-ददे" इत्युक्त्वा गां दद्यात्। ब्रह्मणे पूर्णपात्रं दत्वा, वामदेव्यं गायेत्। इत्युपनयनप्रयोगः ॥

## अथ समिदाधानप्रयोगः।

अथ ब्रह्मचारी तिष्ठन्नेव दिनशेषं नीत्वा, स्नात्वा, पूर्वोक्त-विधिना शिक्षापितां सायंसन्ध्यां कृत्वाऽस्तमिते सवितरि संमा-र्जनादिसंस्कृते स्थण्डिलेऽग्निं प्रतिष्ठाप्य, कुशपाणिरग्नेरुत्तरत आ-चान्तोऽग्नेः पश्चात्प्राङ्मुख उपविश्य, प्राणमायम्य, देशकालौ सङ्कीर्त्य 'समिदाधानमहं करिष्ये' इति सङ्कल्पं कृत्वा, यथावि-धिना भूजपप्रसेकपर्युक्षणादीन्विधायोत्थाय, प्रादेशमितां समि-धमग्नौ तूष्णीं हुत्वा, द्वितीयां मन्त्रेण जुहुयात्। अग्नये समिध-माहार्षेति प्रजापतिर्यजुरग्निः समिद्धोमे विनियोगः।

ॐ अग्नये समिधमाहार्षं बृहते जातवेदसे। यथा त्वमग्ने स-मिधा समिध्यस्येवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्म-वर्चसेन धनेनान्नाद्येन समेधिषीय स्वाहा। इदमग्नये न ममेति त्यागः।

ततस्तूष्णीं तृतीयामग्नौ हुत्वा, उपविश्य, अनुपर्युक्षणप्रसे-

कान्विधायाग्निं प्रदक्षिणीकृत्य, चमसं निनीय, पुनरापूर्य, वामदेव्यं गीत्वाऽग्निं प्रणमेत् । "अमुकगोत्रः अमुकशर्माहं भो अग्ने भवन्तमभिवादयामि" इत्यभिवादयेत् । एवमग्निं प्रणम्य, एवमेव गोत्राद्युच्चार्य, हस्ताभ्यां स्वकर्णौ स्पृष्ट्वा, ( दक्षिणहस्तेन दक्षिणं, वामेन वामम् ) गुरोश्चरणौ स्पृशेत् । ततस्तेन "आयुष्मान् भव सौम्य देवदत्ता३" इत्याशीर्वादादयः । ततोऽन्यानपि यथाज्येष्ठमभिवादयेत् । इति समिदाधानप्रयोगः ॥

अथ प्रातः समुत्थाय, शौचाचमन–दन्तकाष्ठ–स्नान–सन्ध्यावन्दनानि विधाय, यथोक्तविधिना प्रातर्होमं कृत्वा, पितृमातृस्तन्यधात्री—मातामह—पितामहान्नदातृभयत्रात्राचार्योपनेतृमन्त्रविद्योपदेष्टॄन्तत्पत्नीश्च पादोपसङ्ग्रहणपूर्वकमभिवादयेत् । इतरान्नमस्कुर्यात् । ब्रह्मयज्ञसिध्यर्थं अकृतवेदारम्भेण ब्रह्मचारिणा गायत्रीजपः कार्यः । आग्नेयादिपर्वश्रवणानन्तरं यावदधीतं तावदेव आदित आरभ्य यथाशक्त्या स्वयं पठनीयं ब्रह्मयज्ञार्थम् । ततो मध्याह्नसन्ध्यां कृत्वा, देवर्षिपितॄन्सन्तर्प्य, गणेशादित्यरुद्रादीन्पूजयेत् । पूर्वोक्तनियमान् प्रतिपालयेत् । इति ब्रह्मचारिधर्माः ॥

## अथ अतिक्रान्तानां जातकर्मादिकर्मणां तन्त्रेणानुष्ठानप्रयोगः ।

तत्र नान्दीश्राद्धे "ममास्य सुतस्य जातकर्माद्यन्नप्राशनान्तकर्मगणप्रारम्भाङ्गनान्दीश्राद्धं" इत्यन्नप्राशनसातन्त्र्ये । नो चेच्चूडाकरणान्तमुपनयनान्तकर्मगणप्रारम्भाङ्गमिति । एवं नान्दीश्राद्धं विधाय, मुख्यकर्मणि विहितमग्निं प्रतिष्ठाप्य, चरुधर्मेण पात्राण्यासाद्य, सम्प्रोक्ष्य, देशकालौ सङ्कीर्त्य "अस्य कुमारस्य गर्भाम्बुपानजनितसकलदोषनिबर्हणायुर्मेधाभिवृद्धिव्यवहारसिद्धिमातृगर्भमलप्राशनशुध्यन्नाद्यब्रह्मवर्चसतेजइन्द्रियायुर्लक्षणफलसिद्धिबीजगर्भसमुद्भवैनोनिबर्हणाय जातकर्माद्यन्नप्राशनान्तानि कर्माण्यहं करिष्ये"

इति सङ्कल्प्य, चरुधर्मेण प्राणाय त्वेत्यादि चरोर्निर्वापादि पात्रसम्मार्गान्तं कृत्वा, आज्यभागौ जुहुयात् । ततो जातकर्मणो मुख्यकालातिक्रमदोषपरिहारार्थं व्याहृतिचतुष्टयं जुहुयात् । "जातकर्मणो मुख्यकालातिक्रमदोषपरिहारार्थं प्रायश्चित्तहोममहं करिष्ये" इति सङ्कल्प्य, व्याहृतिचतुष्टयं हुत्वा, व्रीहियवौ पेषयित्वेत्यादि घृतप्राशनान्तं विधाय, चन्द्रदर्शनकर्मणो मुख्यकालातिक्रमजन्यं प्रायश्चित्तं हुत्वा, यथाविधिना कुमारमात्रा दत्तं कुमारं गृहीत्वा, यत्ते सुसीमेत्यादिमन्त्रैश्चन्द्रमसमुपस्थाय, कुमारं जनन्यै दत्वाऽपामञ्जलिं पूरयित्वा, यददश्चन्द्रमिति मन्त्रान्तेऽञ्जलिमुत्सृज्य, तूष्णीं अञ्जलिद्वयमुत्सृजेत् । यद्यन्नप्राशनेन सह जातकर्मादीनि क्रियन्ते तदा पुनर्मन्त्रेणैकमञ्जलिं द्विस्तूष्णीमेवं अतिक्रान्तमाससंख्यया त्रींस्त्रीनञ्जलीन् प्रसिञ्चेत् । एवं च सति अष्टादश अञ्जलयः । नात्र नामकरणाङ्गहोमः । संवत्सरे अतीतेऽपि तस्य कालकथनात् । ततोऽन्नप्राशनाङ्गविहितदेवींवाचमित्यादिमन्त्रद्वयेनाहुतिं हुत्वा, प्राणेनान्नमशीयेत्यादिमन्त्रैः प्रधानहोमं निर्वर्त्य, तन्त्रसमापनादि कुर्यात् । चूडाकरणसातन्त्रेण यदि क्रियन्ते तदा षट्त्रिंशदञ्जलयः । ततोऽन्नप्राशनाङ्गहोमः । ततः प्राशनम् । ततो नामकरणकर्मणो मुख्यकालातिक्रमप्रायश्चित्तहोमः । ततस्तदङ्गहोमः । नामकथनम् । ततो जन्मदिनादिकृत्यस्य सप्रायश्चित्तो होमः । ततः चूडाकरणाङ्गं व्याहृतिचतुष्टयं हुत्वा, चूडासंस्कारः । ततस्तन्त्रसमाप्तिः । एवमुपनयनेन सह चेत्प्रतिकर्म प्रायश्चित्तं हुत्वा, क्रमेण सर्वाणि कर्त्तव्यानि । इत्यतिक्रान्तानां जातकर्मादिकर्मणां प्रयोगः ॥

## अथ वेदव्रतानां प्रयोगः ॥

तत्र व्रतेषु प्रथमं सावित्रम् । तस्मिन्प्रथमदिवसत्रये क्षारलवणवर्जितान्नाशनम् । नियमाः प्रागुक्ता एव मेखलाधारणादयः ।

ततो व्रतचर्यायामभिलषिताष्टवर्षादिसमाप्तौ सावित्रं चरुं कुर्यात् । तत्रादौ वृद्धिश्राद्धम् । "सावित्रचर्वङ्गं नान्दीश्राद्धं" इति सङ्कल्पः । ततश्चरुधर्मेणासादनादि सर्वं प्राकृतम् । "सवित्रे त्वा जुष्टं निर्वपामीति" निर्वापः । ततः कण्डनादि चरुश्रपणान्तम् । परिस्तरणाद्यभागान्ते "सवित्रे स्वाहेति" प्रधानाहुतिः । ततोऽग्ने व्रतपतेत्यादि पञ्चाज्याहुतयः । तत्रैवं ऊहः—

ॐ अग्ने व्रतपते व्रतमचार्षं सावित्रमिष्टकालिकं तत्ते प्रब्रवीमि तदशकं तेनारात्समिदमहमनृतात्सत्यमुपागां स्वाहा । एवमन्यत्रापि । ततो व्याहृतिचतुष्टयं हुत्वा, स्विष्टकृद्धोमादि तन्त्रं समाप्य, वरमाचार्याय, पूर्णपात्रं ब्रह्मणे दक्षिणां दद्यात् । सावित्रव्रतसमाप्त्यर्वाक् संवत्सरं षण्मासं वा वपनं न कार्यम् । इति सावित्रव्रतम् ॥

## अथ गोदानव्रतम् ।

तत्रादौ केशान्तकरणम् । तत्र वृद्धिश्राद्धमादौ कृत्वा, चूडाकरणवत्सर्वं कार्यम् । "गोदानव्रताङ्गं वृद्धिश्राद्धमहं करिष्ये" इति सङ्कल्पः । नात्र व्रीह्यादीनामासादनं, कृसरस्य च । वृद्धिश्राद्धानन्तरं पूर्वधृतमौञ्जीदण्डाजिनानां त्यागः । आयमगादित्यादिमन्त्रपठनं, चूडासंस्कारश्च ब्रह्मचारिणा स्वयं कर्त्तव्यम् । आज्यतन्त्रेणासादनादि व्याहृतिचतुष्टयहोमान्तं कृत्वा, आयमगादित्यादिवपनकाले सर्वाङ्गलोम्नां वापनम् । नापिताय अजानिष्क्रयो देयः । आचार्याय गोमिथुनं दक्षिणा । ब्रह्मणे पूर्णपात्रम् । इति केशान्तकरणम् ॥

## अथ गोदानव्रताङ्गोपनयनप्रयोगः ।

तत्र उपनयनवत्सर्वम् । नात्राहतवस्त्रालङ्कारादि । कृतलक्षणे स्थण्डिले सूर्यनामानमग्निं प्रतिष्ठाप्य, आसादनादि पूर्ववत् । वैरूपाक्षान्तं कृत्वा, पूर्वधृतमुपवीतं त्यक्त्वाऽन्यं मन्त्रेण धारयेत् ।

ततो व्याहृतिचतुष्टयं हुत्वाऽग्ने व्रतपते व्रतमित्यादिभिः पञ्चाज्याहुतयः। तत्र ऊहो यथा "अग्ने व्रतपते गोदानं सांवत्सरिकं तत्ते प्रब्रवीमीत्यादि" पूर्ववत्। ततः पूर्ववदागन्त्रासेत्यादि मेखलाबन्धनान्तम्। नात्र सावित्र्युपदेशः, कृतत्वात्। दण्डं प्रदाय, नियमश्रावणं पूर्ववत्। ततस्तन्त्रसमाप्तिः। संवत्सरान्ते आग्नेयैन्द्रपावमानपर्वणां श्रावणम्। तदन्ते ऐन्द्रश्चरुः। तत्र "इन्द्राय त्वा जुष्टं निर्वपामीति" निर्वापः। आज्यभागौ हुत्वा, ऋचं साम यजामहेत्येतया, सदसस्पतिमद्भुतमित्यनया वा मन्त्रद्वयेन वा चरोराहुतिं हुत्वा, इदमिन्द्राय न ममेति त्यागं विधाय "अग्ने व्रतपते" इत्यादि पञ्चाज्याहुतीर्जुहुयात्। आचार्याय अजं, मेषं, गाश्च पर्वदक्षिणां दत्वा, ब्रह्मणे पूर्णपात्रं दद्यात्। इति गोदानिक व्रतप्रयोगः॥

## अथ व्रातिकव्रतप्रयोगः।

तत्र "व्रातिकव्रताङ्गं नान्दीश्राद्धमहं करिष्ये" इति सङ्कल्पः। पूर्ववदुपनयनम्। "व्रतं व्रातिकं सांवत्सरिकं चरिष्यामीति" ऊहवद्भिः पञ्चाज्याहुतयः। समानमन्यत्। सर्वव्रतेषु सायम्प्रातः स्नानम्। पूर्वव्रतान्तश्रुतानामाग्नेयादिपर्वणां उपाकर्माहमारभ्य, नान्दीश्राद्धपूर्वकमध्ययनम्। संवत्सरान्ते अरण्यगेयगानस्याध्यायपञ्चकस्य आज्यदोहादिसामत्रयवर्जितस्य श्रावणम्। तदन्ते ऐन्द्रश्चरुः पूर्ववत्। आधानहोमान्ते "व्रातिकं व्रतमचार्ष" मित्यूहवद्भिर्होमः। तदन्ते वरदानमाचार्याय। ब्रह्मणे पूर्णपात्रम्। इति व्रातिकव्रतप्रयोगः॥

## अथादित्यव्रतप्रयोगः।

"आदित्यव्रताङ्गं नान्दीश्राद्धं" इति सङ्कल्पे। पूर्ववदुपनयनम्। तत्र "व्रतमादित्यं सांवत्सरिकं" इत्याद्यूहवद्भिः पञ्चाज्याहुतयः। मेखलाबन्धनादि प्राग्वत्। तदनन्तरमधरीयस्यैवैकवस्त्रस्य

धारणं, न द्वितीयस्य । अध्वानं व्रजन् ब्रह्मचारी छत्रादिना आदित्यं वृक्षगृहाभ्यामन्यत्र नान्तर्दध्यात् । गुर्वाज्ञां विना जान्वोरूर्द्ध्वं जलं नावगाहेत् । गुर्वाज्ञया न दोषः । पूर्वव्रतान्तश्रुतस्यारण्यकस्योत्तरायणे अध्ययनम् । संवत्सरान्ते महानाम्नीव्यतिरिक्तस्य शुक्रियस्य श्रावणम् । तदन्ते ऐन्द्रश्चरुः । प्रधानहोमानन्तरं "व्रतमादित्यमचार्ष" मित्यूहवद्भिः पञ्चाज्याहुतयः । तदन्ते वरमाचार्याय, ब्रह्मणे पूर्णपात्रं दक्षिणा । इत्यादित्यव्रतम् ॥

## अथ महानाम्नीव्रतप्रयोगः ।

तत्र "महानाम्नीव्रताङ्गं वृद्धिश्राद्धमिति" सङ्कल्पे । उपनयनं च पूर्ववत् । "व्रतं चरिष्यामीति, महानाम्निकं द्वादशवार्षिक"-मित्यूहवद्भिः पञ्चाज्याहुतयः । उपनयनानन्तरं त्रिकालस्नानम् । प्रातः स्नानानन्तरं प्रातर्होमं कृत्वा, पुनः स्नात्वा, भोजनं कार्यम् । सायं स्नात्वा, सायंहोमादर्वाग्भोजनं न कार्यम् । कृष्णवस्त्रादिनियमानां पक्षिकोपदेशात्ते नोक्ताः । बहिर्निर्गमनानन्तरं देवे वर्षति आच्छादितदेशं न गच्छेत् । प्रथमवृष्ट्यारम्भे "आपः शाक्वर्य" इति वदेत् । प्रथमविद्योतने "एवंरूपाः खलु शाक्वर्यो भवन्तीति" वदेत् । प्रथममेव गर्जन्तं ब्रूयात्मद्ण्या महान्घोषः । अस्नात्वा नदीं नातिक्रामेत् । नावं नारोहेत् । प्राणसंशये स्नात्वा, नावमारुह्य, नद्याः परपारे अवारुह्य स्नायात् । तत उक्तकालविकल्पानामन्यतमपक्षस्वीकृतकालस्यान्ते महानाम्नीः श्रावयेत् । तत्र विशेषः । अरण्ये गत्वा, कंसपात्रं जलेनापूर्य, व्रीहिशालिमुद्गगोधूमसर्षपतिलयवांस्तत्र निक्षिप्य, तास्वप्सु हस्तौ कृत्वा, अहतेन वाससा आचार्यस्तस्य अक्ष्णोः परिवेष्टनं कुर्यात् । ततो महानाम्नीः श्रावयेत् । एवमप्सु कृतहस्तः कृतमौनः परिवेष्टितनेत्रोऽरण्ये त्रिरात्रमुपवसेत् । अथवा सूर्यास्तमनं यावदरण्ये तिष्ठेत् । रात्रौ ग्रामे वसेत् ।

ततस्त्रिरात्रानन्तरं अरण्ये गत्वा, आचार्यः कृतलक्षणे स्थण्डिलेऽग्निमुपसमाधायाऽज्यतन्त्रेण स्रुवसंमार्गान्तं विधाय, व्याहृतित्रयं हुत्वा, नेत्रवेष्टनं दूरीकृत्य हस्तावुत्सृज्य, क्रमेण आग्नेयाज्यमादित्यब्राह्मणमनड्वाहमन्नं, जलं, दधि च स्वरभिव्यख्यञ्ज्योतिरभिव्यख्यमिति मन्त्रेण त्रिरवेक्षयेत्। ततो व्याहृतिहोमादि तन्त्रं समाप्य, वामदेव्यं गीत्वा, गुरुमभिवादयेदयमस्य वाग्विसर्गकालः। तत ऐन्द्रश्चरुः। तदन्ते आचार्याय वृषभकंसपात्रयोरन्यतरमहतं वस्त्रं, वरश्च दक्षिणा। अरण्यादागत्य, सशिष्यमाचार्यं भोजयेत्। इति महानाम्नीव्रतप्रयोगः॥

## अथौपनिषद्व्रतप्रयोगः।

तत्र वृद्धिश्राद्धं विधाय, पूर्ववदुपनयनम्। "उपनिषद्व्रतं सांवत्सरिकं चरिष्यामीति" ऊहः। पञ्चाहुतिषु संवत्सरं यावदुक्तनियमधारणम्। संवत्सरान्ते रहस्यब्राह्मणं श्रावयेत्। तदन्ते ऐन्द्रश्चरुः। गोदानमाचार्याय, पूर्णपात्रं ब्रह्मणे। इत्युपनिषद्व्रतम्॥

## अथ ज्येष्ठसामव्रतप्रयोगः।

तत्र वृद्धिश्राद्धपूर्वकमुपनयनाद्युक्तवत्। "व्रतं ज्येष्ठसामिकं सांवत्सरिकं चरिष्यामीति" होममन्त्रेषूहः। ततः संवत्सरान्ते महानाम्निकवदरण्येषूपोषितायाप्सु कृतहस्ताय वेष्टिताक्षायाज्यदोहानि सामानि श्रावयेत्। ततऐन्द्रश्चरुः। वरमाचार्याय। पूर्णपात्रं ब्रह्मणे। अत्र नियमविशेषो निर्णये द्रष्टव्यः। इति ज्येष्ठसामव्रतप्रयोगः॥

## अथ भौतिकव्रतप्रयोगः।

तत्रोपनयनादि पूर्ववत्। ततो रुद्रसंहितादीनां श्रावणपूर्वकमध्यापनम्। एवं साङ्गं वेदमधीत्यान्ते ऐन्द्रं चरुं पूर्ववन्निरूप्य हुत्वा च गुरवे दक्षिणां दत्वा स्नायात्। इमानि गोदानादीनि व्रतानि नास्तिक्यादाधुनिकैर्नानुष्ठीयन्ते। अतः प्रयोजनाभावाद्विविच्य विशेषतो नोक्तानि। इति भौतिकव्रतप्रयोगः॥

## अथ समावर्त्तनप्रयोगः ।

समावर्तनं स्नानम् । तत् व्रतानि, वेदं, व्रतवेदौ वा समाप्य, दक्षिणां गुरुसमीपे आनीय, गुरोश्चरणयुगं स्पृष्ट्वा, स्वशिरोनिघृष्ट-गुरुचरणकमलस्तां दक्षिणां गुरवे निवेदयेत् । ततो गुरुणा बहु शुभाशंसनपुरःसरं दत्ताशिषः कृताञ्जलिः प्रणतकन्धरः प्रतिगृह्य, "अहं स्नास्ये" इत्यनुज्ञां प्रार्थ्य, गुरुणा "स्नाहि" इत्यनुज्ञातो विवाहप्रकरणोक्तप्रशस्तलक्षणवतीं कन्यां विवाहार्थं सम्प्रार्थ्य, वाचा लब्धकन्यः स्नायात् ।

ततः पित्रा "आप्लवनाङ्गं नान्दीश्राद्धमहं करिष्य" इति सङ्कल्प्य, मातृपूजापूर्वकं नान्दीश्राद्धं कर्त्तव्यम् । ततो गुरुगृहस्योत्तरस्यां पूर्वस्यां वा दिशि कटादिना सर्वतो वेष्टितस्थाने पूर्वाग्रदर्भेषु उत्तराभिमुखोपविष्टस्याचार्यस्य सन्निधावुत्तराग्रेषु दर्भेषु पूर्वाभिमुखो ब्रह्मचार्युपविशेत् । ततो व्रीहि–शालि–मुद्ग–गोधूम–सर्षप–तिल–यवरूपाभिः सर्वौषधिभिर्मिश्रितं जलं विधायोष्णं कृत्वा, चन्दनकर्पूरादिगन्धांस्तत्र निःक्षिप्य, ब्रह्मचारी स्वमञ्जलिं तेन जलेन पूरयित्वा, मन्त्रेण भूमौ प्रक्षिपेत् । ये अप्स्वन्तरग्नय इति प्रजापतिर्यजुरग्निः, यदपां घोरमित्यस्य प्रजापतिर्यजुरग्निः समावर्त्तने विनियोगः ।

ॐ ये अप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मरूको मनोहाः ।
खलो विरुजस्तनुदूषिरिन्द्रियहा अति तान्सृजामि ॥

पुनस्तत एवं परमुदकाञ्जलिमादाय,

ॐ यदपां घोरं यदपां क्रूरं यदपामशान्तमति तत्सृजामि ॥

इत्येतावता मन्त्रेण भूमौ प्रक्षिपेत् । पुनरपि तत एवोदकाञ्जलिमादाय, यो रोचनेति प्रजापतिर्यजुरापः अभिषेके विनियोगः ।

ॐ यो रोचनस्तमिह गृह्णामि तेनाहं मामभिषिञ्चामि ॥

पुनस्तथैवोदकाञ्जलिमादाय—

यशस इति प्रजापतिर्यजुरापः अभिषेके विनियोगः ।

ॐ यशसे तेजसे ब्रह्मवर्चसाय बलायेन्द्रियाय वीर्यायान्नाद्याय रायस्पोषाय त्विष्या अपचित्यै ॥

इति शिरोऽभिषिञ्चेत् । पुनरञ्जलिमापूर्य, येन स्त्रियमिति प्रजापतिर्महापङ्क्तिरश्विनौ अभिषेके विनियोगः ।

ॐ येन स्त्रियमकृणुतं येनापामृशत ँ सुराम् ।
येनाक्षानभ्यषिञ्चतं येनेमां पृथिवीं महीम् ।
यद्वां तदश्विना यशस्तेन मामभिषिञ्चतम् ॥

इत्यनेन मूर्धन्यभिषिच्य, पुनरादाय तूष्णीं शिरोऽभिषिञ्चेत् । तत उत्थायादित्यमुपतिष्ठेन्मन्त्रैः कृताञ्जलिः । उद्यन् भ्राजेत्यादिचतुर्णां प्रजापतिर्यजुरादित्यः उपस्थाने विनियोगः ।

ॐ उद्यन्भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात्सान्तपनेभिरस्थात् । शतसनिरसि शतसनिं मा कुर्वात्वाविशाम्यामाविश ॥ १ ॥ ॐ उद्यन्भ्राजभृष्टिभिरिन्द्रो मरुद्भिरस्थात्सायं यावभिरस्थात् । सहस्रसनिरासि सहस्रसनिं मा कुर्वात्वाविशाम्यामाविश ॥ २ ॥ चक्षुरासि चक्षुष्ट्वमस्यच मे पाप्मानं जहि सोमस्त्वा राजाऽवतु नमस्तेऽस्तु मा मा हि ँसीः ॥ ३ ॥

एवमपरं मन्त्रद्वयं पठेत् । अथवा ऋष्यादिकं स्मृत्वा, प्रथमचतुर्थाभ्यां प्रातः । द्वितीयचतुर्थाभ्यां मध्यान्हे । तृतीयचतुर्थाभ्यां सायमेवमुपतिष्ठेत् । ततो मेखलामधस्तात्त्यजेदनेन मन्त्रेण । उदुत्तमं शुनःशेपस्त्रिष्टुप् वरुणो मेखलामोचने विनियोगः ।

ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यम ँ श्रथाय ।
अथादित्य व्रते वयं तवानागसो अदितये स्याम ॥

अनेनाच्छिन्नां मेखलामधस्तात्परित्यज्य, अजिनदण्डौ तूष्णीमेव परित्यजेत् । ततस्त्रिप्रभृतीन् ब्राह्मणान्भोजयित्वा, स्वयं भुक्त्वा, शिखावर्जितानि शिरोमुखस्याङ्गस्य च लोमानि नखांश्च वापयित्वा, स्नात्वाऽहते वाससी परिधाय, अलङ्कृत्य, मन्त्रेण श्वेतकुसुममालां

शिखायां कण्ठे च बध्नीयात्। श्रीरसीति प्रजापतिर्यजुः श्रीः स्रक्बन्धने विनियोगः।

ॐ श्रीरसि मयि रमस्व॥

ततो मन्त्रेणोपानहौ परिदध्यात्। नेत्र्यौ स्थेति प्रजापतिर्यजुरुपानहौ उपानत्परिधाने विनियोगः।

ॐ नेत्र्यौ स्थो नयतं माम्॥

ततो मन्त्रेण वैणवं दण्डं गृह्णीयात्। गन्धर्वोऽसीति प्रजापतिर्यजुर्दण्डः ग्रहणे विनियोगः।

ॐ गन्धर्वोऽस्युपाव उप मामव।

ततः शिष्यः पर्षत्सहितमाचार्यं मन्त्रेणेक्षेत्। यक्षमिवेति प्रजापतिर्यजुराचार्यः ईक्षणे विनियोगः।

ॐ यक्षमिव चक्षुषः प्रियो वो भूयासम्।

तत आचार्यसमीपे उपविश्य, मुखनासिकाकर्णाख्यानि सप्त प्राणायतनानि स्पृष्ट्वा मन्त्रं जपेत्। ओष्ठापिधानेति प्रजापतिरनुष्टुप् जिह्वा प्राणायतनाभिमर्शने विनियोगः।

ॐ ओष्ठापिधाना नकुली दन्तपरिमितः पविः। जिह्वे मा विह्वलो वाचं चारु माऽद्येह वादय॥

तत आचार्यो मधुपर्केण स्नातकमर्चयेत्। ततः स्नातको वृषभयुक्तरथस्य समीपमागत्य, रथचक्रे रथ्यवस्थाने ईषे च संस्पृशेन्मन्त्रेण। वनस्पतेति प्रजापतिस्त्रिष्टुप् रथः अभिमर्शने विनियोगः।

ॐ वनस्पते वीड्वङ्गो हि भूया अस्मत् सखा प्रतरणः सुवीरः। गोभिः सन्नद्धो असि वीडयस्व॥

ततो मन्त्रेण रथमारोहेत्। आ स्थात इति प्रजापतिर्यजू रथः रथारोहणे विनियोगः।

ॐ आ स्थाता ते जयतु जेत्वानि॥

इति मन्त्रेण रथमारुह्य, प्राङ्मुखोदङ्मुखो वा गत्वा, प्रद-

क्षिणमागत्याचार्यसमीपमागच्छेत् । ततो वामदेव्यं गायेत् । कौहु-
ळशाखीया अत्र स्नातकायार्हणामित्याहुः ।

इति श्रीशुक्ल श्रीविश्रामात्मज शिवरामविरचितायां गोभिलगृह्यपद्धतौ
सुबोधिन्यां विवाहादिसंस्कारप्रयोगः चतुर्थः प्रकाशः समाप्तः ।

## अथ पञ्चमप्रकाशः ।

### अथोपाकर्मादिकर्मणां प्रयोगः ।

तत्र भाद्रपदमासीयहस्तनक्षत्रे सशिष्यः प्राङ्मुखोदङ्मुखो वा ग्रामान्निष्क्रम्य, नाभ्यूर्द्धप्रमाणं नद्यादिप्रशस्तजलाशयतीरं गत्वा, जलेन तटं संशोध्य, तस्मिन्शुचौ देशे मृत्तिलकुशगोमयाक्षतान्यासादयेत् । ततः पञ्च मृत्पिण्डोद्धरणादि आह्निकप्रकरणोक्तप्रकारेण स्नानविधिना स्नात्वा, तर्पणं विधाय, नद्यादेस्तीरे प्राक्प्रवणमुदक्प्रवणं वा स्थण्डिलं कृत्वा गोमयेनानुलिप्य, गन्ध–पुष्प–पत्राक्षत–धूप–दीप–नैवेद्यादीन्पूजासम्भारांस्तत्र संस्थाप्य, यज्ञियवृक्षजं पीठं सकुशं प्रागग्रं उदगग्रं वा तत्र संन्यस्य, तस्मिन्पीठे द्वादश दर्भवटून् संन्यसेत् ।

तत आचम्य प्राणानायम्य, गायत्र्याभिमन्त्रितेनोदकेन उपहारान्सम्प्रोक्ष्य, देशकालौ सङ्कीर्त्य, "छन्दसामाप्यायनपूर्वकयातयामत्वसर्वारिष्टनिवृत्तिसकलमङ्गलावाप्तिकामो वेदोपाकरणकर्मणि गौतमादिसप्तर्षीणां अरुन्धतीप्रवचनकर्तृ गोभिलाचार्य गणपति दुर्गासहितानां(१) पूजातर्पणादिकमहं करिष्ये" इति सङ्कल्प्य, ऋष्यादीनामावाहनं कुर्यात् । इममिन्द्रेति गौतमोऽनुष्टुप् गौतमः आवाहनस्थापने विनियोगः । इति सर्वत्र । इममिन्द्रेति साम पठित्वा "गौतम इहागच्छेह तिष्ठेति" आवाहनस्थापने

(१) केषाञ्चिन्मते अरुन्धती गणेश गोभिलाचार्य प्रवचनकर्तृ दुर्गाः इति क्रमो विवक्षितः ।

कुर्यात्। ततः-

५ ४ ३२३ ३ ५ २२ १ २ १ २ १ ३ २

इमामिन्द्रसुतम्पिबा। ज्येष्ठाममा। तिर्यंमदा२म्। शुक्रा।

३२ ५ २ २ १ २ १ ३२ २ ३२ ५

औहो २३४ वा। स्यत्वाभ्यक्षरन्। धारा। औहो २३४ वा।

३ २ ३२ ५ ४ ४

ऋता। औहो २३४ वा। स्यसा ५ दनाइ। हो ५ इ। डा॥ गौतम इहागच्छेह तिष्ठ।

अग्निं दूतेति भरद्वाजो गायत्री भरद्वाजः आवाहनस्थापने विनियोगः।

५ २ २ १ २ २ २ २ १२

अग्निं दूताम्। वृणी महाइ। होतारा२३म्वी। श्ववेदसाम्।

१ २ १ २ २ २ १ २ १ २

अस्यया २३ ज्ञा। आ। औ ३ होवा। स्यासुक्रतुम्। इडा २३ भा

१

३४३। ओ २३४५ इ। डा॥ भरद्वाज इहागच्छेह तिष्ठ। (१)

असाविसोम इति विश्वामित्रोऽनुष्टुप् विश्वामित्रः आ-

३ ४२ ३२ ४ ५ २ २ ३ ५

वाहनस्थापने वि०। असाविसोमइन्द्रते। शाविष्ठा २३४ धृ।

२ १ २ २ १ २२ १ २ १ ३

ष्णो ३ आगा ३ ही। आत्वापृणा २३ हा ३। क्तुई २ न्द्रा २३४

५ १ २ ३ ५ ४ ४

याम्। रजाः। सूर्यो वा ओ २३४ वा। नरा ५ श्मिभीः। हो

५ इ। डा॥ विश्वामित्रेहागच्छेह तिष्ठ।

३ २

पिबासुतस्येति जमदग्निर्बृहती जमदग्निः आवाहन०। पिबा-

---

(१) आत्वासहेति भरद्वाजो बृहती भरद्वाजः आवाहन०।

५२ २ २ १ २ १ २ २ २ २

आत्वा सहा। स्रमाशा १ ता २ म्। यूक्तारथे हिरण्यये।

१ २ १ २ २ १ २ १

ब्रह्मायू १ जा २ः। हारयायि। द्रकायिशा १ यिना २ः। वहा

२ १ ३ ५२ २ ३ ५

न्तु १ सो २३। मा २ पा २३४ औहो वा। ता २३४ ये॥

२ — १ —१२ २
सुतस्य रसिनोमत्स्वाहाउ । ना२ः । इन्द्रा २ गोमता २३ः । हाउ ।
२ १२९ १ २१७ — १ २ २ २ १
आपिर्नो२ बो । धिसाधमा२ । दियवृधा२३ । हाउ । अस्मा६
२ ३२ १ ^ ३ ५२ २ २ ३
अवा२३ । हा । तुते३ हो२ । या २३४ औ होवा । धिय ऊ
१ १ १ १
२३४५ ॥ जमदग्ने इहागच्छेह तिष्ठ ।

२१
इममीति वसिष्ठोऽनुष्टुप् वसिष्ठः आवाहन० । इममी २३ ।
४५४ ५ ४ ५ २ १७ — १ २
द्रसुतं पिब । ज्येष्ठाम् । अमा२र्त्तायम्मादा२म् । शुक्रास्यत्वा२ ।
१ ^२ ५ १ २ ३ ५ १ २ ३ ५
भिया२क्षा २३४रान् । धाराओ २३४ वा । आर्त्ताओ २३४ वा ।
४ ४
स्यसा ५ दनाइ । हो ५ इ । डा ॥ वसिष्ठेहागच्छेह तिष्ठ ।

५
कश्यपस्येति कश्यपोऽनुष्टुप् कश्यपः आवा० । कश्यपस्यसु-
५ १ २ २ १ २ ३ ४२ ३ ४ ५
वर्विदा६ ए । यावाहुः स । युजावा१ इती२३४ । ययोर्विश्वमपि ।
३२ १ २ २ १ १ ^ ३ ५२ २
व्रता३म् । यज्ञान्धी३राः । निचा२३ । आ२ या२३४ औहोवा ।
३ ६
ऊ२३४पा ॥ कश्यपेहागच्छेह तिष्ठ ।

५ २ १२
बृहद्वयेति अत्रिरनुष्टुबत्रिः आवाहन० । बृहद्वयाः । हिमाना
२ १ २२ २१२ २ १ २ १ २ ७
२३ वाइ । आर्चादेवा । य अग्ना २३ या इ । यं मित्रन्न । माश-
— १ २ २ ४ ५ ४ ५
स्ताया २ इ । मर्त्तासो ३ दा ३ । धिरोवा । पू ५ रो ६ हाइ ॥
अत्रेहागच्छेह तिष्ठ ।

३ २
इम ँ स्तोममिति कुत्सो जगत्यरुन्धती आवाहन० । इम ँ
३ ५ २ ^३ ५ १ २२ १ २ १ ३ २
स्तो २३४ माम् । अर्हाते २३४ जा । तावेदसे ३ । होइ । रथा-

३ ५ २ ^३ ५ १ २११ २ १ ३ २
मी २३४ वा। सम्माहे २३४ मा। मानीषया ३। होइ। भद्रा-
३ ५ २^३ ५ १ २ १ २ १
ही २३४ नाः। प्रमाती २३४ रा। स्यास ँ सदे ३। होइ।
३ २ ३ ५ २^३ ५ १ २ १ २
अग्नाइसा २३४ ण्याइ। माराइषा २३४ मा। वायन्त वा ३।
१
हो २३४५ इ। डा॥ अरुन्धतीहागच्छेह तिष्ठ।

२
इष्कर्तारमध्वरेति अग्निः पङ्क्तिः प्रवचनकर्ता आवाहन०। इष्क-
१२ २ १ २ २ २ १ २ १ २ १ २ २ १
र्त्तारम। इडा। सुवः। इडा। ध्वरस्य प्रचे। इडा०। तसङ्क्षय-
२ २ २११ २२१ २ २१ १२ २
न्तम्। इडा०। राधसोमहः। इडा०। रातिवामास्य। हा ३१
२ १ २ २ १ २
उवा २३। सुभगांमाहिम्। हा ३१ उ वा २३। इषं दधासि।
२२ २ २
हा ३१ उवा २३। सानासि ँ रायिम्। हा ३१ उवा २३।
३ ५ २ ३ ५
सू २३४ वाः। इह। हा ३१ उवा २३। ज्यो २३४ तीः॥
प्रवचनकर्तः इहागच्छेह तिष्ठ।

४ ५
हावास्मेति सोम उष्णिक् गोभिलः आवाहन०। हावास्मा।
३ ५ २^३ ५ १ ^ ३
भ्या २३४ न्त्वा। वासूवी २३४ दाम्। अभा २ यिवा २३४
५ ३ २ ३ ५ ३ ५ १२ २ २१ २ ३ २ १
णीः। अनाओ २३४ वा। षा २३४ ता। गोभिष्टेव। णमभिवा
२ २ ३
२३। सयामसिहो २३४५ इ। डा॥ गोभिल इहागच्छेह तिष्ठ।

२र
आतून इति गौरीवितिर्गायत्री गणपतिः आवाहन०। आ-
२ २ १ २ १ २२ १ २ २
तूनआ। द्रक्षुमा २३ न्ताम्। चाइत्रङ्ग्राभा २३ ँ हाइ। सङ्गृ
— २ २२ ३ ५ १ — २ १
२ भाया। महाहस्तो २३४ हाइ। दक्षा २ इणाइना। महा २३।

^ ३ ५र २ १ २ १११
हा २ स्ता २३४ औहोवा । दक्षिणे ३ ना २३४५ ॥ गणेश
इहागच्छेह तिष्ठ ।

५४र ५
उभेयदिन्द्र इति श्येनो जगती दुर्गा आवाहन० । उभे यदि-
४र५४ १ २ १ २ २३ २
न्द्ररोदसाई । आ २३ पा । प्राथ उषा ३१ उवा २३ । इव आ ।
१र १ २ ३ १ २ २ १ २ २
महान्तं त्वा माहाइनाम् । संम्रा ३ हो । जञ्चर्षणा ३१ उवाये ३ ।
२ २ २१र २ — १ २ २
ना ३ मा । देवी जनित्रियाजी १ जाना २ तु । भद्रा ३ हो ।
१ २ २ २
जानित्रिय जा ३१ उवा २३ । ए ३ । जनदा ३१ ॥ दुर्गे इहा-
गच्छेह तिष्ठेति ।

एवमावाहनस्थापने कृत्वा अक्षतानादाय, वाक् मन इति
१
मित्रावरुणौ गायत्री प्राणः प्रतिष्ठाकरणे विनियोगः । ॐ वाक् ।
२र१ २र१र २र१र २ १ २ १ २ १ २ १ २ १र २ १
मनः प्राणः प्राणोऽपानो व्यानश्चक्षुः श्रोत्रं शर्म वर्म भूतिः प्रतिष्ठा ।
एता एव समहाव्रताः सर्वा वा एता विराजो दशिनी प्रथमा
विंशिनी द्वितीया त्रिंशिनी तृतीयैषा वै परमा विराड्यच्चत्वारिं-
शद्रात्रयः पङ्क्तिर्वै परमा विराट् परमायामेव विराजि प्रतितिष्ठन्ति ।
गौतमादिसप्तर्षयः अरुन्धतीगणेशगोभिलाचार्यप्रवर्चनकर्तृदुर्गास-
हिताः सुप्रतिष्ठिता वरदा भवन्त्वित्युच्चार्याक्षतान्प्रक्षिपेत् । (१)

ततः प्रणवादिचतुर्थ्यन्तनमोन्ततत्तन्नाममन्त्रैः प्रत्येकं पूजा
कार्या । ऋषिर्विप्रेत्युशना त्रिष्टुप् ऋषयः पूजने विनियोगः ।
२ ३ १ २ ३ १र २ ३ २ ३ २ ३ २ ३ १ २ १ २
"ॐ ऋषिर्विप्रः पुर एता जनानामृभुर्धीरउशना काव्येन । साचि-
३ १ २ ३ १ २ ३ २ २ ३ २ ३ १ २
द्विवेद निहितं यदा सामपीच्य ३३ गुह्यं नामगोनाम् ।" इति

(१) अत्र ऋषिर्विप्रेति मन्त्रेण स्वस्य ऋषीणां च षोडशा-
ङ्गेषु न्यासं कुर्यादित्याचारः ।

मन्त्रेण "गौतमाय नमः इति" च "आसनं समर्पयामि"(१) । एवं पाद्यं(२), अर्घ्यमाचमनीयं(३), मधुपर्कं, पुनराचमनीयम् । ततः स्वस्वमन्त्रैः पञ्चामृतेन स्नपनम् ।

५ ४
चक्रं यदस्येति अथर्वा विराडिन्द्रः पयःस्नाने वि० । ॐ चक्रं
५ २ ४ २ ५ ४ २ १र २ २ १ २ २
यद्स्याप्स्वानिषत्ताम् । उतोतदस्मैमध्विच्चच्छा २३ द्यात् । पृथि॰

---

(१)आसनं । को अद्येति अमहीयुस्त्रिष्टुप् कः सूर्यो वा
५ २ २ ५ १ २
आसने विनि० । कोअद्ययुङ्क्ते धुरिगाऋतस्या ६ ए । शिमी॰
२ २ २ २ १ २ २२ १ २र २ २ २ १ २
वतोभा मिनोदुर्हणा २३ यून् । आसन्नेषामप्सुवाहोमयो २३ भून ।
१ २ २ २ २ २ २ ५
यएषां भृत्याममृणधत्सजाई वा ३ उवा ३ । ऊ ३४ पा ॥
२ २ २ २ १ २ २ ^ ३ ५ २ १
(२)पाद्यं । पदंदेवा औहोहाई । स्यामाइहू २३४ षाः । अना॰
५ १र २ २ ३२ ४२ ५ १ ३ ५
धा २३४ हा । ष्टा मिरुता ३४ । औहो वा । इहा २३४ हाइ ।
२ ^ ३ ५ २ १र २र १र ७ २ २ ३र ४र ५ १ ३
उहुवा २३४ भीः । भद्राम्रू । याईवोपा ३४ । औहोवा । इहा० ।
३ग २ ५र ६ ४
औहो ३१२३४ । हूकू । एहिया ३ हा । हो ५ ऽइ । डा ॥
(३)अर्घ्यम् । आघायेत्यस्येध्मवाहो गायत्र्यग्नीन्द्रौ अर्घ्य॰
५र २ २ ४ ५ २ १ २
दाने विनि० । आघाये अग्निमिन्धाताई । स्तृणन्ति बर्हिरानु॰
२ १र ३र २ १ १ ५ ४
षाक् । येषामिन्द्रोयुवा इहा । ऊवाइ । ऊवो २३४ । वा । सा ५ खो
५ ५ २ ४ ५ १ ^ ३ २ ३
६ हायि ॥ आचमनीयं । तद्वौहोवा । गाया २ । सुताइसा २३४
५ २ १र २ २ २ २ — १ २ २
चा । पुरुहूता । यसात्वा १ ना २ यि । शंयत् । हा । औ ३ होइ ।
३ ५ १ ^ ३ ५र २ २ १
गा २३४ वाइ । ना २ शा २३४ औहोवा । ए ३ । किने २३४५॥

२१ २१ २ १ २ २ १ २ १२ २२
ब्यामतिषितंयदू २३ धाः । पयोगो २३ पू । आदधाओषधीषु ।
१ २ १
इडा २३ भा ३४३ । ओ २३४५ इ । डा ॥ इति गौतमादिभ्यो
दुग्धस्नानम् ।

दधिक्राव्ण इति अग्निरनुष्टुप् दधिक्राव्णः दधिस्नाने
५ ५ ४२ ५२ २ ४ १
वि० । ओहाइ । दधिक्राव्णो अकारिषं । ओहाइ । ओहाइ ।
१ २ २ १ २ १ २ २ १२ ५
जिष्णोरश्वस्य वाजिना २३ हाइ । सुरभिनो मुखाका २३ रात् ।
१ २ १ १ २ १२
प्रना २३ हाइ । आयू २३ हो । षिताररा २३ इषा ३४३ त् ।
१
ओ २३४५ इ । डा ॥ इति दधिस्नानम् ।

घृतवतीति वरुणो जगती द्यावापृथिव्यौ घृतस्नाने त्रिनि० ।
४ ३ ५ ४ २ ३ ४२ ५२ ५ २ १ २ २ २
घृतव । ता ३ इ भुवनानाम् । अभिश्रिया । उर्वीपृथ्वीमधुदुघेसुपे-
२ १२ २ २२ १ १
शसा २३ हाइ । द्यावापृथिवीवरुणा । स्याधर्मणा २३ हाइ ।
२ १ २ १ २२ १२ २ २
विष्काभा २३ इते । आजरे । भूरि । राये ३ । तसाउवा
२ १ २ १ २ २२ २२ ३ १ १ १ १
३ । ए ३ । इन्दुः समुद्रमुर्वि या विभाती २३४५ ॥ इति घृत-
स्नानम् ।

सपूर्व्यो इति प्रजापतिरनुष्टुप् इन्द्रः मधुस्नाने वि० ।
५२ २ २ ५ २२ १ २ २ २ २
सपूर्व्योमहोना ६ मे । वेनः क्रतू ३ भाइरानजे ३ । हा ३ हा ।
५ २ २ १ — २ २ ५२ १ २
औ ३ हो ३ वा । आयिही २ । यस्य द्वारा ३ मानुष्पिता ३ ।
२ २ ५ २ २ १ — १ २ २ ५
हा ३ हा । औ ३ हो ३ वा । आयिही २ । दोइवेषु धा ३। औ
२ २ १ — २ १ ^ ३ ५२
३ हो ३ वा । आयिही २ । यआ २३ । ना २ जा २३४ औ
२ २ १ ३ १ १ १ १
होवा । मधुश्चुता २३४५ः ॥ इति मधुस्नानम् ।

रसन्तेति इषोवृधीयो गायत्र्यथर्वणौ शर्करास्नाने वि० ।
५ र २१ १ २ १ — २ १ २ १
रसन्तेमाइ । ऽत्रो अर्यमा । पिबन्तुवा २ । हृणः कवाइ । पवमाना
— २ १ १ ३ ५र र २ १र २
२ । स्यम । रु २ ता २३४ औहोवा । इषोवृधे १ ॥ इति शर्क-
रास्नानम् ।(१)

२
अपां व्रतस्यापत्निष्टुबापो देवता वरुणस्नाने वि० । हाउ ।
१र२ २ १ र २ २ र१ र २ २ र
३ । ऐरयत् । ३ । अपः समैरयत् । ३ । भूतमैरयत् । ३ । अपा-
र र र र २ र र र
ङ्गर्भोग्निरिडा । पाङ्गर्भोग्निरिडा । २ । पृथिव्या गर्भोग्निरिडा । ३ ।
१ र २ १ २ २ र १ र २ १
समन्यायन्त्युपयन्ति या २३ न्याः । समानमूर्वन्नद्यः स्पृणा २३
२ १ र र र २ १ २ १र र
न्ती । तमूशुचि ँ शुचयो दीदिवा २३ ँ साम् । अपान्नपातमुप-
२ १ २ र १र २ २ १ र
यन्तिया २३ पा ३ः । हा उ । ३ । ऐरयत् । ३ । अपः समैर-
२ २ १ र ५ २ र र १ र र र
यत् । ३ । भूतमैरयत् । ३ । अपाङ्गर्भोग्निरिडा । पाङ्गर्भोग्निरिडा ।
२ र र र २ र र २
२ । पृथिव्या गर्भोग्निरिडा । २ । पृथिव्या गर्भोग्निरिडा ३ । हाउ-
२र २ १ २ १ र २ १ २ १ २र १र
वा । ए । अग्निः शिशुक्रः । ए । शुक्रः शिशुक्रः । ए । तेजः
२ १ २ १ २र १र २ १र र २ २र १ २ १ २र१ २र
शक्रस्य शर्क । ए । तेजः समाः समीचीः । ए । तेज उषोन जा
१ २र १ र ३ १ १ १ १
रः । ए । सुवर्ज्योती २३४५ः । इति शुद्धोदकस्नानम् ।
२ १ १ २
ऋषिर्विप्रेति आचमनीयम् । वस्त्रम्—अभिवस्त्रा । सुवस ।

---

(१) त्वमिमा ओषधीरित्यस्य सोमो विराट् सोमः ओषध्या
१ र २र र १ १ २ १र २
स्नाने वि० । त्वमिमा ओषधीः सोमविश्वाः । त्वमपो अजनय-
१ र १ र २र १ २ १ र २र १ र २
स्त्वङ्गाः । त्वमातनोरुर्वन्तरिक्षम् । त्वञ्ज्योतिषा वितमो ववर्थ ॥

२ ३ ४ ५  २ १  २ १ र  २ ३ ४ ५  २ १
नानियर्षा । अभिधेनूः । सुदुघाः । पूयमानाः । अभिचन्द्रा ।
२ १ र  २ ३ ४ ५  २ १  २ १  २
भर्तवे । नोहिरण्या । अभियश्वान् । रथिनः । द्दा ३४३ यि ।
२  ४
वा ३ सो ५ मा ६५६ः ॥

यज्ञोपवीतमन्त्रः । यज्ञोपवीतमिति मन्त्रस्य प्रजापतिस्त्रिष्टुप् छन्दः यज्ञोपवीतदेवता, यज्ञोपवीतमसीति प्रजापतिर्यजुः यज्ञोपवीत-देवता यज्ञोपवीतदाने वि० । ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्स-हजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । ॐ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ।(१)

ततश्चन्दनम् । अर्चतेति प्रियमेधानुष्टुबिन्द्रः, अर्चन्त्यर्कमिति मरुतस्त्रिष्टुबिन्द्रः, गायन्तित्वेति शिखण्ड्यनुष्टुबिन्द्रः गन्धदाने
२ र ^ ३  ५  २ र  ४  २ ३ ५
वि० । अर्चतप्रार्चताना २३४ राः । प्रियमेधा ३ सो ३ अर्चत ।
२ १  ४  २र ३ ५  १  ३ २  २
अर्चन्तु पू २३ त्रा ३ काउत । पुरमिद्धा २३ । ष्णुवा ३ र्चा ५
४ ५  ४  १  २ १  २  १ २र
ता ६५६ ॥१॥ अर्चन्तिया । कंमरुतः सुवा २३ र्काः । आस्तो-
१  २ १र र  २  २  २  ५
भताइ । श्रुतोयुवास आयिन्द्रा ३ उत्रा ३ । ऊ ३४ पा ॥ २ ॥
३ २  ३ २  ४ ५ २  २  ३ २
गाया ३१ । तित्वा ३१२३४ । गाय । त्रा ३ यिणाः । अर्चा ३१ ।

---

(१)यज्ञोपवीतम् । ब्रह्मजज्ञानमिति ऋजुस्त्रिष्टुप् ब्रह्मा
१  २ र  १
यज्ञोपवीतदाने विनि० । ब्रह्मा । ब्रा २३ ह्मा । जज्ञानम्प्रथमम्पुरा-
२ १  २  र र १ २  १
स्तात् । विसाई । वा २३ ईसी । मतः सुरुचोवेनआवः । सबू ।
२ र र १ २ १
सा २३ बू । ध्निया उपमा अस्य वायिष्ठाः । सताः । सा २३
२ र १ २  १
ताः । चयोनिमसतश्चवाई वा ३४३ः । ओ २३४५ ई । डा ॥

तिया ३१२३४ । क्रम । क्रा ३ यिणाः । ब्रह्मा ३१ । णस्त्वा ३१२३४ । शत । क्रा ३ ताउ । उद्वा ३१ । शमा ३१२३ यि । वया ५ यि मिरावि । हो ५ इ । डा ॥ ३ ॥ गायन्तित्वोहाइ । गायात्री २३४ णाः । अर्चन्त्यर्कमा १ र्की ३ णाः । अर्चन्तियो २३४ हा । क्रमार्की २३४ णाः । ब्रह्माणस्त्वाशता १ क्रा ३ तो । ब्रह्माणस्त्वो २३४ हायि । शताक्रा २३४ ताउ । उद्व ९ शमिवया १ ईमी ३ । उद्व ६ शमो २३४ हायि । वया ३ यिमा ५ यिरा ६५६ यि ॥४॥ गायन्तित्वा गायत्रिणआ । अर्चन्त्यर्कमर्का २३ यिणाः । ब्रह्माणस्त्वा २ हो १ यि । शतक्रा २३ ताउ । उद्व ९ शमिवया १ यिमी ३ रे । उद्व ९ शा २३४ मी । वाया ३ उवा ३ । उप । मा ऽ २ यिरो ३५ हाइ ॥ ५ ॥

अक्षन्नमीमद इति यमः पङ्क्तिः पितरः अक्षतदाने वि० । अक्षन्नमीमद । तही ३। आ २३४ । वप्रिया अधू । षता । अस्तोषतस्वभानवः । विप्राना २३ वी । ष्ठायामती । योजान्नु ३ वा ३ यि । द्रा २ ता २३४ औहोवा । हा २३४ री ॥ इति साम्ना अक्षतान् समर्पयामि ।

पवित्रन्त इति आदित्यो जगती ब्रह्मणस्पतिः पुष्पदाने वि० । पवित्रन्तेविततं ब्रह्मणस्पते ३ । हुवे ३३ । हुवे २३ । होवा ३ हा

३ । हायि । असुर्गान्नाणि पर्येषि विश्वता २३ : । हुवे० । अत-
सतनूर्नतदा २ मो अश्नुते ३ । हुवे० । शृतासइद्वहन्तः सन्तदा
२ शत । हुवे २३ । हुवे २३ । हावा ३ हा ३ । हा ३४ । औ-
होवा । अर्को देवाना २ म्परमेवियो २ मा २३४५ न् । अर्कपुष्पं
भवत्यन्नं वै देवा अर्क इति वदन्ति रसमस्य पुष्पमिति सरसमेवा-
न्नाद्यमवरुन्धेऽर्कपुष्पेण तुष्टुवानः ॥

त्वेषास्तेति यमोऽनुष्टुबग्निः धूपदाने त्रि० । त्वेषास्ते २३
धूम ऋण्वति हाउ । दिविसञ्छुक्रा ३ आतातो ३ : । सूरोनहि
हाउ । द्युतातूवा ३ म् । कृपापवा हाउ । करोचा २३ सा ३४३
यि । ओ २३४५ इ । डा ॥

पवमानो अजीजन इति वसिष्ठो गायत्री वैश्वानरः दीपदाने
त्रि० । पावा । मानो । अजीजा २३४ नात् । दिवश्चित्राम् ।
नतन्यतुम् । ज्योतिर्वैश्वा २३ । ना २ रा २३४ औहोवा । बृ
२३४ हात् ॥(१)

(१)दीपं । दिवया ओवा इति विश्वेदेवास्त्रिष्टुबिन्द्रः दीपदाने०।
दिवया । ओवा । औ ३ हो ३ वा । उदुब्रह्मा । णी ३ ऐर ।
तश्रवस्या । इन्द्रं ८ समा । र्ये ३ मह । यावसिष्ठा । आयो विश्वा ।
नी ३ अप । सा तताना । दि वया । ओवा । औ ३ हो ३ वा ।
उपश्रोता । मईव । तो ३४३ । वा ३ चा ५९ सा ६५६ ई ॥

२१ २
फलेति कश्यपस्त्रिष्टुबिन्द्रः फलदाने० । हाउ । ३ । फाल्फ
२ १२ १ १२ २ — १
ल्फल्फल्फल्फल् । ३ । हाउ । इन्द्रनरोनेमधि ताहवा २ न्ताइ ।
१ २ २ २ — १ २ २ २ २ — १
यत्पार्यायुनजतेधिया २ स्ताः । शूरो नृषाताश्रवसश्चका २ माइ ।
२ २ २ २ — १ २२ १ २
आगोमति व्रजेभजातुवा २ न्नाः । हाउ । ३ । फाल्फल्फ-
ऽ १ १ १ १ १
ल्फल्फल्फल् । ३ । हाउ । ३ । वा । मनः सुवारिडा २३४५ ॥

२२
अहमन्नेति दिशोऽनुष्टुप् विश्वेदेवाः नैवेद्यदाने वि० । हाउ । ३ ।
२ १ २ १ २२ १ २ २१ १ १ २२ १
अहमन्नं । ३ । अहमन्नादो । हमन्नादो । २ । हंविधारयो । २ ।
१ २२ १ २२ १ २२ ४ २ १ १ २ १२ २ १ २ २
हंविधारयः । हाउ । ३ । यद्वर्चो हिरण्य । स्या । यद्वा वर्चो गवामु ।
१ २ १ २ १ २२ १ १ १२ २ १ २२ १ २२
ता । सत्यस्य ब्रह्मणो व । चाः । तेन मासꣳ सृजाम । साइ । हाउ ।
२ १ १ २२ १ ऽऽ २ २२ २१
३ । अहमन्नं० पूर्ववत् । हंविधारयः । हाउ । ३ । वा । ए । अह-
२१ २२ १ २२ १ २२ २१ २ ३ १ १ १ १
मन्नमहमन्नादोहं विधारयः । ३ । ए । अहꣳसुवर्ज्योती २३४५ः ॥(१)

---

(१)ताम्बूलं । पान्तमाव इति वीतहव्योऽनुष्टुबिन्द्रः ताम्बूल-
४२ ५ ४र ५र ४ ५ ४ २ १ २ १ २ २
दाने० । पान्तमावो अन्धसाः । इन्द्रामाभि । प्रगायाता ३ । हा
२ २ २ १ २ २ २
३ हायि । विश्वासाहम् । शताक्रातु ३ म् । हा ३ हाई । म ४
१ २ २ २ १ ^ ३ ५र २
हायिष्ठश्चा ३ । हा ३ हा । षणा २ यि । ना २३४ औहोवा ।
२ ५
ऊ ३२३४ पा ॥

५र४
दक्षिणां । देवो व इत्यग्निर्बृहत्यग्निः दक्षिणादाने० । देवो
२ ४ ५र २र१र २ २ १२ १ २ — २
३ वो ३ द्रविणोदाः । पूर्णांविवष्टासिचं । उद्वा १ सिञ्चा २ । ध्व-
१ २२ १ ७ — १ २ २ २ १ २
मुपवापृणध्वं । आदिद्वोदे २ । वओहते । इडा २३ भा ३४३ ।
१
ओ २३४५ ई । डा ॥

२ १ २ १
उद्यंलोकेति इन्द्रोऽनुष्टुप् सूर्यः आरात्रिके वि० । उद्यंलोका-
२ १ २ १ १२१ २ १ २ १ २ २२
नरोचयः । हाथि । इमां लोकानरोचयः । हाइ । प्रजाभूतमरो-

---

१ २ १ २ १ २ १
नमस्कारं । अधिप । ताई । मित्रप । ताई । क्षत्रप । ताई ।
२ १ २ — — १ १ १ २ २ १ १ २
स्त्रः पताई । धनपता २ ई । ना २ माः । नमोन्नाय नमोन्नपतय
२ २ १२ २१ २ १२ २ १ २२ १ २ १२ २२ १ २२ १ २ १२
एकाक्षाय चावपन्नादाय च नमोनमः । रुद्राय तीरसदे नमः स्थिराय
२ १ २ २ १ २ १ २ २ १ २ २ १ २ १ २ २
स्थिरधन्वने नमः प्रतिपदाय च पटरिणे च नमस्त्रियंबकाय चक्र ।
१ २ २ १ २ २ १ २ २ २ १ २ २ १ २ १ २ २
पर्दिने च नम आश्रायेभ्यश्च प्रत्याश्रायेभ्यश्च नमः कृण्येभ्यश्च
२१ २ १ २ १ २ २ १ २ १ २ १ १ २ १ २ १ २२
विरिम्फेभ्यश्च नमः संवृते च विवृते च । अव ज्यामिव धन्वनो-
१ २ २ १ २२ १ २ २ १ २ २ २ १ २ १
विते मन्युन्नयामसि मृड तान्न इह अस्मभ्यं । इडा२३ भा । यइदं-
२ २ १ ३ ५
विश्वम्भूतं । युयो ३। आउ । वा २३। ना २३४ माः ॥

नमोऽहमाय मोहमाय म२ँहमाय धून्वते तापसाय पुनर्वसवे नमो नमो मौञ्ज्यायौर्म्याय सौम्याय शम्याय शिवाय नमो नमः पाराय सुपाराय महापाराय पारदाय पारविन्दाय नमो नमः पुरुषाय सुपुरुषाय महापुरुषाय मध्यमपुरुषायोत्तमपुरुषाय ब्रह्मचारिणे नमो नम इति ।

प्रदक्षिणं । परिकोशं इति भरद्वाज उष्णिक् सोमः प्रद-
२ १ २ ४ ५ १२ २ २ १२ २
क्षिणाकरणे० । परिको ३ शम्मधुश्चुताम् । सोमः पुनानो अर्ष-
१ २ १ ३ २२ १ २२ २ १ २ ३
ति । हाये ३ । अभिवा २३४५ । णीर्ऋषीणा२ँ स । सानाओ
५ २ ५
२३४ वा । षा २३४ ता ॥

१ १ २ १ २१ १ ^ ३ ५ २ २
चयः। होयि। विश्वम्भूतमरोचयः। हो २ हा २३४ औहोवा।
१२ २ ३ १ १ १ १
धर्मोज्योती २३४५ः॥

ऋषिर्विप्रेति प्रदक्षिणा, स्तुतिः, नमस्कारः, आशीर्वादश्च।(१)
२१ १२ २ १ २ २ २ १ २२ १२ १ २१
आदित्यैरिन्द्रः सहसीषधातू ३। इहा। आदित्यैरिन्द्रः सगणो-
१ २ १ २ १ २२ १२ २ १ १
मरुद्भि ३ः। इहा। अस्मभ्यं भेषजाकरा ३ तू। इहा। ए ३।
२ १
भद्रम्। गोतमस्य भद्रं भवत्याशिषमेवास्मा एतेनाशास्ते सामहि सत्याशीरेतेन वै गोतमो जमानं महिमानमगच्छत्तस्माद्ये च पराञ्चो गोतमाद्ये चार्वाञ्चस्त उभये गोतम ऋषयो ब्रुवते।

एवं गौतमं सम्पूज्य, भरद्वाजं पूजयेत् एवमेव च, अथवा पदार्थानुसमयेन गौतमादीन् पूजयेत्। तत्रैवं प्रयोगः। गौतमादिभ्यः पाद्यम्। एवं भरद्वाजादिभ्यः। एवमन्ये उपचाराः। धूपदीपनैवेद्यादिकं तन्त्रेण। गौतमादिसप्तर्षिभ्यः अरुन्धतीप्रवचनकर्तृगोभिलाचार्यगणपतिदुर्गासहितेभ्यो धूपं समर्पयामि। एवं दीपादि। एवं पूजां परिसमाप्य, नाभिमात्रे जले सशिष्याः स्तिष्ठन्त ऋजुकुशैर्देवतीर्थेन ऋषीनुच्चैः सिञ्चन्तस्तर्पयेयुः।

ॐ कारो महाव्याहृतयो गायत्री ब्रह्मा वेदा देवा ऋषयश्छन्दास्याचार्यास्तृप्यन्तामिति समुदायेन त्रिः सन्तर्प्य, ततः ॐ
१ २
ॐ कारस्तृप्यतु। ॐ भूर्भुवस्वः महाव्याहृतयस्तृप्यन्तु। ॐ तत्स-

---

१ २ १ २ १ २ २ २ २
(१) आर्षीः। विप्राः पुरएता। जना ३ नाम्। ऋभु-
२ १ २ १ २ २ ३ ४ १ २ ७
र्धीराः। उशना। काव्येना। सचिद्विवेदनिहिताम्। यदा २३
२ २ १ २ २ २ १ २ २ ४
साम्। अपाविचियाम्। गुहियम्। ना ३४३। मा ३ गो ५ ना
६५६ म्॥

३ १–२र ३ १ ५ ३ १ २ ३ १ २ ३ १ २
वितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ।
गायत्री तृप्यतु । सोमꣳ राजानमिति ऋगन्ते–

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २उ
ॐ सोमꣳ राजानं वरुण मग्निमन्वारभामहे । आदित्यं
३ १ २ २ २ ३ १ २ ३ १ २
विष्णुꣳ सूर्यं ब्रह्माणञ्च बृहस्पतिम् । ब्रह्मा तृप्यतु ।

अग्न आयाहि दशतया ऋगन्तैरर्द्धर्च्चैर्वा सन्तर्प्य, ततो वेदा-स्तृप्यन्तु ।

२ ३ १ २ ३ १ २ ३ २ ३ १ २ १– २र
ॐ अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता
३ १ २ १ २ ३ २ ३ २ ३ १ २ २ ३ २
सत्सि बर्हिषि ॥१॥ त्वमग्ने यज्ञानाꣳ होता विश्वेषाꣳ हितः । देवे-
३ १ २ ३ १ २ ३ २ ३१ २ ३ १ २ ३ १ २
भिर्मानुषे जने ॥२॥ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।
३ २ ३१ २ ३ १२ ३ २ ३ १ २ ३ १ २ ३ १ २
अस्य यज्ञस्य सुक्रतुम् ॥३॥ अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया ।
१ २ ३ १– २र १ २ ३ १ २ ३ २ ३ १ २
समिद्धः शुक्र आहुतः ॥४॥ प्रेष्ठं वो अतिथिꣳ स्तुषे मित्रमिव
३ २ २ ३ २३ १– २र १ २ ३ १ २ ३ १–
प्रियम् । अग्ने रथं न वेद्यम् ॥५॥ त्वं नो अग्ने महोभिः पाहि
२र ३ १ २ ३ २ ३ १– २र २ ३१– २र ३
विश्वस्या अरातेः । उत द्विषो मर्त्यस्य ॥६॥ एह्यषु ब्रवाणि
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २ ३ १–
तेऽग्न इत्थेतरा गिरः । एभिर्वर्द्धास इन्दुभिः ॥७॥ आते वत्सो
२र ३ १ २ ३ १ २ २ ३ १ २ ३ २
मनो यमत्परमाच्चित्सधस्थात् । अग्ने त्वाꣳ कामये गिरा ॥८॥
१ २ ३ १ २ ३ १–२र ३ १ २ ३ १– २र ३ १ २
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः ॥९॥
२ ३ १ १२ ३ १ २ ३१ २ ३२ ३ १– २र ३ २
अग्ने विवस्वदाभरास्मभ्यमूतये महे । देवो ह्यसि नो दृशे ॥१०॥
वेदास्तृप्यन्तु ।

एवं उपास्मै गायतेति उत्तराध्यायेन देवास्तृप्यन्तु ।

१ २ ३ १२ ३ १ २ २ २ ३ १– २र
ॐ उपास्मै गायतानरः पवमानायेन्दवे । अभि देवाꣳ इय-

क्षते ॥ अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः । देवं देवाय देवयु ॥ स नः पवस्व शङ्गवे शं जनाय शमर्वते । शᳬँ राजन्नो- षधीभ्यः ॥१॥

दविद्युतत्या रुचा परिष्टोभन्त्या कृपा । सोमाः शुक्रा गवाशिरः ॥ हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत् । सीद- न्तो वनुषो यथा ॥ ऋधक्सोम स्वस्तये सञ्जग्मानो दिवा कवे । पवस्व सूर्यो दृशे ॥२॥

पवमानस्य ते कवे वाजिन्त्सर्गा असृक्षत । अर्वन्तो न श्रवस्य- वः ॥ अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये । अवावशन्त धीतयः ॥ अच्छा समुद्रमिन्दवोऽस्तं गावो न धेनवः । अग्म- न्नृतस्य योनिमा ॥ ३ ॥

अग्न आयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ॥ तं त्वा समिद्भिरङ्गिरो घृतेन वर्द्धयामसि । बृहच्छोचाय विष्ठय ॥ स नः पृथु श्रवाय्यमच्छा देव विवाससि । बृहदग्ने सुवीर्यम् ॥ ४ ॥

आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजाᳬँसि सुक्रतु ॥ उरुशᳬँसा नमो वृधा मह्ना दक्षस्य राजथः । द्राघिष्ठाभिः शुचिव्रता ॥ गृणाना जमदग्निना योना वृतस्य सीदतः । पातᳬँ सोममृतावृधा ॥ ५ ॥

१ २ ३ २उ ३ २ ३ २ ३ १ २ ३२ २उ ३ १ २ ३
आयाहि सुषुमा हित इन्द्र सोमं पिबा इमम्। एदं बर्हिः सदो
१ २ १ २ ३ २ ३ २ ३ १ २ ३ १ २ २ ३ १ २
मम ॥ आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना । उप ब्रह्माणि
३ १ २ २ २ ३ १ २ ३ १ २ ३ १ २ ३ १
नः शृणु ॥ ब्रह्माणस्त्वा युजा वयꣳ सोमपामिन्द्र सोमिनः । सुता-
२
वन्तो हवामहे ॥ ६ ॥

१ २ ३ १ २ ३ २ ३ २उ ३ १ २ ३ १ २
इन्द्राग्नी आगतꣳ सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातꣳ
३ २ ३ २ १ २ ३ १— २र ३ १ २ ३ १ २ ३ १
धियेषिता ॥ इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः । अया
२ ३ २ ३ २ १ २ ३ १ १ ३ १ २ ३ १ २ ३ १ २ १—
पातमिमꣳ सुतम् ॥ इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे । ता
२र ३ १ २
सोमस्येह तृम्पताम् ॥ ७ ॥

३ १ २ ३ १र २र ३ १र २र ३ २उ ३
उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे । उग्रꣳ शर्म
२ ३ १ २ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १र
महिश्रवः ॥ स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः । वरिवोवित्प-
२र ३ १— २र ३ २उ ३ २ ३ १ २ १
रिस्रव ॥ एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् । सि-
२
षासन्तो वनामहे ॥ ८ ॥

३ १ २ ३ १ २ ३ १— २र १ २ ३ १—
पुनानः सोम धारयापो वसानो अर्षसि । आ रत्नधा यो-
२र ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १र २र ३ १— २र ३ २
निमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥ दुहान ऊधर्दिव्यं मधु प्रियं
३ २ ३ २ ३ १ २ २ ३ १ ३ १ २ ३क २ ३ १ २ ३ १
प्रत्नꣳ सधस्थमासदत् । आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो
१ ३ २
विचक्षणः ॥ ९ ॥

१—२र ३ २ ३ २३ १ २ ३ १ २ ३ २ ३ १— २र २ ३
प्रतुद्रवपरिकोशं निषीद नृभिः पुनानो अभिवाजमर्ष । अश्वं
१ २ ३ १ २ ३ २ ३ १ २ ३ १र ३ १ २ ३ १ २
न त्वा वाजिनं मर्जयन्तोऽच्छा बर्हिरशनाभिर्नयन्ति ॥ स्वायुधः पव-
३ १— २र ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
ते देव इन्दुरशस्तिहा वृजना रक्षमाणः । पिता देवानां जनिता

सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः ॥ ऋषिर्विप्रः पुरएता
जनानामृभुर्धीर उशना काव्येन। स चिद्विवेद निहितं यदासाम-
पीच्य३ं गुह्यं नाम गोनाम् ॥ १० ॥

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशानमस्य जगतः
स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ न त्वावाँ अन्यो दिव्यो न पार्थिवो
न जातो न जनिष्यते। अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्त-
स्त्वा हवामहे ॥ ११ ॥

कया नश्चित्र आ भुवदूती सदावृधः सखा। कया शचिष्ठया
वृता ॥ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः। दृढा चि-
दारुजे वसु ॥ अभी षु णः सखीनामविता जरितॄणाम्। शतं भवा
स्यूतये ॥ १२ ॥

तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः। अभि वत्सं न स्व-
सरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥ द्युक्षं सुदानुं तविषीभिरावृतं
गिरिं न पुरुभोजसम्। क्षुमन्तं वाजं शतिनं सहस्रिणं मक्षू गो-
मन्तमीमहे ॥ १३ ॥

तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये। बृहद्गायन्तः सुत
सोमे अध्वरे हुवे भरं न कारिणम् ॥ न यं दुध्रा वरन्ते न स्थिरा मुरो
मदेषु शिप्रमन्धसः। य आदृत्या शशमानाय सुन्वते दाता जरित्र
उक्थ्यम् ॥ १४ ॥

१ २   १ २   ३ १ २   ३   १ २   १ २ २   १ २
स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे
३ २   ३ १ २ ३ १ २   ३ २उ   ३ १ २   १ २ ३ २ ३ १
सुतः ॥ रक्षोहा विश्वचर्षणिरभि योनिमयोहते । द्रोणे सधस्थमा-
२   ३ १ २ ३ १ २   ३ १ २   ३ १ २   २ ३ १ २
सदत् ॥ वरिवो धातमो भुवो मꣳहिष्ठो वृत्रहन्तमः । पर्षिराधो
३ १ २
मघोनाम् ॥ १५ ॥

१ २ २ १ २   ३ १ २   ३ १ २ ३   १ २   १ २ ३ १
पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः । महिद्युक्ष-
२ ३ १ २   १ २   ३ १ २ ३ १ २ ३ २ १ २ ३ २ ३ १ २
तमो मदः ॥ यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा स्वर्विदः ।
२ ३ १ २   ३क २र ३ २उ   ३ २ ३ १ २
ससुप्रकेतोअभ्यक्रमी दिशोच्छावाजंनै तषः ॥ १६ ॥

२ ३ १ २ ३ २ ३ १र २र   ३ १र   ३ २ ३ २ ३ १ २
इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः । श्रुष्टे जातास इन्दवः
३ १ २   ३ १र २र   ३ १र २र   २ २   २ ३ १ २
स्वर्विदः ॥ अयं भराय सानसिरिन्द्राय पवते सुतः । सोमो जैत्रस्य
३ १ २ ३ २   २ २उ   ३ २ ३ २ ३ १ २   ३ २
चेतति यथाविदे ॥ अस्येदिन्द्रो मदेष्वा ग्राभङ्गृभ्णाति सानसिम् ।
१ २ ३ १ २   ३ १ २ ३ २
वज्रं च वृषणं भरत्समप्सुजित् ॥ १७ ॥

३ २ २   २ १ २   ३ १ २   ३ १ २   २ ३ १ २
पुरोजिती वो अन्धसः सुताय मादयित्नवे । अपश्वानꣳश्न-
३ १ २   ३क २   १   २र   ३ १ २   ३ १ २
थिष्टन सखायो दीर्घजिह्वयम् ॥ यो धारया पावकया परिप्रस्यन्दते
३ २   २ ३ २ ३ १र   २र   २ ३ १ २ ३ २उ ३   १ २   ३ १ २
सुतः । इन्दुरश्वो न कृत्व्यः ॥ तन्दुरोषमभीनरः सोमं विश्वाच्या
३ २   ३ १ २ ३ १ २
धिया । यज्ञाय सन्त्वद्रयः ॥ १८ ॥

३ २   ३ १ २   ३ १ २   ३ १ २   ३ २उ   ३ २ ३
अभि प्रियाणि पवते च नो हितो नामानि यह्वो अधि येषु
१ २   १र   २र   ३ २   ३ २उ २ २ ३ १ २   ३ २
वर्द्धते । आ सूर्यस्य बृहतो बृहन्नधिरथं विष्वञ्चमरुहद्विचक्षणः ॥
३ १ २ ३ १   २ ३ १ २ ३ २ ३ १र   २र ३ २ ३ १र   २र
ऋतस्य जिह्वा पवते मधुप्रियं वक्ता पतिर्धियो अस्या अदाभ्यः ।

दधाति पुत्रः पित्रोरपीच्य ३ नाम तृतीयमधिरोचनं दिवः ॥ अव
द्युतानः कलशा ँ अचिक्रदं नृभिर्येमाणः कोश आ हिर-
ण्यये । अभी ऋतस्य दोहना अनूषता धित्रिपृष्ठ उषसो वि-
राजसि ॥ १९ ॥

यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे । प्र प्रवयममृतं
जातवेदसं प्रियं मित्रंनश ँ सिषम् ॥ ऊर्जोन पात ँ सहिनाय-
मस्मयुर्दाशेम हव्यदातये । भुवद्वाजेष्ववितो भुवद्वृध उत त्राता
तनूनाम् ॥ २० ॥

एह्यूषु ब्रवाणि तेऽग्न इत्थे तरा गिरः । एभिर्वर्द्धासइन्दुभिः ॥
यत्र क्व च ते मनो दक्षं दधस उत्तरम् । तत्र योनिं कृणवसे ॥
नहि ते पूर्त्तमक्षिपद्भुवन्नेमानां पते । अथादुवो वनवसे ॥ २१ ॥

वयमु त्वामपूर्व्यस्थूरन्न कच्चिद्भरन्तोऽवस्यवः । वज्रिञ्चित्र
ँ हवामहे ॥ उप त्वा कर्मन्नूतये स नो युवोग्रश्चक्राम यो धृषत् ।
त्वामिद्ध्यवितारं ववृमहे सखाय इन्द्र सानसिम् ॥ २२ ॥

अधाहीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे । उदेवग्मन्त
उदभिः ॥ वार्णत्वायव्याभिर्वर्द्धन्तिशूर ब्रह्माणि । वावृध्वा ँ सं चि-
दद्रिवो दिवे दिवे ॥ युञ्जन्ति हरि इषिरस्य गाथयो रौरथ उरुयुगे
वचो युजा । इन्द्रवाहा स्वर्विदा ॥ २३ ॥ देवास्तृप्यन्तु ॥

ततो भूरादिसप्तव्याहृतिभिः सन्तर्प्यान्ते ऋषयस्तृप्यन्तु ।

ॐ भूस्तृप्यतु । ॐ भुवस्तृप्यतु । ॐ स्वस्तृप्यतु । ॐ महस्तृप्यतु । ॐ जनस्तृप्यतु । ॐ तपस्तृप्यतु । ॐ सत्यं तृप्यतु । ॐ ऋषयस्तृप्यन्तु ।

ततो अग्न आयाहि इत्यादि तत्तच्छन्दस्काभिर्ऋग्भिश्छ-
२ ३
न्दांसि तर्पयेयुः । अग्न आयाहिऋगन्ते, गायत्री तृप्यतु । ॐ अग्न
१ २ ३१ ५ ३ २ ३ १ २ १२ २२ ३ १ २
आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥
गायत्री तृप्यतु ।

एवं पुरुत्वान्ते उष्णिक् । एवं प्रथमया तर्पणम् । न तु गायत्रीं, उष्णिहं इत्येवम् ।

३ १ ५ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २उ
पुरु त्वा दाशिवाङ्वोऽचेरिरग्ने तव स्विदा । तोदस्येव शरण
३ १ २
आमहस्य ॥ उष्णिक् तृप्यतु ।

२ ३ १ २ ३ १ २ ३ ५ ३ १ २ १ २ ३ १२ २२ ३
अग्न ओजिष्ठमाभर द्युम्नमस्मभ्यमध्रिगो । प्रनो रायेपनीयसे
२ ३ १ २ ३ १ २
रत्सि वाजाय पन्थाम् ॥ अनुष्टुप् तृप्यतु ।

३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २ ३२ ३ १ २
यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे । प्र प्रवयममृतं
३ १२ ३ २ ३ १२ २२
जातवेदसं प्रियं मित्रं नश ॐ सिषम् ॥ बृहती तृप्यतु ।

३ २ ३ १ २ ३२ ३ १ २ ३क २ १ २
स्वादोरित्था विषूवतो मधोः पिबन्ति गौर्यः । या इन्द्रेण
३ १ २ ३२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यम् ॥ पङ्क्तिस्तृप्यतु ।

१ २ ३ १ २ ३ १२ २२ ३ १ २
आ जुहोता हविषामर्जयध्वं निहोतारं गृहपतिं दधिध्वम् ।
३२ ३ १२ २२ ३ १ २ ३ १ २ ३२ ३क २
इडस्पदे नमसारात हव्यँ सपर्यता यजतं पस्त्यानाम् ॥ त्रिष्टुप् तृप्यतु ।

चित्र इच्छिशोस्तरुणस्य वक्षथो नयो मातरावन्वेति धातवे । अनुधायदजीजनदधा चिदाववक्षत्सद्योमहि दूत्य ३ चरन् ॥ जगती तृप्यतु । छन्दाꣳसि तृप्यन्तु ।

प्रवो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवया मरुत् । प्रशर्द्धाय प्रयज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे ॥ अतिजगती तृप्यतु ।

प्रोष्वस्मै पुरो रथ मिन्द्राय शूषमर्चत । अभीकेचिदुलोककृत्सङ्गे समत्सु वृत्रहा । अस्माकं बोधि चोदितानभन्तामन्यकेषां ज्याका अधिधन्वसु ॥ शक्करी तृप्यतु ।

तवत्यं नर्यं नृतोप इन्द्रप्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् । यो देवस्य शवसा प्रारिणा असुरिणन्नपः । भुवो विश्वमभ्यदेवमोजसा विदे दूर्जꣳ शतक्रतुर्विदेदिषम् ॥ अतिशक्करी तृप्यतु ।

त्रिकद्रुकेषु महिषो यवाशिरन्तु विशुष्मस्तृम्पत्सोममपिबद्विष्णुना सुतं यथा वशम् । सईं ममादमहि कर्म कर्त्तवे महामुरुꣳ सैनꣳ सश्चद्देवोदेवꣳ सत्य इन्दुः सत्यामिन्द्रम् ॥ अष्टिस्तृप्यतु ।

अस्तु श्रौषट् पुरो अग्निं धिया दध आनुत्यच्छर्द्धो दिव्यं वृणीमह इन्द्रवायू वृणीमहे । यद्धक्राणा विवस्वते नाभा सन्दाय नव्यसे । अधप्रनूनमुपयन्ति धीतयो देवाꣳ अच्छान धीतयः ॥ अत्यष्टिस्तृप्यतु ।

२ १ २ १र र २ १र २

घर्मः प्रवृक्तस्तन्वासमानृधद्वृधे ॥ धृतिस्तृप्यतु ।

१ २ १ २ १ २ र र १

सर्पत प्रसर्पत सुवर्गमेतेवयम् ॥ अतिधृतिस्तृप्यतु । अति-
च्छन्दाꣳसि तृप्यन्तु ।

१ २ १ र २ १ २ १ २ १र २

सं यमन्न व्यायमन्वियमन्नसमायमन् ॥ कृतिस्तृप्यतु ।

२ र १र २ र २१ २१२१२१

चराचराय बृहत इदं वाममिदं बृहत् ॥ प्रकृतिस्तृप्यतु ।

१र २र ३ २ १ २

द्यौरक्रान्भूमिरततनत्समुद्र ꣳ समचुकुपत् ॥ आकृतिस्तृप्यतु ।

१र २ १ २ १ २ १र २ १ २

ज्योतिष्पत स्वः पतान्तरिक्षं पृथिवीं पञ्च प्रदिशः ॥ विकृति-
स्तृप्यतु ।

१ र २ १ २ १ र २ १ २

मनोजायिद्धृदयमजयिद्दिन्द्रो जयिदहमजैषम् ॥ सङ्कृतिस्तृप्यतु ।

१र २ र१ रर२१ र र २ १ र

प्रागन्यदनु वर्त्ततेरजोपागन्यतमो पेषति भ्यसा ॥ अभिकृति-
स्तृप्यतु ।

१ २ १ १ २ १ १ २ १ १ २ १

आधिप । ताइ । मित्रप । ताइ । क्षत्रप । ताइ । स्वः पताइ ।

१ २ — — १

धनपता २ यि । ना २ माः ॥ उत्कृतिस्तृप्यतु । विच्छन्दा ꣳसि
तृप्यन्तु ।

ततो वंशीयानामृषीणां प्रतिनामभिः प्रथमया तर्पणम् । तद्यथा-

ॐ नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नम आचार्येभ्यो नम ऋषिभ्यो नमो देवेभ्यो नमो वेदेभ्यो नमो वायवे च मृत्यवे च विष्णवे च नमो वैश्रवणाय चोपजाय च । इत्याद्युपजायचेत्यन्तं कृताञ्जलि पठित्वा, नमस्कृत्य तर्पयेत् । ॐ शर्वदत्तस्तृ० । रुद्रभूतिस्तृ० । त्रातस्तृ० निगडस्तृ० । गिरिशर्मास्तृ० । ब्रह्मवृद्धिस्तृ० । मित्रवर्चास्तृ० । सुप्रतीकस्तृ० । बृहस्पतिगुप्तस्तृ० । भवत्रातस्तृ० । कुस्तुकस्तृ० । श्रवणदत्तस्तृ० । सुशारदस्तृ० । ऊर्जयꣳस्तृ० । भानुमाꣳस्तृ० ।

आनन्दजस्तृ० । शाम्बस्तृ० । काम्बोजस्तृ० । मद्रगारस्तृ० । सातिस्तृ० । सुश्रवास्तृ० । प्रातरह्नस्तृ० । केतुस्तृ० । मित्रविन्दस्तृ० । सुनीथस्तृ० । सुतेमनास्तृ० । अंशुस्तृ० । अमावास्यास्तृ० । राधस्तृ० । गातास्तृ० । संवर्गजितस्तृ० । शाकदासस्तृ० । विचक्षणस्तृ० । गर्दभीमुखास्तृ० । उदरशाण्डिल्यस्तृ० । अतिधन्वास्तृ० । मशकस्तृ० । स्थिरकस्तृ० । वसिष्ठस्तृ० । वासिष्ठस्तृ० । सुमन्त्रस्तृ० । शूषस्तृ० । राल्लस्तृ० । हातिस्तृ० । इन्द्रोतास्तृ० । वृषशुष्णस्तृ० । निकोथकस्तृ० । प्रतिथिस्तृ० । देवतरास्तृ० । शवसस्तृ० । अग्निभूस्तृ । इन्द्रभूस्तृ० । मित्रभूस्तृ० । विभण्डकस्तृ० । ऋष्यशृङ्गस्तृ० । कश्यपस्तृ० । अग्निस्तृ० । इन्द्रस्तृ० । वायुस्तृ० । मृत्युस्तृ० । प्रजापतिस्तृ० । ब्रह्मा तृ० ।

ततोऽग्न्यादीनां तर्पणम् । अग्निस्तृ० । प्रजापतिस्तृ० । विश्वेदेवास्तृप्यं० । ॐ कारस्तृ० । वषट्कारस्तृ० । महाव्याहृतयस्तृप्यं० । गायत्री तृ० । ब्रह्मातृ० । विष्णुस्तृ० । वेदास्तृप्यं० । देवास्तृप्यं० । ऋषयस्तृप्यं० । मुनयस्तृप्यं० । आचार्यास्तृप्यं० । पुराणानि तृप्यं० । छन्दाꣳसि तृप्यं० । यज्ञास्तृप्यं० । अध्ययनं तृप्य० । द्यावापृथिव्यौ तृप्येताम् । अन्तरिक्षं तृ० । अहोरात्राणि तृप्यं० । मासास्तृप्यं० । ऋतवस्तृप्यं० । संवत्सरस्तृ० । वरुणस्तृ० । समुद्रास्तृप्यं० । नद्यस्तृप्यं० । गिरयस्तृप्यं० । क्षेत्राणि तृप्यं० । वनानि तृप्यं० । ओषधयस्तृप्यं० । वनस्पतयस्तृप्यं० । पशवस्तृप्यं० । नागास्तृप्यं० । उरगास्तृप्यं० । सुपर्णास्तृप्यं० । वयाꣳसि तृप्यं० । गावस्तृप्यं० । वसवस्तृप्यं० । रुद्रास्तृप्यं० । आदित्यास्तृप्यं० । मरुतस्तृप्यं० । सिद्धास्तृप्यं० । साध्यास्तृप्यं० । गन्धर्वास्तृप्यं० । पिशाचास्तृप्यं० । यक्षास्तृप्यं० । रक्षाꣳसि तृप्यं० । भूतानि तृप्यं० । नक्षत्राणि तृप्यं० । अश्विनौ तृप्येताम् । अप्सरसस्तृप्यं० । चतुर्विधभूतग्रामस्तृ० । मरीचिस्तृ० । अत्रिस्तृ० । अङ्गिरास्तृ० । पुलस्त्यस्तृ० । पुलहस्तृ० । क्रतुस्तृ० । प्रचेतास्तृ० । वसिष्ठस्तृ० । भृगुस्तृ० । नारदस्तृ० । सप्तर्षयस्तृप्यं० ।

अरुन्धती तृ० । गोभिलाचार्यस्तृ० । एवमादयः एते मे स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्पिताः ।

अथापसव्येन तिलैर्द्विगुणदर्भैः पितृतीर्थेन । ॐकारो महाव्याहृतयो गायत्री ब्रह्मा वेदा देवा ऋषयः पितरश्छन्दांस्याचार्यास्तृप्यन्ताम् । एवं त्रिः । राणायनिस्तृ० । शाट्यमुग्रस्तृ । व्यासस्तृ० । भागुरिस्तृ० । औगुंडिस्तृ० । गौल्गुलविस्तृ० । भानुमानौपमन्यवस्तृ० । काराटिस्तृ० । मशको गार्ग्यस्तृ० । वार्षगण्यस्तृ० । कौथुमिस्तृ० । शालिहोत्रस्तृ० । जैमिनिस्तृ० । त्रयोदशैते मे सामगाचार्याः स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्पिताः ।

शटिस्तृ० । भाल्लविस्तृ० । काल्लबविस्तृ० । ताण्ड्यस्तृ० । वृषाणकस्तृ० । रुरुकिस्तृ० । शमबाहुस्तृ० । अगस्त्यस्तृ० । बष्कशिरास्तृ० । हूहूस्तृ० । दशैते मे प्रवचनकर्त्तारः स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्पिताः ।

कव्यवालस्तृ० । नलस्तृ० । सोमस्तृ० । यमस्तृ० । अर्यमास्तृ० । अग्निष्वात्तास्तृप्यं० । सोमपास्तृप्यं० । बर्हिषदस्तृप्यं० । यमस्तृ० । धर्मराजस्तृ० । मृत्युस्तृ० । अन्तकस्तृ० । वैवस्वतस्तृ० । कालस्तृ० । सर्वभूतक्षयस्तृ० । औदुम्बरस्तृ० । दध्नस्तृ० । नीलस्तृ० । परमेष्ठी तृ० । वृकोदरस्तृ० । चित्रस्तृ० । चित्रगुप्तस्तृ० ।

तत उत्तरवंशीयानाम् । ॐ आचार्येभ्यो नमस्कृत्वाथ वंशस्य कीर्तयेत् । स्वधा पूर्वेषां भवति नेतायुर्दीर्घमश्नुत इत्युक्त्वानुक्रामेद्वंशमाब्रह्मणो । अर्यमभूतिस्तृ० । भद्रशर्मा तृ० । पुष्ययशसस्तृ० । सङ्करस्तृ० । अर्यमराजगोभिलस्तृ० । पूषमित्रगोभिलस्तृ० । अश्वमित्रगोभिलस्तृ० । वरुणमित्रगोभिलस्तृ० । मूलमित्रगोभिलस्तृ० । वत्समित्रगोभिलस्तृ० । गौल्गुलवीपुत्रगोभिलस्तृ० । बृहद्वसुगोभिलस्तृ० । राधस्तृ० ।

ततो राधादिद्वितीयखण्डोक्तांस्तर्पयेत् । राधस्तृ० । गाता तृ० ।

संवर्गजितस्तृ० । शाकदासस्तृ० । विचक्षणस्तृ० । गर्दभीमुखास्तृ० । उदरशाण्डिल्य० । अतिधन्वा० । मशक० । स्थिरक० । वसिष्ठ० । वासिष्ठ० । सुमन्त्र० । शुष० । राल० । हृति० । इन्द्रोता० । वृषशुष्ण० । निकोथक० । प्रातिथिस्तृ० । देवतरस० । शवस० । अग्निभुव० । इन्द्रभुव० । मित्रभुवस्तृ० । विभण्डक० । ऋष्यशृङ्ग० । कश्यप० । अग्नि० । इन्द्र० । वायु० । मृत्यु० । प्रजापति० । ब्रह्मा । तृप्यतु ।

ततः समाचारान्निवीती सनकादीन्सन्तर्प्याचम्य, ॐ सनकस्तृ० ।२। सनन्दनस्तृ० ।२। सनातन० ।२। कपिल० ।२। आसुरि० ।२। वोढुस्तृ० । पञ्चशिखस्तृप्यतु ।२। ऋषीन्सम्पूज्य, ऋषिश्राद्धं कृत्वा, ऋषिमाल्यमादाय, प्लवसाम्ना तद्ब्राह्मणेन च सम्प्लाव्य (उत्सर्गप्रयोगे २७४ पृष्ठे प्लवसाम द्रष्टव्यम् ), निमज्याचम्य, अरिष्टसामानि पठित्वा (१७ पृष्ठे द्रष्टव्यानि), ऋषीनादाय गृहमागच्छेयुः । इति ऋषितर्पणप्रयोगः ।

## अथोपाकर्मप्रयोगः ।

तत्र येषां ब्रह्मचारिणां पूर्वव्रतान्तश्रुतस्य वेदस्य प्रथमारम्भस्तेषामत्र वृद्धिश्राद्धम् । आनीतानृषीन् शुभपीठाद्यासने कुशोपरि संस्थाप्य पाद्यादिभिरुपचारैः सम्पूज्याचम्य, शालाग्नेः पश्चादुपविश्याग्नौ समिधं हुत्वा, न्यञ्चकरणपरिसमूहने कृत्वा, ब्रह्माणमुपवेश्याज्यतन्त्रेणादनम् । तत्र विशेषः–रक्षा, धाना, दधि आसाद्य, सम्प्रोक्ष्य, देशकालौ सङ्कीर्त्य "छन्दोयातयामत्वनिवृत्तये नित्यविधिरूपमुपाकर्माङ्गहोममहं करिष्ये" इति सङ्कल्प्याऽग्निं परिस्तीर्य, इध्ममभ्याधायाज्यं संस्कृत्य, पर्युक्ष्य, प्रपदवैरूपाक्षं जपेत् । ततः स्रुवं सम्मार्ज्य, व्याहृतित्रयं हुत्वा, पङ्क्त्याकारेण उपविष्टान् शिष्यान्पाठयेद्गायत्रीं संहितावत् ।

ॐ "तत्सवितुर्वरेण्यम्" इति प्रथमम् । ततो "भर्गो देवस्य धीमहि" । ततो "धियो यो नः प्रचोदयात्" । ततोऽर्द्धर्चशः । पुनः

४र५ ४ ५र ४५४ २१
समस्ताम् । ततः सावित्रं साम । ॐ सोमꣳ राजानं वरुणाम् । अग्नि-
२र र १ २ २ २र १ २ १२ १ २
मन्वार भामहे ३। होवा २हायि । आदित्यं विष्णुꣳ सूर्यम् । होवा
२ २ १र २ १ २ २ १ २ २
३ हायि । ब्रह्माणा २३ आ ३। होवा ३ हायि । बृहा ३ उवा
३ ५
३। पा २३४ तीम् ॥

४
ततो वेदस्य आदितः पर्वनामानि पाठयेत् । ॐ ओग्नायि ।
५ २ ४ ५ ५ ४
तद्धोहोवा । उच्चा । एवम् । ( पृष्ठे २७०, पङ्क्तौ १६ द्रष्टव्यानि । )
३ १ २ ३ १ २ ३ २ ३ १ २
ततः छन्दोहोमः । ॐ अग्न आयाहि वीतये गृणानो हव्यदातये ।
१ ५र ३ १ २
निहोता सत्सि बर्हिषि स्वाहा । एवं हुत्वा । इदं गायत्र्यै न ममेति
त्यागः, एवं सर्वत्र ।

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
ॐ पुरु त्वा दाशिवाꣳ वोचेरिरग्ने तव स्विदा । तोदस्येव
३ २ ३ १ २
शरण आ महस्य स्वाहा । इदं उष्णिहे० ।

२ ३ १ २ ३ १ २ ३ २ ३ १ २ १ २ ३ १र २र
ॐ अग्न आजिष्ठमाभर द्युम्नमस्मभ्यमध्रिगो । प्र नो राये पनी
३ २ ३ १ २ ३ १ २
यसे रत्सि वाजाय पन्थाम् स्वाहा । इदं अनुष्टुभे० ।

३ १ २ २ १ २ ३ १ २ ३ १ १ २ ३ २ ३
ॐ यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे । प्र प्र वयम-
१ २ ३ १ २ ३ २ ३ १र २ र
मृतं जातवेदसं प्रियं मित्रं नशꣳ सिषम् स्वाहा । इदं बृहत्यै० ।

३ १ ३ १ २ ३ २ ३ १ २ ३क २ १र २र
स्वादोरित्था विषूवतो मधोः पिबन्ति गौर्यः । या इन्द्रेण
३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यं स्वाहा ।
इदं पङ्क्त्यै० ।

१ २ ३ १ २ ३ १र २र ३ १ २
आ जुहोता हविषामर्जयध्वं नि होतारं गृहपतिं दधिध्वम् ।

३२ ३१२ २र २ १ २ ३ १ २ ३ २ क३ २र
इडस्पदे नमसा रातहव्यᳪ सपर्यता यजतं पस्त्यानाम् स्वाहा ।
इदं त्रिष्टुभे० ।

३ २उ ३ १ २ ३ २ ३ २उ ३ १ २ ३ २ ३ १ २
चित्र इच्छिशोस्तरुणस्य वक्षथो नयो मातरावन्वेति धातवे ।
३ १र २र ३१ २ २ २ ३ १२ ३ १र २र ३ २ २
अनुधायदजीजनदधाचिदा ववक्षत्सद्योमहि दूत्यᳪ चरन् स्वाहा ।
इदं जगत्यै० ।

१ २३२ ३१ २ २ १ २ ३ १ २ ३ १ २ ३ १ २
प्रवोमहे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एव या मरु-
१र २र३ १र २र ३ १ २ ३१ २ ३ १ २ ३ १ २ ३
त् । प्रशर्द्धाय प्रयज्यवे सुखादये तवसे भन्दादिष्टये धुनि व्रताय
१ २
शवसे स्वाहा । इदं अतिजगत्यै० ।

१ २ ३ १र २र ३ १ २ ३ १ २ ३ २
प्रोष्वस्मै पुरोरथ मिन्द्राय शूषमर्चत । अभि केचिदुलोक कृत्
३ २ ३ १ २ ३ १ ३ १ २ ३ १र २र ३ १ २ ३
सङ्गे समत्सुवृत्रहा । अस्माकं बोधि चोदितानभन्तामन्यकेषां ज्या-
२उ ३ १ २
का अधि धन्वसु स्वाहा । इदं शक्वर्यै० ।

२ ३ १र २र ३ १ २ ३ १र २र ३ २ ३ १ २ ३ २
तव त्यं नर्यं नृतोप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् ।
२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ २ ३ १ २ ३ १ २ ३
यो देवस्य शवसा प्रारिणा असुरिणन्नपः । भुवो विश्वमभ्य देव
१ २ ३ १र २र ३१ २ ३ १र२र
मोजसा विदेदूर्जᳪ शतक्रतुर्विदे दिषं स्वाहा । इदमतिशक्वर्यै० ।

१ २ ३ २ २र ३ २ ३ १र २र ३
त्रिकद्रुकेषु महिषो यवाशिरन्तु विशुष्मः स्तृम्पत्सोममपिब-
१ २ ३ २ ३ २ १ २ ३ २ ३ २३ १ २ ३ २ ३ १र
द्विष्णुना सुतं यथा वशम् । स ईं ममाद महि कर्म कर्त्तवे महामुरुᳪ
२र ३ २ ३ २ ३ १र २र ३ १र २र
सैनᳪ सश्चद्देवो देवᳪ सत्यइन्दुः सत्यमिन्द्रं स्वाहा । इदमष्ट्यै० ।

२ १ २ ३ २ ३ २ ३ १ २३ २र २र ३ १
अस्तु श्रौषट् पुरो अग्निं धिया दध आनुत्यच्छर्द्धो दिव्यं
२ २१ २ २३ १ २ ३१ २ ३ २ ३ १ २ ३
वृणीमह इन्द्रवायू वृणीमहे । यद्धक्राणा विवस्वते नाभा सन्दाय

१ २ २ ३ २ ३१२ २२ ३ १ २ ३ १ २ ३ २ ३ १२
नव्यसे । अधप्रनूनमुपयन्ति धीतयो देवाꣳ अच्छा न धीतयः
स्वाहा । इदमत्यष्टयै० ।

२१ १ १२ १२१२ २
घर्मः प्रवृक्तस्तन्वा समानृधे वृधे स्वाहा । इदं धृत्यै० ।

१ २ १ २ १ २ २ २ १
सप्यर्तं प्रसर्पत सुवर्गं मे मते वयं स्वाहा । इदमतिधृत्यै० ।

१ २ ३ २ २ १ २ १ २ १२ २
संयमन्न व्यायमान्वियमन्नसमायमन् स्वाहा । इदं कृत्यै० ।

२ २ १२ २ १ २१ २२ १२१ २२
चराचराय बृहत इदं वाममिदं बृहत् स्वाहा । इदं प्रकृत्यै० ।

१२ २२ १२ २ १ २२
द्यौरक्रान् भूमिरततनत्समुद्रꣳ समचुकुपत् स्वाहा । इदमाकृत्यै० ।

१२ २ १२ २२ १ २ १२ २ १ २
ज्योतिष्पत स्वः पतान्तरिक्षं पृथिवीं पञ्च प्रदिशः स्वाहा ।
इदं विकृत्यै० ।

१ २ २ १ २ १ २ २ १ २२
मनो जयिदुद्धृदयमजायिदिन्द्रो जयिदहमजैषं स्वाहा । इदं
संकृत्यै० ।

१२ २ २ १ २ २२ १ २ २२ १ २
प्रागन्यदनु वर्त्तते रजो प्रागन्यतमो पेशति भ्यसा स्वाहा ।
इदमभिकृत्यै० ।

१ २ १ १ २ १ १ २ १ १ २ १
आधिप । तायि । मित्रप । तायि । क्षत्रप । तायि । स्वः पता-
१ २ — २ — १
यि । धनपता २ यि । ना २ माः स्वाहा । इदमुत्कृत्यै० ।

४
ततो गानपर्वादि होमः । यथा—ॐ ओग्नायि स्वाहा । इदमाग्ने-
५ २ ४ ५ ५ ४
याय० । तद्यौहोवा स्वाहा । इदमैन्द्राय० । उच्चा स्वाहा । इदं
२ २ २२ १२
पावमानाय० । पद्यावई स्वाहा । इदमर्काय० । हाउ ।३। आयुः
१२ २ १ २ २ २
।३। सात्यम् ।३। इन्द्रन्नरो स्वाहा । इदं द्वन्द्वाय० । हुवेवाचाम् स्वा-
१ — २ १ २ १
हा । इदं वाचोव्रताय० । ए २। विदामघवन्विदाः स्वाहा । इदं शक्र-

१ २ २ ४र ५
यै० । उच्चाता ३ यिजातमन्धसाः स्वाहा । इदं दशरात्राय० ।
५ र २ ४ १र ३ ४ ५र ४ ५र
वृषाया ३ वस्वधारया स्वाहा । इदं संवत्सराय० । प्रत्यस्मैपिपी
१ २ १ र २र २ १ २
स्वाहा । इदमेकाहाय० । पन्यंपन्यमित्सोतारः । पन्यं पन्योवा
५ ३ २ ४र ५
स्वाहा । इदमहीनाय० । विशः । विशोऽ३वो आतिथायि स्वाहा ।
२ १ २ १ २ १र — १
इदं सत्राय० । प्रत्नं॰ सधस्थमा । होऽ३सदात् स्वाहा । इदं प्राय-
२र १र २र १र २ १ २र
श्चित्ताय० । आभित्वा शूरनोनुमाः स्वाहा । इदं क्षुद्राय० । आ-
र र र १ २ र र
भित्वा शूरनोनुमोवा स्वाहा । इदं दशरात्राय० । पूनानः सोम
र १ २ र र र र र र
धारयोवा स्वाहा । इदं सम्वत्सराय० । उहुवा ओहा औहोवा ।
२ र १ २ १ र ^
पुरोजितायि स्वाहा । इदमेकाहाय० । च्योहम् । प्रसुन्वाना ३
२ र र १
स्वाहा । इदमहीनाय० । मामेममाश्रमिष्मोवा स्वाहा । इदं सत्राय० ।
२र र र र र र र २ र
उहुवा ओहा औहोवा । तंवोदस्मां स्वाहा । इदं प्रायश्चित्ताय० ।
२र र र र र २
औहोयि यज्ञायज्ञावो अग्नया ३ ए स्वाहा । इदं क्षुद्राय० । १९॥

२ ३ १ २ ३ १ २ ३ २
अग्नआयाहीत्यृचं पठित्वा—अग्न आयाहि वीतये गृणानो
३ २ १र २र ३ १ २
हव्यदातये । निहोता सत्सि बर्हिषि स्वाहा । इदं छन्दस्यै न मम ।
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १र २र ३ १ २
इन्द्र ज्येष्ठं न आभर ओजिष्ठं पुपुरिश्रवः । यद्दिधृक्षेम वज्र-
३ १ २ ३ १र २र
हस्त रोदसी ओभे सुशिप्रपप्राः स्वाहा । इदमारण्यै० ।
३ १ २ ३ २ ३ १र २र ३ १ २ १ २
विदा मघवन्विदा गातुमनुशꣳसिषोदिशः । शिक्षा शचीनां
३ १ २
पते पूर्वीणां पुरुवसो स्वाहा । इदं महानाम्नीभ्यः० ।

१ २ ३ १२ ३ १ २ ३ २ ३ १ २
उपास्मै गायता नरः पवमानायेन्दवे । अभि देवाꣳ इयक्षते स्वाहा । इदमुत्तरायै० ।

महन्मे वोचो भर्गो मेऽवोचो यशो मेऽवोचः स्तोमं मेऽवोचो भुक्तिं मेऽवोचः सर्वं मेऽवोचस्तन्माऽवतु तन्मा विशतु तेन भुक्षिषीय स्वाहा । इदं ताण्ड्यब्राह्मणाय० ।

ब्रह्म च वा इदमग्रे सुब्रह्म चास्तां स्वाहा । इदं षड्विंशाय० ।

ब्रह्म ह वा इदमग्र आसीत्स्वाहा । इदं सामविधये० ।

अथ खल्वयमार्षमदेशो भवति स्वाहा । इदमार्षेयाय० ।

अग्निरिन्द्रः प्रजापतिः सोमो वरुणस्त्वष्टाङ्गिरसः पूषा सरस्वतीन्द्राग्नी स्वाहा । इदं देवताध्यायाय० ।

अथातः सꣳहितोपनिषदो व्याख्यास्यामः स्वाहा । इदं सꣳहितोपनिषदे० ।

नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नम आचार्येभ्यो नम ऋषिभ्यो नमो देवेभ्यो नमो वेदेभ्यो नमो वायवे च मृत्यवे च विष्णवे च नमो वैश्रवणाय चोपजाय च स्वाहा । इदं वंशब्राह्मणाय० ।

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय । दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु स्वाहा । इदमुपनिषदे० ।

अथातः स्वरशास्त्राणां सर्वेषां वेद निश्चयम् । उच्चनीचविशेषा द्धिस्वरान्यत्वं प्रवर्त्तते स्वाहा । इदं शिक्षायै० ।

कल्पो ज्योतिष्टोमोऽतिरात्रोकुथ्यः षोडशीकः स्वाहा । इदं कल्पसूत्राय० ।

कल्पसूत्रं यदा नाधीतं भवति तदा दशानां सूत्राणां मध्ये यदधीतं भवति तन्नाम्ना होमः कर्तव्यः ।

अथ वाचोवृत्तिं व्याख्यास्यामः स्वाहा । इदं व्याकरणाय० ।

समाम्नायः समाम्नातः स व्याख्यातव्यस्तमिमं समाम्नायं निघण्टव इत्याचक्षते स्वाहा । इदं निरुक्ताय० ।

अथातश्छन्दसां विचयं व्याख्यास्यामः स्वाहा । इदं छन्दोभ्यो ।

पञ्च संवत्सरमयं युगाध्यक्षं प्रजापतिम् । दिनर्त्वयनमासाङ्गं प्रणम्य शिरसा शुचिः स्वाहा । इदं ज्योतिषामयनं विकल्पाः । इदं सूत्रमध्यगतं भवति तस्मात्प्रसिद्धं अनिषिद्धम् । ज्योतिषं उक्ता कस्मादिदं ग्राह्यं न ग्राह्यमेव तेषामयनं विकल्पाय स्वाहा । इदं ज्योतिषे० ।

ततो व्याहृतिचतुष्टयम् , पुनस्त्रयञ्च हुत्वा, समिदनुपर्युक्षण- यज्ञवास्तुवस्वाहुत्यन्तं कृत्वा, दक्षिणे पाणौ रक्षाबन्धनं हिरण्य-
२र १ २ र
भूषितं यवसर्षपपोटलिकां विचित्रन्तुबद्धाम् । ए । रक्षत नो रक्षि-
१ २ १ २र १ २र र १र
तारो गोपायत गोपायितारः इति मन्त्रेण । "येन बद्धो बली राजा दानवेन्द्रो महाबलः । तेन त्वामनुबध्नामि रक्षे मा चल मा चले-
२२ १ २ १र २ १ २ २ १र
ति" । तुवंयवाइ । छुदाशु २३ षाः । नृःऽपाहि शृ । णुहीगा
२ १ २ २ २ २
२३ इराः । रक्षातो ३ का ३ म् । उता २३ हा ३४३ यि ।
१ ५ ५
त्मा २३४ नो ६ हायि । इत्यनेन वा रक्षाबन्धनम् ।
३ १ २ ३ १ २
ततः सर्वे धानावन्तमिति मन्त्रेण "धानावन्तं करंभिणम-
३ १ २ ३ १ २ १ २ ३ १ २
पूपवन्तमुक्थिनम् । इन्द्र प्रातर्जुषस्व नः ॥" असंस्वादाग्निगीर्य,
३ १ २
अनाचान्ता एव दधिक्राव्ण इति दधि भक्षयेयुः । "दधिक्राव्णो
३ १र २र ३ १ २ ३ २ ३ १ २ ३ २ ३
अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभिनो मुखाकरत् प्र न
१ २
आयूꣳषि तारिषत् ।" ततः समाचान्ताः शिष्याः पङ्क्त्याकारेणोप- विशेयुः । एतस्मिन्नेव काले आचार्योऽपि प्रतिसरबन्धनादि कुर्यात् । तत आचार्यो अग्न आयाहीत्यादिऋक्त्रयं तान्येव त्रीणि सामा-
२ ३ १ २ ३ १ २ २ र
नि स्वपठनादि शिष्यान्पाठयित्वा । ॐ अग्न आयाहि वीतये गृणानो

३ १ २ १२ ३१ ३ १ २ १ २ ३ २ ३ २ ३
हव्यदातये । निहोता सत्सि बर्हिषि ॥१॥ त्वमग्ने यज्ञानाँहोता-
१ २ ३ २ ३ २ ३ १ ३ ३ १ २ ३ ३ ३ १ २ ३ १ २
विश्वेषाँहितः । देवेभिर्मानुषे जने ॥२॥ अग्निं दूतं वृणीमहे होतारं
३ २ ३ २ ३ १ २ ३ १ २ ४ २१ २
विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥३॥ ओग्नायि । आयाही
१ — १ — १ २ २१ २ १ —
३ वोयितोया २ यि । तोया २ यि । गृणानो ह । व्यदातोया २
१ — १ २१ १ १ ^ ३
यि । तोया २ यि । नायि होता सा २३। त्सा २ यिबा २३४
५२२ ३ ६ ४ ६ ४२ ५२ ४ १ १
औहोवा । ही २३४ षी ॥१॥ अग्नआया हिर्वा । तयायि । गृ-
२ १ २ २ १ २ २ २ १ २
णानोहव्यदाता २३ यायि । निहोतासत्सि बर्हा २३ यिषी ।
१ ^ ३ ५२ १ २ १ १११ ४ ५
बर्हा २ यिषा २३४ औहोवा । बर्हा ३ षा २३४५ ॥२॥ अग्न-
४२ ५२ ४ ४ १ २ २ २ २ २ २ ३
आयाहि । वा५यितयायि । गृणानाहव्यदा १ ता ३ ये । निहोता
५ १ २ १ ५ ५
२३४ सा । त्सा २३ यिबा ३। हा २३४ यिषो ६ हायि ॥३॥

एवं पठित्वा, ब्राह्मणभोजनपूर्णपात्रादिसङ्कल्पं कृत्वा, वामदेव्यं गायेत् । इत्युपाकर्मप्रयोगः ॥

## अथोत्सर्गप्रयोगः ।

ततस्तद्दिनमारभ्य भाद्रपदमासीयहस्तादधस्तनपुष्यनक्षत्रं यावद्गृहमानीतानामृषीणां प्रत्यहं पूजनम् । पुष्यनक्षत्रयुतेऽहनि प्रातरेव सशिष्यः प्राङ्मुखो उदङ्मुखो वा ग्रामाद्बहिर्नद्यादौ गत्वा, यथाविधिना ऋषीन्पूजयेत् । तत्र देशकालौ सङ्कीर्त्य "छन्दसामाप्यायनार्थं यातयामत्वदोषनिवृत्तये वेदोत्सर्गकर्मणि ऋषीणां पूजनतर्पणमहं करिष्ये" इति सङ्कल्प्य, आवाहनं विना पूर्ववत् ऋषीन्सम्पूज्य, तथैव तर्पयित्वा, पुनः सम्पूज्य, ऋषीन्प्लव-

१ २ २ २ २ ३
साम्ना प्लावयित्वा । हा । वो ३ हा । वो ३ हा ३ । हा । ओ २३४

५ २ ^३ ५ २ ^३ ५ २ ^
वा । हायि । पूनाना २३४ः सो । माधारा २३४ या । आपो-
३ ५ २ ^३ ५ २ ^३ ५
वा २३४ सा । नो अर्षा २३४ सी । आरत्ना २३४ घाः ।
२ ^३ ५ २ ^३ ५ २ ^३
यो नीमा २३४ त्तों । स्यासीदा २३४ सी । उत्सोदा २३४
५ २ ^३ ५ १ २ २ २ २
यि वो । हायिरण्या २३४ याः । हा । वो ३ हा । वो ३ हा
२ ^ ३ ५ २ ५२ २ २ १ २
३ । हा । ओ २३४ वा । हा ३४ । ओ होवा । ए ३ । अति
१ २२ १२ २ २^३ १ १ २
विश्वानि दुरितातरे मा २३४५ ॥ प्लवोऽन्वहं भवति समुद्रं वा एते प्रस्नान्ति ये संवत्सरमुपयन्ति यो वा अप्लवः समुद्रं प्रस्नाति न स तत उदेति यत्प्लवो भवति स्वर्गस्य लोकस्य समष्ट्या अतिविश्वानि दुरिता तरेमेति यदेवैषां दुष्कृतं दुःश्रुतं तदेतेन तरन्ति ॥ ततो निमज्याचम्य गृहमागच्छेयुः । तत आपुनरुपाकरणाच्छन्दसामनध्यायोऽन्यत्र ब्रह्मयज्ञात् । इत्युत्सर्गप्रयोगः ॥

## अथ पुष्टिकर्मणां प्रयोगः ।

प्रथमारम्भे त्रिरात्रमुपवासः । ततः प्रातः करिष्यमाणगोऽनुमन्त्रणकर्मणः पूर्वेद्युः प्रदोषे सायंहोमानन्तरं वृद्धिश्राद्धम् । "गवां निःकालप्रवेशनकर्माङ्गं नान्दीश्राद्धमहं करिष्ये" इति सङ्कल्पः । ततः प्रातर्होमोत्तरं कुशपाणिः प्राङ्मुख उपविश्याचम्य, प्राणानायम्य, देशकालौ स्मृत्वा "गवां शरीरे सङ्ख्यया च पुष्टिकामोऽहं अरण्यं नीयमानानां गवां अनुमन्त्रणकर्म करिष्ये" इति सङ्कल्प्य, आलोकयन्स्पृष्ट्वा अनुमन्त्रयेत् । इमा मे विश्वतोवीर्य इति प्रजापतिरनुष्टुप् इन्द्रः गवामनुमन्त्रणे विनियोगः ।

इमा मे विश्वतोवीर्यो भव इन्द्रश्च रक्षतम् । पूषंस्त्वं पर्यावर्त्तयानष्टा आयन्तु नो गृहान् ॥

सायं प्रातरागता "इमा मधुमतीर्मह्यमनष्टाः पयसा सह । गाव आज्यस्य मातर इहेमाः सन्तु भूयसीः ॥"

सर्वासां सहानुमन्त्रणस्पर्शनासम्भवादालोकयन्ननुमन्त्रयेत् । इति गोऽनुमन्त्रणाख्यं प्रथमं पुष्टिकर्म ॥

## अथ ललाटलिहनाख्यं पुष्टिकर्म ।

तच्च अधृतगर्भाया गोः प्रथमजातस्य वत्सस्य कर्त्तव्यम् । नात्र वृद्धिश्राद्धम् । त्रिरात्रोपवासाभावश्च । प्रसवानन्तरं मातुः प्रलेहनात्पूर्वं जिह्वया ललाटमुल्लिह्य मनसा पठितमन्त्रेण निगिरयेत् । आचमनादि देशकालौ सङ्कीर्तनान्ते "गवां पुष्टिकामोऽहं ललाट-लिहनाख्यं कर्माहमिति" सङ्कल्पः । गवां श्लेष्मासीत्यस्य प्रजापतिर्यजुः श्लेष्मा ललाटलिहने विनियोगः । ॐ गवां श्लेष्मासि गावो मयि श्लिष्यन्तु । इत्याद्यं पुष्टिकर्म ॥

## अथ द्वितीयम् ।

सर्वासां गवां प्रसवोत्तरमेतत्कर्म । तत्र पूर्वं त्रिरात्रमुपवासः । कर्माहे प्रातर्वृद्धिश्राद्धे "गोपुष्टिकर्माङ्गं वृद्धिश्राद्धमिति" सङ्कल्पः । सायंहोमोत्तरं रात्रौ गवामावासगृहेऽग्निं संस्थाप्य, अध्यर्थमथितं दधि उष्णीकृते नवनीते अधःस्थितं वा विलयनमेतयोरन्यतरेण होमः । अत्र क्षिप्रहोमविधिः । देशकालौ स्मृत्वा "गवां पुष्टिकामोऽहं होमं करिष्ये ।" अधिश्रयणं विना उत्पवनादिसंस्कारान्विधाय, स्रुवं संमार्ज्य, एकामाहुतिं जुहुयात् । अस्य प्रजापतिरनुष्टुप् पूषा विलयनहोमे विनियोगः ।

सङ्गृहण सङ्गृहाण ये जाताः पशवो मम । पूषैषा१ शर्म यच्छतु यथा जीवन्तौ अप्ययात् स्वाहा । इदं पूष्णे न ममेति त्यागः । ततोऽनुपर्युक्षणादि वामदेव्यगानान्तम् । इति द्वितीयं पुष्टिकर्म ॥

## अथ तृतीयम् ।

पूर्वं त्रिरात्रमुपवासः । पूर्वाह्णकालः । "पुष्टिकर्माङ्गं नान्दीश्राद्धमहं करिष्ये" इति सङ्कल्पः । ततः पूर्वाह्णे आचमनादि देशकालकीर्तनान्तं विधाय "गवां पुष्टिकामोऽहं वत्समिथुनयोः कर्णे

लक्षणमहं करिष्ये" इति सङ्कल्प्य, ताम्रमयेनासिना लक्षणं कर्णपाटनं कुर्यात् । अस्य प्रजापतिर्यजुरसिः वत्समिथुनयोर्लक्षणकरणे विनियोगः ।

भुवनमसि सहस्रमिन्द्राय त्वा स्रमो ददात् । अक्षतमरिष्टमिलान्दम् । गोपोषणमसि गोपोषस्येशिषे गोपोषाय त्वा । सहस्रपोषणमसि सहस्रपोषस्येशिषे सहस्रपोषाय त्वा ॥

पूर्वं दक्षिणकर्णे । ततो वामे । प्रथमं वत्सस्य । ततो वत्सिकायाः । एवं लक्षणं कृत्वा लोहितेनेति मन्त्रेणानुमन्त्रयेत् । अस्य प्रजापतिर्यजुर्गावः अनुमन्त्रणे वि० ।

ॐ लोहितेन स्वधितिना मिथुनं कर्णयोः कृतम् । यावतीनां यावतीनां व ऐषमो लक्षणमकारिषम् । भूयसीनां भूयसीनां व उत्तरामुत्तराᳬ समां क्रियासम् ॥

प्रत्येकमनुमन्त्रणम् । पूर्वं वत्सस्य । ततो वत्सिकायाः । सर्वासां प्रसवोत्तरमेतदपि कर्म वर्षासु । अपराह्णे वत्सबन्धनरशनां प्रसार्यमाणामनुमन्त्रयेद्बद्धवत्सां वा । अस्य प्रजापतिरनुष्टुप् तन्ती अनुमन्त्रणे वि० ।

ॐ इयं तन्ती गवां माता सवत्सानां निवेशनी । सा नः पयस्वती दुहा उत्तरामुत्तराᳬ समाम् ॥

पुष्टिकर्मसु निःकालप्रवेशने तन्तीविहिरणं च प्रत्यहं कर्त्तव्यानि । इति तृतीयं पुष्टिकर्म ॥

## अथ गोयज्ञः ।

पूर्वं त्रिरात्रमुपवासः । नान्दीश्राद्धम् । पारिभाषिक एवोदगयनादिकालः अथवा कार्तिकशुक्लप्रतिपदि पक्षादिस्थालीपाकानन्तरं आवर्त्तनात्प्राक्कर्त्तव्यः । तत्र "गवां पुष्टिकामोऽहं अग्न्यादींस्थालीपाकेन यक्ष्ये" इति सङ्कल्प्य, प्रकृतिवत् चरुतन्त्रेणासादनं कृत्वा "अग्नये त्वा, पूष्णे त्वा, इन्द्राय त्वा, ईश्वराय त्वा निर्वपामीति" निरुप्य, पायसचरुं श्रपयित्वा, तत्त-

द्देवतानाम्ना हुत्वा, प्रकृतिवत्तन्त्रं समाप्य, वृषभानां शृङ्गाभ्य-अनघण्टाभरणवस्त्रदानादिभिः पूजा। गवां चन्दनादिसुगन्धि-द्रव्यैरभ्युक्षणम्, ब्राह्मणानां भोजनम्, पूर्णपात्रदानादि कार्यम्। इति गोयज्ञः॥

अथाश्वयज्ञः।

अयं चाश्वपतिना कार्यः। तत्र गोयज्ञोक्ताश्चत्वारोऽग्न्यादयः, पञ्चमषष्ठौ अश्वपूजा। अश्वानामभ्युक्षणम्। अश्वपुष्ट्यर्थमयं यज्ञः। इत्यश्वयज्ञः॥

अथ श्रवणाकर्मप्रयोगः।

तत्र प्रथमारम्भे वृद्धिश्राद्धम्। श्रावण्यां पौर्णमास्यां प्रातर्होमादिकं विधाय, अग्निशालायाः पुरस्ताद्द्वारदेशे वा यथासम्भवमरत्निमात्रं समचतुरस्रं स्थण्डिलं कुर्यात्। ततस्तस्य चतुर्दिक्षु संलग्नं पदत्रयं विन्यस्य, तस्मादधिकं किञ्चिद्भूभागं मुक्त्वा, प्रतिदिशं प्रादेशमितं चतुरस्रं स्थण्डिलं कृत्वा उपलिम्पेत्। तत आवसथ्याग्नेरेकदेशं शरावे कृत्वा, प्रत्यग्दक्षिणयोर्मध्ये सञ्चरेण प्रविश्य, स्थण्डिलात्पश्चिमतः प्राङ्मुख उपविश्य, संमार्जनादिभूसंस्कारान्कृत्वाऽग्निं प्रणयेत्। ततस्तत्र यवभर्जनकर्परोलूखलमुसलचमसशूर्पादीन्याहरेत्। ततस्तत्कर्परं यवभर्जनार्थं अग्नावधिश्रित्य, सकृद्गृहीतान्मुष्टिमितान्यवान् करे कृत्वा अदहन् भर्ज्जयेत्। ततोऽग्नेः पश्चादुलूखलं संस्थाप्य, भर्जितान्यवानुलूखले प्रक्षिप्य, कण्डनेन सक्तून्निःपादयेत्। एवं सुश्लक्ष्णकृतान्सक्तूंश्चमसे कृत्वा, शूर्पेणापिधाय, तेनैव सञ्चरेण निर्गत्याग्निशालायां निश्चले देशे स्थापयेत्। ततो अतिप्रणीतमग्निमिन्धनदानादिभिः सायं यावद्धारयेत्। अथ वैश्वदेवादिकं विधाय, अपराह्णे व्रत्याशनं कृत्वा, सायङ्कालात्प्रागग्निं प्रादुःकृत्य, सन्ध्यां विधायास्तमिते ससक्तुचमसदर्विशुद्धोदकपात्राण्यादाय, सञ्चरेण प्रविश्याग्नेरुत्तरमार्गेण गत्वा, पूर्वोपलिप्तात्पश्चिमतः प्राङ्मुख उपविश्य,

आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य "ममात्मसंस्कारार्थं श्रीपरमेश्वरप्रीतये नित्यविधिरूपं बलिदानमहं करिष्ये" इति सङ्कल्प्य, शूर्पे सक्तून्कृत्वा, पात्रस्थमुदकं प्रयोगपर्याप्तं चमसे समासिच्य, वामहस्तेन दर्वीं समादाय, दक्षिणहस्तेन सक्तून्सङ्गृहीतान्बलिदानपर्याप्तान् सक्तून्दर्व्यां कृत्वा, दक्षिणहस्तेन चमसादुदकमादाय, स्थण्डिलोपर्यासिच्य, दर्वीं दक्षिणेनादाय, यः प्राच्यामित्यादि चतुर्णां प्रजापतिर्यजुः सर्पः बलिदाने विनियोगः ।

"ॐ यः प्राच्यां दिशि सर्पराज एष तेबलिरिति" प्राङ्मुखया दर्व्या बलिं निर्वपेत् । इदं सर्पराजाय न ममेति त्यागः । ततस्तद्बलिसमीपे चमसस्थमुदकशेषं तथा निनयेद्यथा बलिं न प्रवहति । ततस्तत्रस्थ एव प्रादक्षिण्येन पर्यावृत्य प्रत्यङ्मुखो भूत्वा, उदकपात्रस्थाभिरद्भिश्चमसदर्व्यौ तन्त्रेणाभ्युक्ष्य, सहैव प्रतापयेत् । ततस्तत्रस्थ एव पर्यावर्तनेन प्राङ्मुखो भूत्वा, प्रादक्षिण्येन दक्षिणस्यां दिश्युपलिप्ते दक्षिणमुख उपविशेत् । ततश्चमसे उदकपात्राज्जलमादाय, पूर्ववद्दर्व्यां सक्तूनादाय, उपलिप्ते दक्षिणेन जलं निनीय, दर्वीं दक्षिणेनादाय "यो दक्षिणस्यां दिशि सर्पराज एष ते बलि"रिति बलिं निर्वपेत् । त्यागः पूर्ववत् । ततश्चमसस्थमुदकशेषं बलिमप्रवाहयन्निनीय, प्रादक्षिण्येनावर्त्तनमकुर्वन्नग्न्यभिमुखो भूत्वा, चमसदर्व्योः पूर्ववदभ्युक्षणप्रतपने कृत्वा, पश्चिमस्यां दिश्युपलिप्ते प्रत्यङ्मुख उपविश्य पूर्ववत् "यः प्रतीच्यां दिशि सर्पराज एष ते बलि"रिति बलिं निर्वपेत् । ततश्चमसस्थमुदकशेषं पूर्ववन्निनीय, तत्रस्थ एवाग्निसम्मुखो भूत्वा, चमसदर्व्यावभ्युक्ष्य प्रताप्य, उदीच्यामुपलिप्ते उदङ्मुख उपविशेत् । तत्र पूर्ववत् "य उदीच्यां दिशि सर्पराज एष ते बलि"रिति बलिनिर्वपनमुदकशेषनिनयनान्तम् । नात्राभ्युक्षणप्रतपने प्रयोजनाभावात् । ततोऽतिप्रणीतस्याग्नेः पश्चात्प्राङ्मुख उपविश्य, शूर्पेण सक्तुशेषं तूष्णी-

मग्नौ प्रक्षिपेत् । ततः सञ्चरेण निष्क्रम्याग्निशालायामग्नेः पश्चात्प्राङ्मुख उपविश्य, न्यञ्चकरणबद्धहस्तौ कृत्वा मन्त्रं पठेत् । नमः पृथिव्या इति प्रजापतिरनुष्टुप् पृथिवी जपे विनियोगः ।

नमः पृथिव्यै दꣳष्ट्राय विश्वभृन्माते अन्ते रिषाम । सꣳहतं मा विवधीर्विहतं माभिसंवधीः ॥

ततः सायंहोमवैश्वदेवादिकं विधाय पायसचरुं श्रपयेत् । तत्र न्यञ्चकरणादि पात्रासादनान्तं प्रकृतिवत् । देशकालौ सङ्कीर्त्य "ममात्मसंस्कारार्थं श्रीपरमेश्वरप्रीतये नित्यविधिरूपं श्रवणाकर्माहं करिष्ये" इति सङ्कल्प्य, पश्चादग्नेः खण्डस्तरणं, उलूखलाद्यासाद्य, "श्रवणाय त्वा जुष्टं निर्वपामि । विष्णवे त्वा० । अग्नये त्वा जु० । प्रजापतये त्वा० । विश्वेभ्यो देवेभ्यस्त्वा० ।" द्विस्तूष्णीमित्यादि पयसि चरुश्रपणाज्यभागान्तं प्राकृतम् । ततः प्रधानहोमः ।

ॐ श्रवणाय स्वाहा । इदं श्रवणाय न मम । विष्णवे स्वाहा । इदं विष्णवे न मम । अग्नये स्वाहा । इदमग्नये न मम । प्रजापतये स्वाहा । इदं प्रजापतये न मम । विश्वेभ्यो देवेभ्यः स्वाहा । इदं विश्वेभ्यो देवेभ्यो न मम । एवं चतुर्गृहीतेन पञ्च प्रधानाहुतयः । तत आवापहोमादि यज्ञवास्त्वन्तं कृत्वा, उत्तरतोऽग्नेरसंख्याततृणं कुशस्तम्बं समूलं प्रागग्रं संस्थाप्य, मन्त्रद्वयं बद्धाञ्जलिः पठेत् । सोमो राजेत्यादिमन्त्रद्वयस्य प्रजापतिर्यजुः सोमसर्पौ जपे विनियोगः ।

ॐ सोमो राजा सोमस्तम्बो राजा सोमोऽस्माकꣳ राजा सोमस्य वयꣳ स्मः । अहिजम्भनमसि सोमस्तम्बꣳ सोमस्तम्बमहिजम्भनमसि ॥ याꣳ सन्धाꣳ समधत्त यूयꣳ सप्तऋषिभिः सह । ताꣳ सर्पा मात्यक्रामिष्ट नमो वो अस्तु मा मा हिꣳसिष्ट ॥

ततो वामदेव्यगानम् । ततः प्रातर्होमानन्तरं पार्वणस्थालीपाकं विधाय शालाग्नौ यवान्भर्जयित्वाऽन्येन सक्तून्कारयित्वा,

नवे घटादि पात्रे कृत्वा, पात्रान्तरेण पिधायाग्निशालायां सुप्रदेशे स्थापयेत् । ततोऽस्तमयादर्वागग्निं प्रादुष्कृत्य, सायंसन्ध्यां कृत्वा, सायंहोमात्प्राङ्मध्यस्थण्डिले भूसंस्कारं विना उल्मुकं निधाय, चमसदर्वीशूर्पोदकपात्राण्यादाय सञ्चरेण प्रविश्योक्तबलिदानानन्तरं प्रत्यहं सक्तुशेषहोमः 'नमः पृथिव्या' इति । तत्पश्चाच्च प्रत्यहमग्निप्रणयनम् । भूसंस्कारं विना उल्मुकस्थापनम् । एवं पूर्वसम्पादितसक्त्वभावे तथैव कारयित्वा पात्रे स्थापयेत् । एवं उक्तप्रकारेण मार्गशीर्षपौर्णमासीपर्यन्तं प्रत्यहं बलिदानं कुर्यात् । इति बलिदानादिश्रवणाकर्मान्तकर्मणः प्रयोगः ॥

## अथाश्वयुजीकर्मप्रयोगः ।

आश्विनमासपौर्णमास्यां प्रथमप्रयोगे वृद्धिश्राद्धं विधाय, पूर्वाह्ण एवाज्यं दधिदुग्धाभ्यामन्यतरेण संयोज्याग्नेः समीपे ऐशान्यामासाद्य, स्थालीपाकं समारभेत् । तत्र न्यञ्चकरणादि पात्रासादनप्रोक्षणान्तं प्रकृतिवत् । देशकालौ सङ्कीर्त्य "आत्मसंस्कारार्थं श्रीपरमेश्वरप्रीतये नित्यविधिरूपमाश्वयुजीकर्माहं करिष्ये" इति सङ्कल्प्य, खण्डस्तरणादि कार्यम् । "रुद्राय त्वा जुष्टं निर्वपामीति" निर्वपणे, द्विस्तूष्णीम् । पायसश्चरुः । शृताभिघाराद्याज्यभागान्ते प्रधानहोमः । आनोमित्रेति जमदग्निर्गायत्री मित्रावरुणौ होमे विनियोगः ।

ॐ आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजाꣳसि सुक्रतु स्वाहा । इदं मित्रावरुणाभ्यां न ममेति त्यागः । मानस्तोकेति कुत्सो जगती रुद्रः होमे वि० ।

ॐ मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे स्वाहा । इदं रुद्राय न ममेति त्यागः । ततो गोनामाभिरष्टावाज्याहुतयः स्रुवेण होतव्याः । काम्यासि स्वाहा । इदं

काम्यायै न ममेति त्यागः सर्वत्र। प्रियासि स्वाहा। इदं प्रियायै०। हव्यासि स्वाहा। इदं हव्यायै०। इडे स्वाहा। इदमिडायै०। रन्ते स्वाहा। इदं रन्तायै०। सरस्वती स्वाहा। इदं सरस्वत्यै०। महि स्वाहा। इदं मह्यै०। श्रुति स्वाहा। इदं श्रुत्यै०। ततः प्रायश्चित्तं स्विष्टकृद्धोमादि वस्वन्तं कृत्वा, आसादितपृषातकमादायाग्नेः प्रादक्षिण्येन नीत्वा, उपोपविष्टान्ब्राह्मणानवेक्षयेत्। ते च ब्राह्मणास्तच्चक्षुरिति प्रजापतिरनुष्टुप् शुक्रः अवेक्षणे विनि०।

ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतम्॥ इति मन्त्रेण पृथक् पृथक् पश्येयुः। ततस्तेनैव मन्त्रेण यजमानः स्वयं ईक्षेत्। ततः कर्मापवर्गे वामदेव्यगानं कुर्यात्। ततस्त्रिभ्योऽधिकांस्त्रीन्ब्राह्मणान्भोजयित्वा, स्वयं भुक्त्वा, लाक्षामणीन्व्रीहिशालिमुद्गगोधूमसर्षपतिलयवादिसर्वौषधिगर्भान्बन्धनयोग्यान् सम्पाद्य, पट्टसूत्रदोरकप्रोतान्यजमानस्य गृह्या भ्रातृपुत्रशिष्यादयो दक्षिणे बाहौ बालानां कण्ठे च बध्नीयुः। ततः सायंहोमोत्तरं गोभ्यः पृषातकं प्राशयित्वा, तासां समीपे वत्सान्बन्धयेत् यथा रात्रिमेकत्र वसन्ति। इत्याश्वयुजीकर्म॥

## अथाग्रयणप्रयोगः।

पौर्णमास्यां दर्शे वा उक्तवारनक्षत्राणामन्यतमे शुक्लपक्षे शुभेऽह्नि प्रातरेव प्रथमप्रयोगे वृद्धिश्राद्धं विधाय, पूर्वाण्ह एव न्यञ्चकरणादि पात्रप्रोक्षणान्तं कृत्वा, देशकालौ सङ्कीर्त्य "आत्मसंस्कारार्थं श्रीपरमेश्वरप्रीतये नित्यविधिरूपमाग्रयणाख्यं कर्माहं करिष्ये" इति सङ्कल्पः। खण्डस्तरणं कृत्वा, उलूखलाद्यासाद्य, "इन्द्राग्निभ्यां त्वा जुष्टं निर्वपामीति" निर्वपेत्। ततः कण्डनाद्यधिश्रयणान्तम्। पायसश्चरुः। घृताभिघाराद्याज्यभागान्तं कृत्वा,

"इन्द्राग्निभ्यां स्वाहेति" प्रधानाहुतिं जुहुयात् । ततः शतायुधेत्यादिचतुर्भिर्मन्त्रैः स्रुवेणाज्याहुतयो होतव्याः । शतायुधेति प्रजापतिः पङ्क्तिरिन्द्रः, ये चत्वारः प्रजापतिस्त्रिष्टुप् देवीः, ग्रीष्म इति प्रजापतिस्त्रिष्टुब् ऋतवः, इद्वत्सरायेति प्रजापतिस्त्रिष्टुप्संवत्सराः होमे विनियोगः ।

ॐ शतायुधाय शतवीर्याय शतोतयेऽभिमातिषाहे । शतं यो नः शरदो अजीजादिन्द्रो नेषदति दुरितानि विश्वा स्वाहा । इदमिन्द्राय न ममेति त्यागः ।

ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति । तेषां यो अज्यानि मजीजिमावहास्तस्मै नो देवाः परिदत्तेह सर्वे स्वाहा । इदं देवेभ्यः० ।

ग्रीष्मो हेमन्त उत नो वसन्तः शरद्वर्षाः सुवितन्नो अस्तु । तेषामृतूनाᳬ शतशारदानां निवात एषामभये स्याम स्वाहा । इदमृतुभ्यो न मम ।

इद्वत्सराय परिवत्सराय संवत्सराय कृणुता बृहन्नमः । तेषां वयᳬ सुमतौ यज्ञियानां ज्योग्जीता अहता स्याम स्वाहा । इदं संवत्सराय० ।

ततः प्रायश्चित्तहोमादि यज्ञवास्त्वन्तं कृत्वा, समीपमागतेभ्यो हविः शेषं प्राशयेत् । पूर्वं ब्राह्मणस्य हस्ते जलं दत्त्वा, मध्यात्पूर्वार्द्धादवदानद्वयं दत्वा, उपरिष्टाज्जलं दत्वा, जलेनैव क्षताभ्यङ्गं कृत्वा, भद्रान्नः श्रेय इति प्रजापतिस्त्रिष्टुप् हयः प्राशने वि० ।

भद्रान्नः श्रेयः समनैष्ट देवास्त्वया वसेन समशीमहि त्वा । स नो मयो भूः पितेवाविशस्व शं तोकाय तन्वै स्योनः स्वाहा ।

इति मन्त्रेण दन्तैरनुपस्पृशन् प्राश्नीयुः । एवमेवापरं वारद्वयं मन्त्रवत् । उच्छिष्टैरेव मन्त्रः पठनीयः । तूष्णीं चतुर्थमवदानधर्मेण । ततो हविर्भक्षणेच्छा चेद्यजमानदत्तं हविः प्रतिगृह्य चर्वयन्तः प्रा-

श्नीयुस्तूष्णीं, तत आचम्य, अमोसीति प्रजापतिस्त्रिष्टुबिन्द्रः अभिमन्त्रणे विनि० ।

अमोऽसि प्राण तद्दतं ब्रवीम्यमा ह्यसि सर्वमनुप्रविष्टः । स मे जरां रोगमपमृज्य शरीरादपाम एधि मा मृथा न इन्द्र ॥

इति मन्त्रेण मस्तकादीन्यनुलोमं स्पृशेयुः । अथ यजमानो हविःप्राशनाद्यङ्गाभिमर्शनान्तं कुर्यात् । ततः कर्मसमाप्तिः ।

अनेनैव विधिना वनस्थेन श्यामाकाग्रयणं कार्यम् । तत्र 'अग्निः प्राश्नातु प्रथम' इति प्राशनमन्त्रः । अग्निः प्राश्नातु प्रथम इति प्रजापतिरनुष्टुप् अग्निः प्राशने विनि० ।

अग्निः प्राश्नातु प्रथमः स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः स्वाहा ॥

यवाग्रयणेऽपि अयमेव पायसचर्वादिविधिः । तत्र एतमुत्यमिति प्राशनमन्त्रः । एतमुत्यमिति प्रजापतिर्जगतीन्द्रः प्राशने विनि० ।

एतमुत्यं मधुना संयुतं यवं सरस्वत्या अधि नाव चर्कृधि । इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानवः स्वाहा ॥ समानमन्यत् । ततो वैश्वदेवादि नैत्यकं कर्म । इत्याग्रयणप्रयोगः ॥

## अथाऽग्रहायणीकर्मप्रयोगः ।

तत्र प्रथमारम्भे वृद्धिश्राद्धम् । प्रातराहुतिं हुत्वा, दर्भशमीवीरणफलोपेतबदरीशाखाऽपामार्गशिरीषादीनाहरेदाहारयेद्वा । ततः पुरस्तात् शालाया उपलिप्ते शालाग्नेरेकदेशं प्रणीय, श्रवणाकर्मवत्सक्तूनभिःपाद्य, चमसे कृत्वा, सक्त्वेकदेशं प्रजापतिं ध्यायन्नग्नौ प्रक्षिपेत् । ततः सक्तुञ्छूर्पेणापिधाय, सञ्चरेण निष्क्रम्य, अग्निशालायां स्थापयेत् । ततस्तमग्निं सायं यावद्धारयेत् । ततो ब्राह्मणानाहूय यथाविधिना स्वस्ति वाचयित्वा, तेभ्यो यथाशक्ति दक्षिणां दत्वा आशिषः प्रतिगृह्य, सम्भारमेकत्र बध्दुवा समादायाग्न्यगारप्रभृति प्रादक्षिण्येन कुड्यलग्नं गृहधूमं सर्वतः पात-

यन्मन्छेत् । ततस्तदानीमेव तं सम्भारं बहिः सुप्रदेशे प्रक्षिप्याग्नेः स्थण्डिलमुपलिप्याग्न्यगारमुपलिम्पेत् । अथाग्निशालायामग्नेरुत्तरत देशान्यां वा सुप्रदेशे तिस्रः शिलाः संन्यस्य, तदुपरि वास्तोष्पत इति सामद्वयं वास्तोष्पत इति च ऋचं पठित्वा, मणिकं स्थापयेत् । वास्तोष्पतेति सामद्वयस्य ऋवषोऽनुष्टुप् वास्तोष्पतीन्द्रौ मणिकस्थापने विनि० ॥

५र २ २ १ १ २ ३ ५ १ २र २

वास्तोष्पताये । ध्रुवा । स्थूणाओ २३४ वा । अंसत्रंसो-
१ ९ २ १ र र र २ १ ५
म्यानार२म् । द्रप्सः पुराम्भेत्ता शश्वता२३यिनाम् । आ२३४इन्द्राः।
१ ९ २ ३ ५
मुनी२ । ना३१उवा२३ । सा२३४खा ॥ १ ॥
५ र ४५४ ३ २ १ ४ र ९ ४र ५

वास्तोष्पतेध्रुवा । स्थूणा३ । आ२३४ । सत्रंसो । म्याना-
२ १ र र र २ ३ ५ १ २९
म् । द्रप्सः पुराम्भेत्ताशश्वता२३यिनाम् । आ२३४इन्द्राः । मुनी
१ ६ ३ ६
३ । नो२३४ वा । सा२३४खा ॥ २ ॥
१ २ ३ २ ३ २ ३ २ २ १ २ ३ १र २र

वास्तोष्पते ध्रुवा स्थूणांसत्रं सोम्यानाम् । द्रप्सः पुरां
३ १र २र ३ २ ३ १ २ ३ १ २
भेत्ता शश्वतीनामिन्द्रो मुनीनां सखा ॥

ततो मणिके समंन्यायन्तीत्यृचा कुम्भद्वयं आसिञ्चेत् । प्रतिकुम्भं मन्त्रावृत्तिः । समंन्यायन्तीत्यस्य अथर्वा त्रिष्टुबापः आसेके विनि० ।

१ २ ३ १ २ ३ १ २ ३ ३ ३ १र २र १ २

समं न्यायन्त्युपयन्त्यन्याः समानमूर्वं नद्यः स्पृणन्ति । तमू-
३ २ ३ १ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २
शुचिं शुचयो दीदिवांसमपान्नपातमुपयन्त्यापः ॥

एवं मणिकं संस्थाप्य, वैश्वदेवादि विधाय, व्रत्याशनम् । ततः सायंहोमादर्वाग्यथाविधिना बलिदानम् । तदन्ते सक्तुशेषप्रक्षेपः प्रणीतेऽग्नौ । नमः पृथिव्या इति मन्त्रजपो न भवति ।

ततो होमादि वैश्वदेवान्ते पयसि स्थालीपाकः कार्यः । तत्र देश-कालादि सङ्कीर्त्य "आग्रहायणीकर्माहं करिष्ये" इति सङ्कल्पः । "आग्रहायण्यै त्वा जुष्टं निर्वपामीति" निर्वापः । आज्यभागौ हुत्वा, प्रथमा हव्युवाससेति प्रधानहोमः । प्रथमा हव्युवाससेति प्रजा-पतिरनुष्टुबाग्रहायणी होमे वि० ।

ॐ प्रथमा हव्युवासा धेनुरभवद्यमे । सा नः पयस्वती दुहा उत्तरामुत्तरा९ समां स्वाहा । इदमाग्रहायण्यै न मम ।

ततः प्रायश्चित्तहोमादि यज्ञवास्त्वन्तं कृत्वा, पश्चादग्नेर्भूमौ न्यञ्चौ पाणी कृत्वा, प्रतिक्षेत्रेति मन्त्रं जपेत् । प्रतिक्षेत्रेति प्रजापति-स्त्रिष्टुबग्निः जपे विनियोगः ।

प्रतिक्षेत्रे प्रतितिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रतितिष्ठामि गोषु । प्र-तिप्राणे प्रतितिष्ठामि पुष्टौ प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मनि । प्रतिद्यावा-पृथिव्योः प्रतितिष्ठामि यज्ञे ॥ ततो वामदेव्यं गीत्वाऽग्निं प्रणमेत् । इत्याग्रहायणीकर्मप्रयोगः ॥

## अथ स्वस्तरारोहणप्रयोगः ।

उदगयनानन्तरं प्राग्वसन्ताच्छुक्लपक्षे शुभेऽहि प्रथमारम्भे वृद्धि-श्राद्धं विधाय, पूर्वाह्णे सायंहोमानन्तरं वा पश्चादग्नेः कुशैरुदगग्रै-रुदक्प्रवणं स्वस्तरमास्तीर्य्य, तस्योपरि कार्पासमहतमुदग्दिशा-मुपयोगपर्याप्तमास्तीर्य्य, प्रक्षालितपाणिपाद आचान्तस्तदुपरि दक्षिणभागे गृहपतिरुपविशेत् । सर्वेषामुपवेशनं प्राङ्मुखेनैव । तत-स्तदुत्तरतो अव्यवहिताः गृहपतेर्भ्रात्रादयो यथाज्येष्ठमनुज्ञाताः समुपविशेयुः । ततस्तदुत्तरतोऽव्यवहितास्त्रियो गृहपतिप्रभृतीनां स्वसापत्यानि स्वस्योत्तरतः समुपवेश्य यथाज्येष्ठमुपविशेयुः । एव-मुपविष्टेषु गृहपतिर्देशकालौ सङ्कीर्त्य "मम स्त्रीपुत्रादिसहितस्य सर्पादिदुष्टसत्त्वोपद्रवनिवृत्तिद्वारा श्रीपरमेश्वरप्रीतये नित्यविधिरूपं स्वस्तरारोहणमहं करिष्ये" इति सङ्कल्प्य, स्वस्तरे न्यञ्चौ पाणी

कृत्वा "स्योना पृथिवि नो" इति मन्त्रं जपेत् । स्योना पृथिवीति मेधातिथिः परउष्णिक् पृथिवी जपे वि० ।

स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथो देवान्मा भयादिति ॥

ततो गृहपतिप्रभृतीनामुपवेशनक्रमेण दक्षिणपार्श्वे प्राक्शिरसां संवेशनम् । ततो गृहपतिक्रमेणैवोत्थानम् । एवं स्वापोत्थाने त्रिः । ततोऽग्नेः पश्चात्प्राङ्मुखाः सर्वे समुपविश्य, अप्रतिरथादीनि ( १९ पृष्ठे ) स्वस्त्ययनानि यथाज्ञानं पठेयुः । तत उदकं स्पृष्ट्वा, वामदेव्यं गीत्वा, यथासुखं स्वपेयुः सर्वे । सद्यःपक्षे गृहपतिश्चेदन्यं पक्षमाश्रयेत्तदा उक्तपक्षाणामन्यतमं पक्षमाश्रित्य, स्वस्तरे शयीयात् । इति स्वस्तरारोहणप्रयोगः ॥

## अथाष्टकाप्रयोगः ।

तत्र सर्वाष्टकासु वृद्धिश्राद्धाभावः । तत्रादावपूपाष्टकाप्रयोगः । मार्गशीर्षपौर्णमास्यनन्तरं कृष्णाष्टम्यपूपाष्टका । पूर्वाह्णे एव प्रकृतिवदासादनानि । तत्र विशेषः—चरुस्थाल्यनन्तरं अष्टौ कपालानि । ततः प्रोक्षणान्तं कृत्वा, देशकालौ सङ्कीर्त्य, "आत्मसंस्कारार्थं श्रीपरमेश्वरप्रीतये नित्यविधिरूपमपूपाष्टकाख्यं कर्माहं करिष्ये" इति सङ्कल्प्य, "अष्टकायै त्वा जुष्टं निर्वपामीति" तन्दुलान्निरुप्य, कण्डनादिप्रक्षालनान्ते कृते तण्डुलानर्द्धांश्चर्वर्थं विभज्यावशिष्टांश्छिलायां पिष्ट्वा, तस्याष्टावपूपान कुर्यात् । ततश्चरुस्थानादुत्तरतोऽष्टौ कपालान्युदक्संस्थान्येकैकशः संन्यस्य चरुमधिश्रित्य, कपालेष्वपूपानधिश्रित्यापरिवर्त्तयन् श्रपयेत् । शृतेष्वादौ चरुमभिघार्य अधिश्रयणधर्मेणापूपानभिघार्य, श्रृतानान्तु पूर्वेणोद्वासितानान्तु पृष्ठत इत्येवं चरोश्चापूपानां उद्वासनम् । ततः प्रत्यभिघाराद्याज्यभागान्तं कृत्वा, स्रुच्युपस्तीर्य्य, चरोश्चाऽपूपानाञ्च प्रत्येकं मध्यात्पूर्वार्द्धादवदाय, सहैव स्रुचि कृत्वा, पुनरभिघार्य्य, सर्वत्र क्षतान्यभ्यज्य "अष्टकायै स्वाहेति" जुहुयात् । इदं अष्टकायै न ममेति त्यागः । ततः

प्रायश्चित्तं हुत्वा, चरोरपूपानाश्चैकं प्रत्येकं अवदाय, यथाविधिना स्विष्टकृद्धुत्वा, व्याहृतिहोमादि कर्मसमाप्त्यन्तं प्रकृतिवत् । पूर्णपात्रं दक्षिणा । अपूपैर्ब्राह्मणान्भोजयेत् । इत्यपूपाष्टकाप्रयोगः ॥

## अथ मांसाष्टकास्थालीपाकप्रयोगः ।

पौषपौर्णमास्यूर्द्ध्वकृष्णाष्टमी मांसाष्टका । पारिभाषिक एवात्र पूर्वाह्णः कालः । प्रातर्होमानन्तरं गोमयोदकाभ्यां कुण्डमुपलिप्य, प्रक्षालितपाणिपाद आचान्तोऽग्नेः पश्चादुपविश्य, देशकालौ सङ्कीर्त्य "ममात्मसंस्कारार्थं श्रीपरमेश्वरप्रीतये नित्यविधिरूपं मांसाष्टकाख्यं कर्माहं करिष्ये" इति सङ्कल्प्य, समिद्धोम-भूजप-परिसमूहन-ब्रह्मोपवेशनानि कृत्वा, आसादनं कुर्यात् । शुद्धोदकपात्रम्, प्रोक्षणार्थं सयवोदकपात्रम्, चरुस्थाल्यौ, कुशाः, उलूखलमुसले, निर्वापार्थं कांस्यपात्रम्, तण्डुलाः, शूर्पद्वयम्, पवित्रे, मेक्षणद्वयम्, बर्हिः, विंशतिकाष्ठ इध्माः, घृतम्, आज्यस्थाली, समिद्द्वयम्, प्लक्षशाखायुतः कुशमुष्टिः, कांस्यपात्रत्रयम्, सम्मार्गकुशाः, स्रुक्स्रुवौ, गोप्रतिनिधिद्रव्यम् , एवमासाद्य, गायत्र्याभिमन्त्रितोदकेनासादनक्रमेण सम्प्रोक्ष्य, पश्चादग्नेः प्रागग्रान् दर्भानास्तीर्य, तत्रोलूखलमुसलकंसपात्रसहविःशूर्पादीन्यासाद्य, कंसेनाष्टकायै त्वा जुष्टं निर्वपामीति निरुप्य, द्विस्तूष्णीमित्यादि त्रिःप्रक्षालनान्तं प्राकृतम् । अथावशेषितांस्तण्डुलान् द्वितीयशूर्पे कृत्वाऽग्नेः पुरस्तात्संन्यस्यासादितं यवोदकपात्रं समादायोत्तानहस्तेन "अष्टकायै त्वा जुष्टं प्रोक्षामीति" ताभिरद्भिः सम्प्रोक्ष्य, आवसथ्याज्ज्वलदङ्गारं हस्तेनास्पृशन् काष्ठादिना समादाय, परिवाजपतिरिति मन्त्रान्ते पर्यग्निकरणं कुर्यात् । ततः शूर्पस्थांस्तण्डुलानुलूखले कृत्वा, कण्डनादि त्रिःप्रक्षालनान्तं कृत्वा, पूर्वप्रक्षालितांस्तण्डुलान्पवित्रान्तर्हितायां स्थाल्यामोप्य, द्वितीयानपि सदुग्धायां स्थाल्यां सपवित्रायां आवपेत् । तद्दक्षिणतः पूर्वस्याधिश्र-

यणम् । उत्तरतोऽपरस्य । ततः पृथङ्मेक्षणाभ्यां प्रदक्षिणमवघट्टनं क्रमेण । ततः कांस्यपात्रे पायसचरोरास्रावणं ग्राह्यम् । ततः क्रमेणोभयत्र शृताभिघारः । क्रमेणोदगुद्वासनं प्रत्यभिघारश्च । ततोऽग्नेः स्तरणम् । पायसचरोरग्नेः पश्चादासादनव्यतिरिक्तं वैरूपाक्षान्तं कर्म कृत्वा, पश्चादग्नेरुदक्संस्थं सप्लक्षशाखप्रस्तरणं, तस्य दाक्षिणतः पायसं चरुं आसाद्य, पात्रान्तरे समुद्धृत्य, तस्य द्वादश पिण्डान्कृत्वा, समास्तृतप्रस्तरे तान्पिण्डानुदक्संस्थान्स्थापयेत् । ततोऽन्यत्कांस्यपात्रं पिण्डानां पूर्वभागे संस्थाप्याज्येनोपस्तीर्य्य प्रतिपिण्डं मध्यात्पूर्वार्द्धादवद्य, तस्मिन्पात्रे कुर्यात् । ततः प्रतिपिण्डं क्षताभ्यङ्कः । ततः पूर्वचरोस्तस्य मेक्षणेन बिल्वमात्रमवदानद्वयमादाय, तस्मिन्नेव कांस्यपात्रैकदेशे स्थापयेत् । चरोः क्षताभ्यङ्गं कृत्वा, सकृत्प्रत्युपस्तरणं कार्यम् । द्वितीयकांस्यपात्रेऽपि सकृदुपस्तीर्य्य, प्रतिपिण्डमीशानभागादेकैकमवदानं मेक्षणेनावदाय, पात्रे कृत्वा, चरोरपि तत एवावदाय, तस्मिन्नेवैकदेशे स्थापयेत् । ततः प्रत्युपस्तारद्वयम् । तत आस्रावितं यूषं पात्रद्वये समासिच्य, ग्रहणक्रमेण चरुद्वयस्य मिश्रणं कार्यम् । ततः पात्रसम्मार्गाद्याज्यभागान्तं कृत्वा, चतुर्गृहीतमाज्यं गृहीत्वाऽग्नावग्निरिति जुहोति । अग्नावग्निरिति प्रजापतिस्त्रिष्टुबग्निः होमे वि० ।

ॐ अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः । स न स्योनः सुयजा यजा च यथा देवानां जनिमानि वेद स्वाहा । इदमग्नये न ममेति त्यागः ।

ततः प्रथमपात्रसन्नीतात्तृतीयमंशं हस्तेनादाय, स्रुचि कृत्वा औलूखलाः सम्प्रवदन्ति, इडायास्पदमिति द्वाभ्यामृग्भ्यामुत्तरस्यामृच्यन्ते स्वाहाकारं प्रयुज्य जुहुयात् । औलूखला इडाया इति मन्त्रद्वयस्य प्रजापतिस्त्रिष्टुबष्टका होमे वि० ।

ॐ औलूखलाः सम्प्रवदन्ति ग्रावाणो हविष्कृण्वन्तः परिवत्सरीणाम् । एकाष्टके सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं

ते ॥ इहायाऽस्पदं घृनवत्सरीसृपं जातवेदः प्रतिहव्या गृभाय । ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि रन्तिरस्तु स्वाहा । इदमष्टकायै न मम । नात्र प्रकृतिवदवदानग्रहणं सकृद्ग्रहणोपदेशात्। पुनस्तस्मादेव पात्राद्द्वितीयभागं हस्तेनादाय, स्रुचि कृत्वा, एषैव सा या पूर्वा, एषैव सा या प्रथमेति द्वाभ्यां उत्तरस्यां स्वाहाकारं प्रयुज्य जुहुयात् । एषैवेति द्वयोः प्रजापतिस्त्रिष्टुबष्टका होमे वि० ।

ॐ एषैव सा या पूर्वा व्यौच्छत्सेयमप्स्वन्तश्चरति प्रविष्टा । वधूर्जिगाय प्रथमा जनित्री विश्वे ह्यस्यां महिमानो अन्तः ॥ एषैव सा या प्रथमा व्यौच्छत्सा धेनुरभवद्विश्वरूपा । संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा । इदमष्टकायै न मम ।

ततस्तत्पात्रात्तृतीयांशमादाय, निःशेषमादाय, स्रुचि कृत्वा, यां देवाः प्रति पश्यन्ति संवत्सरस्य प्रतिमामिति ऋग्द्वयेन स्वाहान्तेन जुहुयात् । यां देवाः संवत्सरस्येति द्वयोः प्रजापतिरनुष्टुबष्टका होमे वि० ।

ॐ यां देवाः प्रतिपश्यन्ति रात्रीं धेनुमिवायतीम् । सा नः पयस्वती दुहा उत्तरामुत्तरा ँ समाम् ॥ सम्वत्सरस्य प्रतिमां यां त्वा रात्रि यजामहे । प्रजामजर्यं निःकुरु रायस्पोषेण स ँ सृज ॥ इदमष्टकायै न मम ।

ततः प्रायश्चित्तं हुत्वा, स्विष्टकृत्पात्रान्निःशेषमादाय, स्रुचि कृत्वा, अन्विमन्न इति स्वाहान्तेनोत्तरपूर्वार्द्धे जुहुयात् । अन्विमन्न इति प्रजापतिरनुष्टुबग्निः होमे वि० ।

ॐ अन्विमन्नो अनुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनः स नोऽदाद्दाशुषे मयः स्वाहा । इदमग्नये हव्यवाहनाय स्विष्टकृते न मम । ततो व्याहृतित्रयहोमादितन्त्रसमाप्तिः । गौर्दक्षिणा । इति मांसाष्टकास्थालीपाकप्रयोगः ॥

अथानुकल्पः ।

स्थालीपाककरणासमर्थेन हरितदूर्वादितृणपूलकं तृप्तिपर्याप्तमादाय, एषा मेऽष्टकेति मन्त्रमुक्त्वा, गोग्रासं दद्यात् । गोग्रासदा-

नासम्भवेन अरण्ये गत्वा तृणकाष्ठादि छित्वा एकत्र राशिं कृत्वाग्निसन्धुक्ष्य ब्रूयादेषा मेऽष्टकेति । इत्यनुकल्पः ।

### अथान्वष्टकाप्रयोगः ।

पौषकृष्णाष्टम्यां मांसाष्टकाकर्मणोऽनन्तरं प्रातर्नवम्यामन्वष्टक्यं कर्त्तव्यम् । दशम्यां वा । पित्र्यत्वादापराह्णिकं कर्म । पूर्वदिवसे भाण्डशुद्ध्यादि श्राद्धप्रकरणोक्तं कृत्वा, सायङ्काले द्वौ वैश्वदेवार्थं, त्रीन्पित्र्यर्थं द्विजान्निमन्त्रयेत्पूर्ववत् । गोत्रनामाद्युच्चार्य "श्वोऽन्वष्टक्यश्राद्धे दैवे क्षणः क्रियताम् । पित्र्ये क्षणः क्रियताम् ।" इति विशेषः । नियमश्रावणादि पूर्ववत् । प्रातर्होमानन्तरं अग्न्यागाराद्दाग्नेय्यां दिश्यायामविस्तराभ्यां चतुःप्रक्रममानमपरिमितमानं वा चतुरस्रं दिक्कोणं पश्चात्पश्चिमकोणद्वारं कटादिभिराच्छादितं गृहं कारयेत्स्वयं वा कुर्यात् । तत आवसथ्याग्नेरेकदेशमुद्धृत्य, महानसे कृत्वा, नित्यब्राह्मणभोजनार्थं अन्यार्थञ्च पक्त्वा, तावदेवोद्धृत्यावसथ्ये प्रक्षिप्य वैश्वदेवं नित्यवत् कुर्यात् । ततोऽपराह्णे परिवृतस्योत्तरार्द्धे अरत्निमात्रं चतुरस्रं विदिक्कोणं स्थण्डिलं कृत्वा, शरावादिना सकलमावसथ्याग्निमादाय, परिवृतस्योत्तरार्द्धे स्थण्डिलसमीपे संन्यस्योपवीतिना स्थण्डिले पञ्च भूसंस्कारान्विधाय तमग्निं स्थापयेत् । नात्र ब्रह्मोपवेशनम् । अथ प्राचीनावीती आग्नेय्याभिमुख उपविश्याग्नेः पश्चाद्दक्षिणसंस्थानि पात्राण्यासादयेत् । यथा—सहविःशूर्पोलूखलमुसलचरुस्थालीद्वय–पवित्रद्वय–शुद्धोदकपात्र–यवोदक-मेक्षणद्वय–स्रुवाज्य–शङ्कु–पश्चिमकाष्ठासन–विशाखलूनदर्भमुष्टि–सकृदाच्छिन्नदर्भमुष्टि–त्रयस्तरणार्थदर्भपूलक–कंसपात्र-समिद्द्वयपिञ्जुल्यैकावनेजनार्थ पात्रत्रय–तिल–गन्धदर्वी–पिञ्जूलित्रय–सौवीराञ्जन–तैल–कर्पूरादिमिश्रचन्दन–क्षौमदशासूत्राणि ।

एवमासाद्य, सव्येनाचम्य, प्राणानायम्य, देशकालौ सङ्कीर्त्य, अपसव्यं कृत्वा "गोत्राणां पितृपितामहप्रपितामहानां वसुरुद्रादित्यस्वरूपाणां" इत्युक्त्वा "नित्यविधिरूपमन्वष्टक्यश्राद्धं पार्वणविधानेन

स्थालीपाकपूर्वकर्महं करिष्ये" इत्थं सङ्कल्प्य, प्राचीनावीति आग्नेय्य भिमुख उपविश्य, पश्चादग्नेरग्न्याशाग्रैः कुशैः स्तरणं कुर्यात् । तत कुशोपर्युलूखलमुसल-कंसपात्र-हविःशूर्पाणामासादनम् । तत शूर्पात्कंसपात्रे चरुद्वयपर्याप्तांस्तण्डुलान्कृत्वा "पितृभ्यस्त्वा जुष्टं निर्वपामीति" पितृतीर्थेन सकृन्निर्वपेत् । नात्र द्विस्तूष्णीं । ततः सव्योत्तराभ्यां पाणिभ्यां सकृत्कण्डनम् । ततः शूर्पं कृत्वा सकृदुत्पवनम् । सकृत्फलीकरणम् । ततः सकृत्प्रक्षालनान्ते तण्डुलानां भागद्वयं कृत्वा, एकं भागं सकृत्पवित्रान्तर्हितायां स्थाल्यामावपेत् । अवशिष्टं भागमग्नेर्दक्षिणतः संस्थाप्य, पयोदकेन "पितृभ्यस्त्वा जुष्टं प्रोक्षामीति" पितृतीर्थेनोत्तानहस्तेन सम्प्रोक्ष्य, पूर्ववत्पर्यग्निकरणं परिवाजपतिरिति । ततः पूर्वचरोर्दक्षिणतः सदुग्धायां स्थाल्यां सकृत्पवित्रान्तर्हितायां तण्डुलानामावपनम् । पृथक्प्रेक्षणाभ्यां सकृदप्रदक्षिणमालोडनम् । क्रमेण शृताभिघारः । दक्षिणत उद्वासनमुभयोः क्रमेण । न प्रत्याभिघारः ।

तत आसादितं शङ्कुमादाय कर्षूणां खननं कुर्यात् । तच्चेत्थम्-प्रादेशायामा चतुरङ्गुलविस्तारा चतुरङ्गुलखातवती वाय्वग्निदिङ्मुखा यवमध्या तीक्ष्णान्ता पूर्वा । ततस्तद्दक्षिणतः सार्द्धाङ्गुलान्तरे पूर्वोक्तलक्षणां मध्यमां खनित्वा, तद्दक्षिणतस्तावदन्तरे उत्तमां तथैव खनेत् । ततः सव्यं कृत्वोत्तरार्द्धस्थापितस्याग्नेरेकदेशं शरावादिना आदाय, कर्षूणामप्रादक्षिण्येन नीत्वा, पूर्वस्याः कर्ष्वाः पूर्वस्यां कुत्रचिच्छरावं संन्यस्य, कर्ष्वाः पूर्वस्यामेव पञ्च भूसंस्कारान्विधाय, शरावस्थमग्निं स्थापयेत् । ततस्तस्याग्नेः परिस्तरणम् । आसादितविशाखलून कुशमुष्टिं हस्ताभ्यामादायाग्नेः पश्चादास्तीर्य, दक्षिणहस्तस्थान्कुशानग्नेर्दक्षिणतः प्रकिरंस्तथैव वामहस्तस्थानग्नेरुत्तरतः प्रकिरन्नुभयतः प्राञ्चं नीत्वा, दक्षिणहस्तगृहीतानि कुशाग्राणि वामहस्तगृहीतकुशाग्रोपरि कुर्यात् । ततोऽपसव्यं कृत्वा, सकृदाच्छिन्न-

कुशैर्बहुलैरग्न्याग्राग्रैः खननक्रमेण कर्षूणां मध्ये स्तरणं कुर्यात् । ततः कर्षूणां पश्चिमतो दक्षिणाप्रवणं दक्षिणाग्रैः कुशैर्बहुलैः स्वस्तरमास्तीर्य, तत्पश्चिमतो यज्ञियकाष्ठासनं बृसीसंज्ञमुपवेशनार्थं स्थापयेत् । ततः स्थाल्यादीनि पात्राणि पुत्रादिरादाय यजमानात्पश्चिमतो नीत्वा, यजमानकर्ष्वोरन्तरास्तृतस्वस्तरे आसादयेद्‌भावे स्वयं सव्यहस्तेनादायानुपृष्ठं दक्षिणेन संगृह्य, स्वस्तरे दक्षिणसंस्थान्यासादयेत् । तानि यथा—चरुस्थाल्यौ, मेक्षणे, कंसपात्रम्, दर्वी, शुद्धोदकपात्रम्, समिद्द्वयम्, समौलीमेकामवनेजनार्थं पात्रत्रयम्, तिलान्, गन्धपिञ्जूलीस्तिस्रः, सौवीराञ्जनम्, तैलम् कर्पूरादिमिश्रितम्, गन्धः, क्षौमदशासूत्रं च । ततः पत्नी स्वस्तरे शिलां निधाय, कर्पूरादिमिश्रं चन्दनं निघृष्य, पात्रान्तरे समुद्धृत्य, स्वस्तरे स्थापयेत् । ततः सौवीराञ्जनं शिलायां घृष्य, तिस्रो दर्भपिञ्जूलीर्मूलमध्याग्रदेशेषु अञ्जयित्वा स्थापयेत् ।

ततः कर्षूणां दक्षिणतो द्वौ दैविकौ प्राङ्मुखावुपवेश्य, पैतृकांस्त्रीनुदङ्मुखानुपवेश्यासनदानादि अर्घपात्रन्युब्जकरणान्तं प्रकृतिवत्कार्यम् । ततः प्राचीनावीती कर्षूणां पश्चिमतो दक्षिणसंस्थऽमवनेजनाय पात्रत्रयं संन्यस्य, शुद्धोदकपात्राद्धस्तेनोदकमादायासादनक्रमेण पात्रेषु तूष्णीमुदकं दत्वा, श्राद्धोदकादेव पात्रान्तरे जलमादाय, आसादितांस्तिलानुदके प्रक्षिप्य "अमुकगोत्रास्मत्पितरमुकशर्मन्नेतत्ते तिलोदकं, ये चात्रत्वानुयांश्च त्वमनु तस्मै ते स्वधेति" प्रथमपात्रे जलं दत्वोदकं स्पृष्ट्वा, पितामहप्रपितामहयोः पात्रद्वये तत्तन्नाम्ना जलमासिञ्चेत् । "अस्मत्पितामहामुकशर्मन्नस्मत्प्रपितामहामुकशर्मन्निति" विशेषः । ततस्तथैव पित्रादिपात्रत्रये गन्धमिश्रमुदकं दद्यात् । "एतत्ते गन्धोदकमिति" प्रयोगे विशेषः । प्रत्यासेकं जलस्पर्शः । ततश्चन्दनपुष्पादिभिर्ब्राह्मणान् सम्पूज्यार्चनसङ्कल्पं विधाय, भोजनार्थं तेषां अग्रतो भाजनानि संन्यस्य, हस्तप्रक्षालनपाङ्क्तिवारणादि वि-

धाय, अग्नौकरणं कुर्यात् । तत्र पृथक्प्रेक्षणाभ्यां कंसपात्रे चरुद्वयं निःशेषमुद्धृत्य, तत्र घृतमासिच्य, अतिप्रणीतात्पश्चिमतः संस्थाप्य, पुरतः समिद्द्वयं स्वदक्षिणे शुद्धोदकपात्रं संन्यस्य "अग्नौ करिष्यामीति" पङ्क्तिमुख्यं सर्वान्वा पृष्ट्वा, सव्येनैव न्यञ्चकरणप्रत्येकपर्युक्षणसमिद्धोमादि विधाय, चरुद्वयं सम्मिश्र्य, मेक्षणेनादाय स्वाहाकारेणाग्नौ हुत्वा "स्वाहा सोमाय पितृमतेति" मन्त्रं समापयेत् । इदं सोमाय न मम । ततः पूर्ववदादाय, तथैव हुत्वा, "स्वाहाग्नये कव्यवाहनायेति" वक्तव्यम् । इदमग्नये कव्यवाहनायेति त्यागः ।

ततः समिद्धोमानुपर्युक्षणप्रसेकादीन्विधाय, चमसं निनीय पुनः पूरयेत् । ततो हुतशेषं पितृब्राह्मणभाजनेषु किञ्चिद्दत्वा पिण्डार्थमवशेषयेन्न वैश्वदेविकभाजने दद्यात् । ततोऽन्नं परिविष्य, अन्नसङ्कल्पं विधाय, सव्येन पितृसंहितां जप्त्वाऽपसव्येन विकिरं दत्वा, आचम्य, प्रत्यपोशानं ब्राह्मणेभ्यो दत्वा, तृप्तिप्रश्नादि विधाय, अपसव्यं कृत्वा, सव्यहस्तेनैकां पिञ्जूलीमादाय, ततो दक्षिणेनादाय, सव्येनान्वारभ्य, तया पिञ्जूल्या कर्षूणां मध्ये दक्षिणाग्रामेकां रेखामुल्लिखेत् "अपहता असुरा रक्षांसि वेदिषद" इति मन्त्रेण । ततो यत्राग्नौकरणहोमः कृतस्तत एवाग्नेः सव्येनोल्मुकमादाय, तस्मादपि दक्षिणेनादाय, सव्येनान्वारभ्य "ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति । परा पुरो निपुरो ये भरन्त्यग्निष्टांल्लोकात्प्रणुदत्वस्मात्" इति मन्त्रेण कर्षूणां दक्षिणतस्तमुल्मुकं निदध्यात् । ततः कर्षूषु हस्तौ कृत्वा "एत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्व्विणेभिः । दत्तास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छत" इति पितॄनावाहयेत् । ततः पूरितान्युदकपात्राणि पूर्वस्याः कर्ष्वाः पश्चिमतः सन्निधौ पैतृकं पात्रं, मध्यमायाः सन्निधौ पैतामहमुत्तमायाः सन्निधौ प्रापितामहमेवं पात्राणि संस्थाप्य, तस्यां तस्यां तेन तेन पात्रेणावनेजनं पित्रादीनां कार्यम् । यथा—सव्येन पाणिनोदपात्र-

मादाय, तस्मादपि दक्षिणेनादाय, सव्येनान्वारभ्य। "अमुकगो-त्रास्मत्पितरमुकशर्मन्नवनेनिक्ष्व, ये चात्र त्वानु यांश्च त्वमनु तस्मै ते स्वधे" त्युच्चार्य पूर्वस्यां कर्ष्वां पितुरवनेजनं कृत्वोदकं स्पृष्ट्वा तथैव द्वितीयं पात्रमादाय, मध्यमायां पितामहस्यावनेजनं विधा-योदकं स्पृष्ट्वा, तथैव तृतीयपात्रमादाय, उत्तमायां प्रपितामहस्या-वनेजनं कार्यम्। अथ ब्राह्मणभुक्तयर्थं पक्वात्सर्वस्मात्पृथक् समु-दुधृत्य, कांस्यपात्रस्थहुतशेषेण सम्मिश्रान्पिण्डान्दद्यात्। सव्येन पाणिना दर्वीं गृहीत्वा, ततो दक्षिणेनादाय, सव्येनान्वारभ्य, सम्मिश्रितात्तृतीयांशस्य पिण्डं दर्व्या समादाय, गोत्राद्युच्चार्य, "अस्मत्पितरमुकशर्मन्नेष ते पिण्डो, ये चात्र त्वा न्वि"त्याद्युक्त्वा, पूर्वस्यां कर्ष्वां दर्व्या पितृतीर्थेन पिण्डं दत्वोदकं स्पृष्ट्वा, पुनस्तथैव द्वितीयांशस्य पिण्डमादाय, गोत्राद्यभिधायास्मत्पितामहामुकशर्म-न्नित्याद्युच्चार्य, मध्यमायां पितामहपिण्डं दत्वा, जलं स्पृष्ट्वा, तथैव तृतीयांशस्य पिण्डमादायोत्तमायां प्रपितामहपिण्डं दत्वोदकं स्पृशेत्। ततोऽ"त्र पितरो मादयध्वं यथाभागमावृषायध्वं"इति जप्त्वाऽप्र-दक्षिणं परिभ्रम्योदङ्मुखो दक्षिणाभिमुखो वा भूत्वा प्राणवायुं निरुन्ध्य पितॄन्संस्मृत्य, प्राणवायोर्निरोधविमोकात्पूर्वं प्रदक्षिणं परिवर्त्तमानो जपे"दमीमदन्त पितरो यथाभागमावृषायिषतेति"।

ततः सव्येन पाणिना आञ्जितां पिञ्जूलीमादाय तस्मादपि दक्षिणेनादाय, सव्येनान्वारभ्य "अमुकगोत्रास्मत्पितरमुकशर्मन्ने-तत्ते आञ्जनं, ये चात्र त्वा न्वि"त्यादि स्वधान्तमुक्त्वा, पितृतीर्थेन पूर्वस्यां पिण्डोपरि निदध्यात्। तत उदकं स्पृष्ट्वा, मध्यमायामुत्तमायां च तत्तन्नामोच्चारणेन पूर्ववत्पिञ्जूलीनिधानं पितामहप्रपितामहयोः। ततः स्वस्तरे उपक्लृप्तं तैलं हस्तेनादाय, गोत्राद्युच्चार्या-"स्मत्पितरमुकशर्मन्नेतत्ते तैलं, ये चात्र त्वादि" स्वधान्तमुक्त्वा, पितृतीर्थेन पिण्डोपरि दत्वोदकं स्पृष्ट्वैवमेवापरयोः। ततस्तैलवच्च-न्दनादि सुगन्धद्रव्यं हस्तेनादाय, गोत्राद्युच्चार्य "एतत्ते सुरभि,

ये चात्र त्वे" त्यादि स्वधान्तं पूर्ववत्तत उदकं स्पृष्ट्वैवमेवापरयोः। अथ कर्षूषु पित्रादीन्ध्यात्वा नमस्कुर्यात्तत्तन्मन्त्रैः । दक्षिणं पाणिमुत्तानं न्युब्जं वाममेवं पूर्वस्यां कर्ष्वां हस्तौ निधाय "नमो वः पितरो जीवाय नमो वः पितरः शूषाय" इति जपेत् । मध्यमायां दक्षिणं न्युब्जं वामं उत्तानमेवं हस्तौ निधाय "नमो वः पितरो घोराय नमो वः पितरो रसायेति" जपेत् । उत्तमायां दक्षिणमुत्तानं सव्यं न्युब्जमेवं हस्तौ कृत्वा "नमो वः पितरः स्वधायै नमो वः पितरो मन्यवे" इति जपेत् । अथाञ्जलिकृतो "नमो वः पितरः पितरो नमो वः" इति जपेत् । "गृहान्नः पितरो दत्तेति" गृहानवेक्ष्य जपेत् । "सदो वः पितरो देष्मेति" पिण्डानवेक्ष्य जपेत् । ततः क्षौमदशान्तं सव्येनादाय, ततो दक्षिणेनादाय, सव्येनान्वारभ्य अमुकगोत्राद्यभिधाया "स्मत्पितरमुकशर्मन्नेतत्ते वासो, ये चात्र त्वे" त्यादि पूर्ववदुक्त्वा, पिण्डोपरि तन्तुं निधायोदकमालभ्यैवमपरयोः ।

अथ चन्दनपुष्पधूपदीपनैवेद्यादिभिः पिण्डान्सम्पूज्य, ब्राह्मणानाचामयेत् । ततः सुप्रोक्षितमस्त्वित्यादि प्रकृतम् । ततोऽक्षय्योदकं दत्वा, स्वधावाचनिकान्दर्भान्सपवित्रान्पिण्डोपर्यास्तीर्य, स्वधां वाचयित्वा, न्युब्जीकृतमर्घपात्रमुत्तानं कृत्वा, तेन पात्रेण श्राद्धोदकमादाय, सव्येनान्वारभ्य, तेनोदकेन "ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतꣳ स्वधा स्थ तर्पयत मे पितॄन्" इति मन्त्रेण पिण्डान्प्रासिञ्चेत् । ततः पिण्डपात्रचालनं कृत्वा, प्राचीनावीति "अमून्नो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वा । प्रादात्पितृभ्यः स्वधया ते अक्षन्प्रजानन्नग्ने पुनरेहि योनिम्" इति मन्त्रेणोल्मुकं श्राद्धोदकेन न्युब्जहस्तेनाभ्युक्षेत् । ततो दक्षिणादानादि ब्राह्मणविसर्जनवामदेव्यगानान्तं कृत्वा, आहृतानि पात्राणि द्वन्द्वशः प्रक्षाल्य प्रतिहारयेत्तेनैव मार्गेण, अभावे स्वयं तथैव हरेत् । पुत्रकाम्या चेत्पत्नी स्वे भोजनकाले "आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषः स्यात्" इति

मध्यमं पिण्डं प्राश्नीयात्, पुत्रकामा पुत्रादीनां पत्नी वा। पिण्डप्रतिपत्तिः प्रागुक्ता कार्या। इत्यन्वष्टक्यप्रयोगः॥

अथ शाकाष्टकाप्रयोगः।

माघपौर्णमास्यनन्तरं कृष्णाष्टमी शाकाष्टका। अत्र पारिभाषिकः पूर्वाह्णः कालः। प्रातर्होमोत्तरं न्यग्भकरणब्रह्मोपवेशनादि चरुतन्त्रवत्सर्वम्। आसादने चरुस्थालीद्वयं, शूर्पान्तरे शाकस्यासादनम्। मेक्षणद्वयमिति विशेषः। "अष्टकायै त्वा जुष्टं निर्वपामीति" निर्वापः। कण्डनाद्यधिश्रयणान्तम्। द्वितीयस्थाल्यां तदुत्तरतः शाकस्याधिश्रयणम्। श्रृताभिधाराद्याज्यभागान्तं कृत्वा, स्रुच्युपस्तीर्य, स्थालीपाकान्मध्यात्पूर्वार्द्धादवदानद्वयं, तथैव शाकादवदाय, प्रत्युपस्तीर्य, उभयत्र क्षताभ्यङ्कं कृत्वा, अष्टकायै स्वाहेति हुत्वा, इदमष्टकायै न ममेति त्यागः। ततः प्रायश्चित्तं हुत्वा, चरोः शाकाच्चावदाय स्विष्टकृतं हुत्वा, यज्ञवास्त्वन्ते ब्रह्मणे पूर्णपात्रं, वामदेव्यं गीत्वाग्निं प्रणमेत्। इति शाकाष्टकाप्रयोगः॥

अथ चैत्रीकर्म।

अथ प्रथमारम्भे वृद्धिश्राद्धं, पूर्वाह्णे एव चरुतन्त्रेण सर्वम्। "चैत्र्यै त्वा जुष्टं निर्वपामीति" निर्वापः। चैत्र्यै स्वाहेति हुत्वा, चैत्र्यै न ममेति त्यागः। प्रकृतिवदन्यत्। इति चैत्रीकर्मप्रयोगः॥

अथैकाष्टकाप्रयोगः॥

प्रौष्ठपद्यूर्ध्वमष्टम्यां एतत्कर्म। "अष्टकायै त्वा जुष्टं निर्वपामीति" निर्वापः। "एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम्। तेन देवा असहन्त शत्रून्हन्ताऽसुराणामभवच्छचीभिः" इति होमः। एकाष्टकायै न ममेति त्यागः। प्रकृतिवदन्यत्। इत्येकाष्टकाप्रयोगः। अतः परं काम्यकर्मणां प्रयोगो निर्णये द्रष्टव्यः। उपयोगाभावादत्र नोक्तः॥

अथ वास्तुकर्मप्रयोगः।

तत्रादौ मातृपूजापूर्वकमाभ्युदयिकं विधाय, नूतनगृहमध्ये गत्वा, समुपविश्य भूतोत्सादनमादौ कुर्यात्। यथा—सर्षपयवाक्षतानादाय—

यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा।

स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥
अपक्रामन्तु भूतानि पिशाचाः सर्वतोदिशम् ।
सर्वेषामवरोधेन ब्रह्मकर्म समारभे ॥
भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः ।
स्थानादस्माद्व्रजन्त्वन्यत्स्वीकरोमि भुवान्त्विमाम् ॥

इति मन्त्रैः सर्षपाक्षतप्रक्षेपेण भूतान्युत्सार्य, शुद्ध्यर्थं पञ्चगव्येन गृहं प्रोक्षयेत् । तत्र गायत्र्या गोमूत्रमादाय पात्रे कृत्वा "गावश्चिद्घास मन्यवः सजात्येन मरुतः सबन्धवः । रिहते ककुभो मिथः" इति गोमयं पात्रे निक्षिप्य, "चक्रं यदस्याप्स्वानिषत्तमुतोतदस्मै मध्विच्चच्छद्यात् । पृथिव्यामतिषितंयदूधः पयो गोष्वदधा ओषधीषु ।" इति गोदुग्धम्, "दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभिनो मुखाकरत्प्र न आयूꣳषि तारिषत् ।"इति दधि, "घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधु दुघेसुपेशसा । द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा" इति घृतम्, एवं पञ्चमन्त्रैः पञ्चगव्यं ताम्रव्यतिरिक्तपात्रे समादाय, प्रणवेनालोड्य गृहं प्रोक्षयेत् । ततः (८१ पृष्ठे) शन्नोदेव्यादिभिर्मन्त्रैरभिमन्त्रिताभिरद्भिः प्रोक्षयेत् । ततो वितानतोरणपुष्पपल्लववस्त्रादिभिर्गृहं भूषयित्वा, धूपदीपादि विधायान्यस्मिन्गृहे गोमयोपलिप्तायां भूमौ स्वस्तिकादिशोभां विधाय, तत्राक्षतैः समाचारादष्टदलपद्मं विधाय, तत्कर्णिकायां शुभ्रमव्रणं कुम्भं संन्यस्य, शुद्धोदकेनापूर्य सर्वौषधिफलनवरत्नादि मध्ये निक्षिप्य, पञ्चपल्लवांश्च मुखे विन्यस्य, श्रीफलपूर्णपात्रादिना पिधाय, कुसुमचन्दनवस्त्रैर्भूषयित्वा, तं कुम्भं यजमानस्य पत्नी समादाय पुरस्कृतब्राह्मणो यजमानः सपत्नीको निगमघोषमङ्गलगीतवादित्रसहितो नूतनद्वारे समागत्य, दैवज्ञकथिते प्रवेशलग्ने प्राप्तो गृहद्वाराभिमुखो भूत्वा श्लोकद्वयं पठेत् ।

धर्मार्थकामसिद्ध्यर्थं पुत्रपौत्राभिवृद्धये ।
त्वामहं प्रविशाम्यद्य भगो मन्दिर ते नमः ॥
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ।

# वास्तुमण्डलचक्रम् ।

पूर्वा

ऐशानी

१ इन्द्रः
५ उग्रसेनः
९ ब्रह्मा १ स्कन्दः

८ ईशानः
१ चरकी

२ अग्निः
२ विदारी

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| २ शिखी | ३ पर्जन्यः | ४ जयन्तः | ५ कुलिशायुधः | ६ सूर्यः | ७ सत्यः | ८ भृशः | ९ आकाशः | १० वायुः |
| ३३ दितिः | ४२ आपः | | | | | | ४३ सावित्रः | ११ पूषा |

| | | | | |
|---|---|---|---|---|
| ३२ अदितिः | ४१ आपवत्सः | ३४ अर्यमा | ३५ मित्रः | १२ वितथः |
| ३१ नागः | ४० विबुधाधिपः | १ ब्रह्मा वास्तुः | ३६ सविता | १३ गृहक्षतः |
| ३० सोमः | | | | १४ यमः |
| २९ भल्लाटः | | | | १५ गन्धर्वः |
| २८ मुख्यः | ३९ पृथ्वीधरः | ३८ विवस्वान् | ३७ राजयक्ष्मा | १६ भृङ्गराजः |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| २७ अहिः | ४५ रुद्रः | २४ शोषः | २३ असुरः | २२ वरुणः | २१ पुष्पदन्तः | २० सुग्रीवः | ४४ जयः | १७ मृगः |
| २६ रोग | २५ पापः | | | | | | १९ दौवारिकः | १८ पितृगणः |

उत्तरा

७ कुबेरः
८ अश्विनी
४ पिलिपिच्छः

१ अर्यमा
३ डामरः
४ यमः

६ वायुः
४ पापराक्षसी

४ निर्ऋतिः
२ पूतना

३ जृम्भकः १० अनन्तः
७ महाकालः
५ वरुणः

वायव्या

पश्चिमा

तावत्त्वं मम वंशस्य मङ्गलाभ्युदयं कुरु ॥

इति पठित्वा, देहलीमस्पृशन् दक्षिणपादं स्थाप्यान्तः प्रविशेत् । ततस्तं कलशं ईशानकोणे मनोरमदेशे अक्षतपुञ्जोपरि स्थापयेत् । ततः पुष्पचन्दनादिपूजासामग्रीं सम्पाद्य क्षेत्राधिपतिं सम्पूज्य, प्रार्थयेत्—

क्षेत्राधिप नमस्तुभ्यं महोग्राय महात्मने ।
भगवन्वास्तुपूजार्थं अनुज्ञां दातुमर्हसि ॥

इति सम्प्रार्थ्य भूमिमभ्यर्च्य प्रार्थयेत्—

विश्वम्भरे महादेवि वास्त्वर्थं त्वदनुज्ञया ॥
तव पृष्ठे करोम्यद्य निर्विघ्नं कुरु ते नमः ॥

इति सम्प्रार्थ्य देशकालौ सङ्कीर्त्य "मम क्षेमायुरारोग्यैश्वर्याभिवृद्धये नवीनगृहप्रवेशनिमित्तं स्वगृह्योक्तविधिना वास्तुशान्त्याख्यं कर्माहं करिष्ये" इति सङ्कल्प्य ऋत्विजो वृणुयात् । तत्र पूर्वं ब्रह्मवरणम्, तत आचार्यस्य । अनन्तरं ऋत्विजाम् । "गोत्र प्रवर सामवेदस्य कौथुमीशाखाध्यायिन् अमुकशर्मन्वास्तुशान्त्या अहं यक्ष्ये, तत्र मे त्वं ब्रह्मा भव । आचार्यो भव इत्यादि । ततो वरणश्राद्धम् । स्वस्तिवाचनम् । गृहमध्ये कुण्डे स्थण्डिले वा स्मार्तं लौकिकं वाग्निं संस्थाप्य, चरुधर्मेण पात्राण्यासाद्य "वास्तोष्पतये त्वा जुष्टं निर्वपामीति" निरुप्य, द्विस्तूष्णीमित्याद्यधिश्रयणान्तं प्राकृतम् । पायसचरुः ।

ततो वास्तुपीठस्थापनम् । गृहमध्ये कुण्डादैशान्यां नैर्ऋत्यां वा सूत्रेण चतुस्त्रिंशदङ्गुलमिताः पश्चिमतः प्रागपवर्गा उदक्संस्था दश रेखाः संलिख्य, तथैव दक्षिणत उदगपवर्गाः प्राक्संस्था दश रेखाः संलिख्यैवमेकाशीति कोष्ठान् सम्पाद्य, मध्ये कोष्ठनवकं ब्रह्मणः । तत्पूर्वस्यां कोष्ठत्रयमर्यम्णः । दक्षिणस्यां कोष्ठत्रयं सवितुः । वारुण्यां कोष्ठत्रयं विवस्वतः । उत्तरे कोष्ठत्रयं विबुधाधिपतेः । ब्रह्मण आग्नेय्यां मित्रः । नैर्ऋत्य राजयक्ष्मा । वायव्यां पृथ्वीधरः । ऐशान्यां आपवत्सः । एते चत्वारः पदिकाः । बाह्यपङ्क्तौ ईशानादिशिखिपर्जन्यौ पदिकौ । ततस्तत्पङ्क्त्यां जयन्तकु-

ङ्गिशायुधसूर्यसत्यभृशा द्विपदाः। ततस्तत्पङ्क्त्यां आकाशवायू पदिकौ। एते शिख्यादयः पूर्वपङ्क्तौ। ततो दक्षिणपङ्क्तौ पूषा एकपदः। तस्यामेव पङ्क्तौ वितथबृहत्क्ष (गृहक्ष) तयमगन्धर्वभृङ्गराजा द्विपदाः। मृगपितृगणौ पदिकौ। एते पूषाद्या दक्षिणस्याम्। ततः पश्चिमपङ्क्तौ दौवारिकस्त्वेकपदः। तस्यामेव पङ्क्तौ सुग्रीवपुष्पदन्तवरुणासुरशेषाख्या द्विपदाः। पापरोगौ द्विपदौ। एते दौवारिकाद्या वारुण्याम्। अथोत्तरपङ्क्तौ अहिरेकपदः। ततस्तत्पङ्क्तौ पञ्च द्विपदाः—मुख्यभल्लाटौ, सोमनागौ, अदितिश्च। दितिरेकपदा। एते अहिप्रभृतय उत्तरस्याम्। तत आपवत्सादैशान्यामन्तरालकोष्ठे आपः। एवं मित्रादाग्नेय्यामन्तरालकोष्ठे सावित्रः। एवं राजयक्ष्मणो नैर्ऋतौ अन्तरालकोष्ठे जयः। वायव्ये पृथ्वीधराद्वायव्यामन्तरालकोष्ठे रुद्रः। एवमादौ ब्रह्माणं संस्थाप्य, शेषाः शिख्यादयस्तत्तत्कोष्ठेषु नाममन्त्रेणोक्तक्रमेण स्थाप्याः। आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य "ईप्सितार्थसिद्धये वास्तुदेवतानां स्थापनमहं करिष्ये" इति सङ्कल्प्य, मध्ये वेद्याः चतुष्कोणे आग्नेयादिक्रमेण शङ्कुचतुष्टयं निखनेत्। तत्र मन्त्राः

विशन्तु भूतले नागा लोकपालाश्च सर्वशः। अस्मिन्गृहेऽवतिष्ठन्तु आयुर्बलकराः सदा॥

ततः शङ्कूनां पार्श्वे बलिदानम्—

अग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये तत्समाश्रिताः।
तेभ्यो बलिं प्रयच्छामि पुण्यमोदनमुत्तमम्॥
नैर्ऋत्याधिपतिश्चैव नैर्ऋत्यां ये च राक्षसाः। तेभ्यो०॥
ॐनमो वायुरक्षेभ्यो ये चान्ये तत्समाश्रिताः। तेभ्यो०॥
रुद्रेभ्यश्चैव सर्पेभ्यो ये चान्ये तत्समाश्रिताः। तेभ्यो०॥

ततः सुवर्णशलाकया प्रागायता उदक्संस्थाश्चन्दनादिना (वास्तुपीठे) दश रेखाः कुर्यात्—१ शान्ता, २ यशोवती, ३ कान्ता, ४ विशाला, ५ प्राणवाहिनी, ६ सती, ७ सुमना, ८ नन्दा, ९ सुभद्रा, १० सुरथा। अथ उत्तरायताः प्राक्संस्थाः—१ हिरण्या, २ सुव्रता, ३ लक्ष्मीः, ४ विभूतिः, ५ विमला, ६ प्रिया, ७ जया,

८ काका, ९ विशोका, १० इडा। इति क्रमाल्लिखेत्। (नमोन्तेन चतुर्थ्यन्तेन नाममन्त्रेण ताः पूजयेत्)। ततो वास्तुस्थापनम्—१. ॐ ब्रह्मणे नमः। ब्रह्माणं स्थापयामीति सर्वत्र। एतदीशान्यां एकपदे २. शिखिने० शिखिनं०। एकपदे ३. पर्जन्याय० पर्जन्यं०। ४. जयन्ताय० जयन्तं०। ५. कुलिशायुधाय० कुलिशायुधं०। ६. सूर्याय० सूर्यं०। ७. सत्याय० सत्यं०। ८. भृशाय० भृशं०। एते जयन्तादयो द्विपदाः। एकपदे—९. आकाशाय० आकाशं०। एकपदे—१०. वायवे० वायुं०। एते पूर्वपङ्क्तौ।

अथ दक्षिणपङ्क्तौ एकपदे—११. पूष्णे नमः, पूषणं०। १२. वितथाय० वितथं०। १३. बृहत्क्ष (गृहक्ष) ताय० बृहत्क्ष (गृहक्ष) तं०। १४. यमाय० यमं०। १५. गन्धर्वाय० गन्धर्वं०। १६. भृङ्गराजाय० भृङ्गराजं०। वितथादयो द्विपदाः। एकपदे—१७. मृगाय० मृगं०। एकपदे—१८. पितृगणाय० पितृगणं०। एते दक्षिणपङ्क्तौ।

अथ वारुणे एकपदे—१९. दौवारिकाय० दौवारिकं०। २०. सुग्रीवाय० सुग्रीवं०। २१. पुष्पदन्ताय० पुष्पदन्तं०। २२. वरुणाय० वरुणं०। २३. असुराय० असुरं०। २४. शोषाय० शोषं०। सुग्रीवादयो द्विपदाः। एकपदे—२५. पापाय० पापं०। २६. रोगाय० रोगं०। एते वारुण्याम्।

अथोत्तरस्यां एकपदे—२७. अहये० अहिं०। २८. मुख्याय० मुख्यं०। २९. भल्लाटाय० भल्लाटं०। ३०. सोमाय० सोमं०। ३१. नागाय० नागं०। ३२. अदित्यै० आदितिं०। एते मुख्यादयो द्विपदाः। ३३. दित्यै० दितिं०। इयमेकपदा। एते उत्तरपङ्क्तौ। ३४. अर्यम्णे० अर्यमाणं०। ३५. मित्राय० मित्रं०। ३६. सवित्रे० सवितारं०। ३७. राजयक्ष्मणे० राजयक्ष्माणं०। ३८. विवस्वते० विवस्वन्तं०। ३९. पृथ्वीधराय० पृथ्वीधरं०। ४० विबुधाधिपाय० विबुधाधिपं०। ४१. आपवत्साय० आपवत्सं०। एतेषु अर्यमसवितृविवस्वद्विबुधाधिपास्त्रिपदाः, शेषा एकपदाः।

तत ईशानाग्निनिर्ऋतिवायुकोणेष्वन्तरालकोणेषु आपसावित्र-

जयरुद्राः पदिकाः । ४२. आपाय० आपं० । ४३. सवित्रे० सवितारं० । ४४. जयाय० जयं० । ४५. रुद्राय० रुद्रं० । ततो मण्डलाद्बाह्यत ईशानादिकोणचतुष्टये—१. चरक्यै० चरकीं० । २. विदार्यै० विदारीं० । ३. पूतनायै० पूतनां० । ४. पापराक्षस्यै० पापराक्षसीं० । पूर्वे—५. स्कन्दाय० स्कन्दं० । दक्षिणे–६. अर्यम्णे० अर्यमाणं० । पश्चिमे–७. जृम्भकाय० जृम्भकं० । उत्तरे–८. पिलिपिच्छाय० पिलिपिच्छं० । एते स्कन्दादयः क्षेत्रपाला वास्तुतो बाह्यतः । ततः पूर्वे–९. उग्रसेनाय० उग्रसेनं० । दक्षिणे–१० डामराय० डामरं० । पश्चिमे–११. महाकालाय० महाकालं० । उत्तरे–१२. अश्विभ्यो० अश्विनौ० । ततः स्वस्वदिक्षु लोकपालाः पूर्वादिक्रमेणाष्टदिक्षु—१. इन्द्राय० । २. अग्नये० । ३. यमाय० । ४. निर्ऋतये० । ५. वरुणाय० । ६. वायवे० । ७. कुबेराय० । ८. ईशानाय० । इन्द्रेशानमध्ये-९. ब्रह्मणे० । निर्ऋतिवरुणमध्ये—१०. अनन्ताय० । एवं देवान्संस्थाप्य तत्रैव वास्तुमूर्तिं स्थापयेत् । तत्र समाचारादाग्नेयैर्मन्त्रैरग्न्युत्तारणम् । ततः पञ्चामृतेन संस्नाप्य, मण्डले संस्थाप्य, ध्यात्वा आवाहयेत्—"आसीत्पूर्वं महादैत्यो वास्तुयज्ञापहारकः । स देवैर्बहुकालेन युद्धे हत्वा महीतले ॥ निपात्य बहुभिर्देवैर्निबद्धश्चतुरस्रकः । ईशाने मस्तकं न्यस्तं नैर्ऋत्यां पादयुग्मकम् ॥ जानुनी कूर्परीकृत्य बाहुयुग्मं तथैव च । वायव्याग्न्योस्तथा न्यस्तं हृदयं चाञ्जलिस्तथा" इति ध्यात्वा, "वास्तुपुरुष इह स्वागतो भव, सुप्रसन्नो भव, वरदो भवेति" संस्थाप्यावाहयेत्—"आगच्छ वास्तुदेवेश सर्वदेवैरधिष्ठित । भगवन्कुरु कल्याणं यज्ञेऽस्मिन्सन्निधो भवेति ॥"

एवमावाह्य प्रतिष्ठां कृत्वा पूजयेत् । प्रणवादिनमोन्तैर्नाममन्त्रैः स्थापितदेवतानां पूजनम् । 'ॐब्रह्मणे नमः' इत्यादिनामप्रयोगेण । ततो वास्तोः पूजनम् । तत्र प्रार्थना—"भगवन्सर्वदेवेश ब्रह्मादिदेवतात्मक । तव पूजां करिष्यामि प्रसादं कुरु मे प्रभो ॥

इति सम्प्रार्थ्य पूजयेत् । गन्धादिभिरुपचारैरभ्यर्च्यार्घं दद्यात् ।

"पूज्योऽसि त्रिषु लोकेषु यज्ञरक्षार्थहेतवे । त्वद्विना नैव सिध्यन्ति यज्ञदानान्यनेकशः ॥ अयोने भगवन् भर्गललाटस्वेद-सम्भव । गृहाणार्घं मया दत्तं वास्तुस्वामिन्नमोऽस्तु ते ॥

इति मन्त्रेणार्घं दत्वा स्तुत्वा प्रणमेत्—

मन्त्रहीनं क्रियाहीनं भक्तिश्रद्धाविवर्जितम् ।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥
नमस्ते वास्तुदेवेश सर्वविघ्नहरो भव ।
शान्तिं कुरु सुखं देहि सर्वान्कामान्प्रयच्छ मे ॥

इति उक्त्वा प्रणमेत् । ततः श्रृताभिघाराद्याज्यभागान्तं कृत्वा, सकृदु-पस्तीर्य, मध्यात्पूर्वार्द्धात्त्रीणि त्रीण्यवदानानि गृहीत्वा, प्रत्युपस्तीर्य,
१ २ ३ १र २र
वास्तोष्पतेति मन्त्रेण होमः । ॐ वास्तोष्पते ध्रुवा स्थूणाꣳ सत्रꣳ
३ १ २ ३ २ ३ २ ३ १र २र ३ २ ३ १ २ ३ १ २
सोम्यानाम् । द्रप्सः पुरां भेत्ता शश्वतीनामिन्द्रो मुनीनाꣳ सखा स्वाहा । इदं वास्तोष्पतये न ममेति त्यागः । ततः कयानश्चित्रेत्या दितिस्तृभिः ।

१ २ ३ १— २ ३ २ ३ १ ३ १ २ २ ३ १ २ ३ २
कया नश्चित्र आ भुवदूती सदा वृधःसखा । कया शचिष्ठया वृता ॥
१ २ ३ १— २र ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः । दृढाचिदारुजे वसु ॥
३ २उ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अभीषुणः सखीनामविता जरितॄणाम् । शतं भवास्यूतये ॥

व्याहृतिभिश्च । स्रुवं गृहीत्वाज्येन होमः । इदं प्रजापतये न ममेति वामदेव्यर्चां त्यागः । ततः पूर्ववदष्टगृहीतं गृहीत्वा प्रजापतये स्वाहेति होमः । ततस्तिलादिद्रव्यैः स्थापितदेवतानां नाममन्त्रैर्लिङ्गोक्तम-न्त्रैर्वा होमः । प्रधानदेवतायाश्चरुतन्त्रेण । ततः पीठदेवतानां वास्तुपुरुषस्य च पुनःपूजनम् । नैवेद्यानि पृथग्यथासम्भवं कर्त्त-व्यानि । अभावे पायसमधुघृतानि । सम्पूज्य प्रार्थयेत्—

वास्तुदेव नमस्तुभ्यं भूशय्याभिरत प्रभो ।
मद्गृहं धनधान्याद्यैः समृद्धं कुरु सर्वदा ॥

यदर्थं पूजितोऽसि त्वं वास्तुदेव कुरुष्व तत् ।
नुद शल्यादिकान्दोषान्देहि सर्वमनोरथान् ॥

ततो राक्षोघ्नमन्त्रैर्गृहं सूत्रेण वेष्टयेत् । एवं सम्पूज्य, व्याहृतिचतुष्टयं हुत्वा, स्विष्टकृद्धोमः कार्यः । ततो यज्ञवास्त्वन्तं कृत्वा, चरुशेषेणाग्नेः परितो बलीन् हरेत् । पुरस्तादुपरिवज्जलासेकः सर्वत्र । इन्द्राय नम इति पूर्वस्याम् । वायवे नम इत्याग्नेय्याम् । यमायेति दक्षिणतः । पितृभ्यो नम इति नैर्ऋतौ । वरुणायेति पश्चात् । महाराजायेति वायौ । सोमायेत्युत्तरतः । महेन्द्रायेति ऐशान्याम् । वासुकये नम इत्यधः । ब्रह्मणे नम इत्यूर्ध्वं ।

अथ गृहसर्वाङ्गपूजा । तत्र द्वारशाखापूजामन्त्रः—

स्थापितेयं मया शाखा सुखदा ऋद्धिदा भव ।
पूजिता च मया भक्त्या स्थापिता च स्थिरा भव ॥

ततो मध्यभारपदपूजा—

धारण त्वं महाभाग निर्मितो विश्वकर्मणा ।
स्थापितः शुभदो नित्यं गृहभारक्षमो भव ॥

द्वारपुरतः-विघ्नराजाय नमः। द्वारशाखयोः-धात्रे नमः । विधात्रे नमः। दीपस्थाने-दीपनाथाय०। चुल्ल्यां-धर्माय०। सन्धानभाण्डे-ज्येष्ठायै० । जलस्थाने-वरुणाय० । पेषिण्यां-सुभगायै० । उलूखले-रौद्रपीठाय० । शयनीये-कामाय० । मध्ये-सर्वदेवेभ्यः० । पशुस्थाने-पशुनाथाय० । देवतायतने-सर्वदेवेभ्यो नमः । ततो भैरवक्षेत्रपालादिभ्यो बलिदानम् । वास्तुपीठे-दिक्पालेभ्यश्च । ततो ब्राह्मणभोजनादि । दक्षिणादिभिर्ब्राह्मणान्परितोष्य, स्वजनैः परिवृतो यथासुखं विहरेत् ॥

यस्याः कृपाकटाक्षेण पद्धतिर्निर्मिता मया ।
परिश्रमेण सा देवी प्रीता भवतु सर्वदा ॥

इति विद्वन्मुकुटमाणिक्यनीराजितचरणकमलशुक्लत्रिश्रामात्मजशिवरामविरचितायां सुबोधिन्यां प्रयोगपद्धत्यां पञ्चमप्रकाशः समाप्तः ॥

---

# परिशिष्टप्रकरणम् ।

## यज्ञोपवीतधारणाविधिः ।

आचम्य प्राणानायम्य । सूत्रोत्पादने ब्रह्माणं ध्यायामि ।
१ २ २ १ २ १
ब्रह्मा । ब्रा २३ ह्मा । यज्ञानं प्रथमं पुरस्तात् । विसायि ।
२ २ २ १ २ १ २
वा २३ यि सी । मतः सुरुचो वेन आवः । सबू । सा २३ बू ।
२ २ १ २ १ २ १
ध्निया उपमा अस्य वायिष्ठाः । सताः । सा २३ ताः । चयो-
१ २ १
निमसतश्चवायिवा ३४३ः । ओ २३४५ इ । डा ॥
५ ६ १ ^ २
त्रिगुणीकरणे विष्णुन्ध्यायामि । इदा ६ मे । विष्णू २ः । वि-
^ २ ३ ५ १ २ २ १ २ — १ —
चक्रा२३४ मायि । त्रायिधानि । दधायिपा १ दा २ मू । समू २
२ १ २ १ ^ ३ ५२ २ २
हो १ । ढा २३ मा ३ । स्या २ पा २३४ औहोवा । ए ३ ।
२
सुळे १ ॥ ततः—आपोहिष्ठा० से ॥ योवः शि० रः ॥ तस्मा०
नः ॥ इति तिसृभिः प्रक्षाल्य । ॐ तत्स० त् । इति गायत्र्या
४२ ५२.२ ४ ३ २
त्रिगुणीकृत्य । ग्रन्थिबन्धने रुद्रन्ध्यायामि । आवोराजा । नम-
३ ^ २ ३ ४ ५ १ २१ १ २ ^ २ ३ ४
ध्व । रस्य रुद्राम् । हो । ता । राम् । स । त्ययजा ३ मू । रोदसी-
५ २ १ २ ३ २ ^ ३ ४ ५ १ २ . १
योः । अग्निं पु । रा । तनयि । त्नोरचित्तात् । हिरण्य । रू ।
२ १ २ २ ४
पा ३ मव । सा ३४३ यि । का ३ र्णू ५ ध्वा ६५६ मू ॥ इति
ध्यात्वा दशकृत्वो गायत्र्याऽभिमन्त्रिताभिरद्भिः सम्प्रोक्षेत् ।
एवं संस्कृतमुपवीतं हस्ताभ्यामादाय, "हरये नमः । ब्रह्मणे
नमः । ईश्वराय नमः" इति नत्वा, गायत्र्याऽभिमन्त्र्य, दक्षिणं
बाहुं प्रवेश्य वामस्कन्धे धारयेन् मन्त्रेण यथा—यज्ञोपवीतमिति
परमेष्ठी प्रजापतिस्त्रिष्टुप् यज्ञोपवीतं श्रौतस्मार्त्तकर्मानुष्ठानसि-

ध्यर्थं यज्ञोपवीतधारणे विनियोगः । "ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ ॐ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ।" तत आचम्य । "ॐ समुद्रं गच्छ स्वाहा" इति पूर्वधृतमुपवीतमुत्तार्य जले निक्षिपेत् ।

---

## विसर्जनमन्त्रः

उत्सर्गप्रकरणे ऋषिश्राद्धान्ते ऋषीणामनेन मन्त्रेण विसर्जनं

१ २र २ ५ ३ २ १ — १२ ३ २ २
कुर्यात्-सुतासोमा ३ हा । धूमत्वामा २ः । सोमाइन्द्रा ३ हा ।
३ २ १ — १ २ ५ ३१ २ १ — १२ २ २
यमन्दाइना २ः । पवित्रवा ३ हा । तो अक्षारा २ न् । देवानूगच्छा
२ ३ २ २ ५ ४ ५
३ हा । तुवो ३ । हो २३४ । वा । मा५दो ६ हायि ॥ इति विसृज्य, ऋषीन्प्लवसाम्ना प्लावयित्वा एतानि सामानि पठेत्--
१ — १ १ २ १ २ २ २र
हा २ ऊवाक् । ३ । हावा । २ । होवा ३ । हाउवा । ए ।
२ १ २ १र २ २र १ २ १र२ १ र २ २ २ १ ३ १ १ १ १
तोकं प्रजां गर्भो नो यमदध्मह्याच पराच पथिभिश्चरन्ता २३४५ः ॥
१ — १ १ २ २ १ २ १ १ २र
हा २ ऊवाक् । ३ । हावा । ३ । अयꣳसशिङ्क्ते ३ । होई । यस्मा
२र र २ १र २र १ १ २ १ २ १ १ २र
द्यावापृथिवी भुवनानि चक्रदुः । होइ । अयꣳसशिङ्क्ते ३ । होइ । यस्मा-
१र२ १र २ १र २र १ १ २ १ २ १
दाप ओषधयो भुवनानि चक्रदुः । होइ । अयꣳसशिङ्क्ते ३ । होइ ।
१ र २ १ र २र १ १ २ १ २ १
यस्मात्समुद्रिया भुवनानि चक्रदुः । होइ । अयꣳसशिङ्क्ते ३ । होइ ।
२ २र १ २ २१र २र १ १ १ — २
यस्माद्विश्वा भूता भुवनानि चक्रदुः । होइ । हा २ ऊवाक् । ३ ।
२ १ २ २ २र १ २ १ ३ १ १
हावा । २ । होवा ३ । हाउवा । ए । आपः । २ । आपा २३
१ १ १ — २ १ २ २र ^ ३ २र
४५ः ॥ हा २ ऊवाक् । ३ । होवा । ३ । येभिर्विया । स्वमै-
१ — २र ^ ३ २र १ — २र १ ^ ३ २
राया २ः । तेभिर्विया । स्नुहीमादा २ म् । येभिर्भूताम् । सहः

१ — २१ १र २ १र २ १ — २र १ २
साहा २: । तेभिस्तेज आपः । आपा २: । येभिर्व्यन्तरिक्ष-
१र २ २ २र १ २ २ ३ १ १ १ १
मैरया ३: । हाउवा । ए । आपः । २ । आपा २३४५: ॥
१ — १ १ २ १ र र १ —
हा २ ऊवाक । ३ । होवा । ३ । यञ्जायथा अपूहो २ ।
१ — १ — १ — १ र —
वाँया २ । मघवन्वृत्रहाहो २ । रयाया २ । तत्पृथिवीमप्राहो २ ।
१ — १ र — १ — १ —
थाया २: । तदस्तभ्ना उतोहो २ यि । दायिवा २ म् । हा २
१ १ २ १ २ १ २ २ २र १र २ २ १
ऊवाक् । ३ । होवा । होवा । होवा ३ । हाउवा । ए । तेजो घर्मः
१ १ २ २ १ २ र १ र २१ १र २ र २ २ १ २र ^ ३
सङ्क्रीडन्ते शिशुमतीर्वाग्गुगोपास्तेजस्वतीर्मरुद्भिर्भुवनानि चक्रदु
१ १ १ १
२३४५: ॥ तेजो वै गायत्री छन्दसान्तेजो रथन्तरꣳसाम्नां तेज-श्चतुर्विꣳशः स्तोमानान्तेज एव तत्सम्यक् सन्दधात्यपिह पुत्रस्य पुत्रस्तेजस्वी भवति ॥

---

## उपाकर्मणि उत्सर्गे च सङ्कल्पे विशेषः ।

मम जन्मप्रभृत्यद्यतनादिनं यावत् वाङ्मनःकायकृतानां बुद्धिपूर्वाबुद्धिपूर्वाणां सकृदभ्यासविषयाणां महापातकातिपातकोपपातकानां शोधनार्थं सकलपापक्षालनार्थं छन्दसां अस्थानोच्छ्वासविच्छेदैः प्रामादिकैश्च घोषणाध्यापनाद्यनध्यायाधीताऽध्ययनदोषनिवृत्त्यर्थं परद्रव्यापेक्षया प्रवर्द्धितलोभाच्छन्दसां पराधीनतया प्रयुञ्जितत्वदोषनिवृत्त्यर्थं द्रव्याध्ययनयोर्विनिमयेन अध्यापनादिदोषनिवृत्त्यर्थं अनधिकारिभिश्छन्दःश्रवणाद्यनेकदोषनिवृत्त्यर्थं छन्दसां यातयामत्वदोषनिवृत्त्यर्थं अयातयामत्वफलप्राप्त्यर्थं ब्रह्माद्यायनेकदिवौकसां गौतमाद्याद्यनेकऋषीणां च जलार्थीतयाऽऽगमनेन मम शरीरे अशेषोपार्जितपापप्रशमनार्थं गौतमादिसप्तर्षीणां अरुन्धतीगणेशगोभिलाचार्यप्रवचनकर्तृदुर्गासहितानां आवाहनादिस्थापनप्रतिष्ठापूजनतर्पणकरणे-

ऽधिकारार्थं, ( उत्सर्गश्चेत् पूजनतर्पणउत्सर्जनकरणेऽधिकारार्थं ) अस्यां भागीरथ्यां, अस्यां नद्यां वा, अस्मिन् तडागे वा स्नानविधिना स्नानमहं करिष्ये ।

---

## अथ विष्णुपूजनम् ।

तत्र आचमनप्राणायामान्ते सङ्कल्पः—देशकालौ सङ्कीर्त्य "गौतमादिसप्तर्षीणामरुन्धती—गणेश—गोभिलाचार्य—प्रवचनकर्तृदुर्गासहितानामावाहनादिस्थापन-प्रतिष्ठा—पूजनतर्पणोपाकर्मकरणेऽधिकारार्थं ( उत्सर्गश्चेत् 'पूजनतर्पणोत्सर्गकरणेऽधिकारार्थं ) श्रीविष्णोः प्रीत्यर्थं विष्णोः षोडशोपचारैर्देहन्यासपूर्वकं यथाशक्ति पूजनमहं करिष्ये ।" तत इदं विष्णुरित्येकमन्त्रेण षोडशभिर्वा मन्त्रैः स्वदेहे न्यासं कुर्यात् । तत्र अङ्गक्रमो यथा—"करयोः पादयोर्जान्वोः कट्योर्नाभौ हृदि क्रमात् । कण्ठे बाह्वोर्मुखे नेत्रे मूर्ध्नि वामाङ्गतो न्यसेत् ॥" स्वदेहे न्यासं कृत्वा तथैव देवे न्यासं कुर्यात् । षोडशर्चपक्षे न्यासपूजनक्रमो यथा——

३ २उ ३ १ २ ३ १ २र ३ २ १ २

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पा९

३ २

सुरे ॥ वामकरे न्यासः । पूजने तु—भगवते श्रीमहाविष्णवे नमो ध्यायामि ।

१ २ ३ १ २र ३ १ २ ३ १ २ २ ३ १ २

त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि

३ १ २

धारयन् ॥ दक्षिणकरे । आसनं समर्पयामि ।

२ ३ १ २ ३ १ २ ३ १ २ ३ २ १ २ ३ २ ३

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः

२ २

सखा ॥ वामपादे । पाद्यं सम० ।

१ २र ३ २ ३ १ २२ ३ १ २ ३ २ २ २ ३

तद्विष्णोः परमं पद९ सदा पश्यन्ति सूरयः । दिवीव चक्षु-

१ २

राततम् ॥ दक्षिणपादे । अर्घ्यम्० ।

तद्विप्रासो विपन्युवो जागृवाꣳसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ वामजानुनि । अर्घ्यान्ते आचमनीयम्० ।

अत्र ऋषिपूजनप्रकरणोक्ततत्तन्मन्त्रैः ( पृ० ७, पं० ३ ) पञ्चामृतस्नानं कार्यम् । ततः—अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्या अधि सानवि ॥ दक्षिणजानुनि । शुद्धोदकस्नानम्० । स्नानान्ते–'तद्विप्रासो'० इति मन्त्रेणाचमनीयम् ।

प्रक्षस्य वृष्णो अरुषस्य नूमहः प्रनो वचो विदथा जातवेदसे । वैश्वानराय मतिर्नव्यसे शुचिः सोम इव पवते चारुरग्नये ॥ वामकट्याम् । वस्त्रम्० । आचमनीयम्० ।

प्रकाव्यमुशनेव ब्रुवाणो देवो देवानां जनिमाविवक्ति । महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् ॥ दक्षिणकट्याम् । यज्ञोपवीतम्० । आचमनीयम्० ।

सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् । स भूमिꣳसर्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ नाभौ । चन्दनम्० ।

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः । तथा विश्वꣳव्यक्रामदशनानशने अभि ॥ हृदि । पुष्पम्० ।

पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम् । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥ कण्ठे । धूपम्० ।

तावानस्य महिमा ततो ज्यायाꣳश्च पूरुषः । उतामृतत्वस्येशानो यदन्नेनाति रोहति ॥ वामबाहौ । दीपम्० ।

ततो विराडजायत विराजो अधि पूरुषः । स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ दक्षिणबाहौ । नैवेद्यम्० । आचमनीयम्० । ताम्बूलम्० ।

किमित्ते विष्णो परिचाक्षिनामप्रयद्वक्षे शिपिविष्टो अस्मि । मावर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ॥ मुखे । नमस्कारम्० ।

प्रतत्ते अद्य शिपिविष्ट हव्यमर्य्यः शꣳसामि वयुनानि विद्वान् । तं त्वा गृणामि तव समतव्यान्क्षयन्तमस्य रजसः पराके ॥ नेत्रयोः । प्रदक्षिणाम्० ।

वषट् ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्द्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ शिरसि । दक्षिणाम्० ।

ततः पूजनान्ते हस्ते तुलसीपुष्पचन्दनानि गृहीत्वा, इदं विष्णुरिति मन्त्रं षोडशवारं षोडशर्चं वा पठित्वा "अनया यथाकृतपूजया भगवान् श्रीपापापहा महाविष्णुः प्रीयताम् तत्सत्" इति पुष्पादीनि विष्णवे समर्प्य, प्रार्थयेत् । "विष्णोः षोडशोपचारैः देहन्यासपूर्वकं यथाशक्ति पूजनं परिपूर्णमस्तु । ऋषीणां पूजनतर्पणोपाकर्म ( पूजनतर्पणोत्सर्जन ) करणेऽधिकारोऽस्तु । यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥ ॐ विष्णवे नमः ।" ततश्चरणोदकमनेन मन्त्रेण पिबेत्—"अकालमृत्युहरणं सर्वव्याधिविनाशनम् । विष्णोः पादोदकं पीत्वा जठरे धारयाम्यहम् ॥ अकथितानि पापानि सञ्चितानि भवन्त्यपि । तानि

सर्वाणि नश्यन्ति पीते चरणोदके हरेः ॥" तत ऋषीन्पूजयेत् । ऋषिपूजनात्प्राक् ऋषिर्विप्रेति मन्त्रेण षोडशाङ्गेषु न्यासं कुर्यात् । तत्र विनियोगः "ऋषिर्विप्रेत्युशना त्रिष्टुप् ऋषयः न्यासे विनियोगः ।" मन्त्रस्तु पृ० ६ पं० १४ द्रष्टव्यः । अस्मिन्न्यासे क्रमे विशेषो यथा—"मूर्ध्नि नेत्रे मुखे बाह्वोस्तथा कण्ठे हृदि क्रमात् । नाभौ कट्योश्च जानुभ्यां पादयोः करयोर्न्यसेत् ॥"

---

## निरग्निककर्तृकतर्पणे विशेषः ।

तर्पणे निरग्निकेन सर्वत्र द्वितीयान्तं नामोच्चार्य तर्पयामीत्यन्तेन "ब्रह्माणं तर्पयामि" इति तर्पणं कर्तव्यम् ।

ॐ ब्रह्माणं तर्पयामि ॥१॥ ॐ विष्णुं त० ॥२॥ ॐ रुद्रं त० ॥३॥ ॐ प्रजापतिं त० ॥४॥ ॐ वेदांस्त० ॥५॥ ॐ देवांस्त ॥६॥ ॐ छन्दांसि त० ॥७॥ ॐ ऋषींस्त० ॥८॥ ॐ पुराणाचार्यांस्त० ॥९॥ ॐ गन्धर्वांस्त० ॥१०॥ ॐ इतरांस्त० ॥११॥ ॐ मासन्त० ॥१२॥ ॐ संवत्सरं सावयवं त० ॥१३॥ ॐ देवीस्त० ॥१४॥ ॐ अप्सरसस्त० ॥१५॥ ॐ देवानुगांस्त० ॐ ॥१६॥ नागांस्त० ॥१७॥ ॐ सागरांस्त० ॥१८॥ ॐ पर्वतांस्त० ॥१९॥ ॐ सरितस्त० ॥२०॥ ॐ दिव्यान्मनुष्यांस्त० ॥२१॥ ॐ इतरान्मनुष्यांस्त० ॥२२॥ ॐ यक्षांस्त० ॥२३॥ ॐ रक्षांसि त० ॥२४॥ ॐ सुपर्णांस्त० ॥२५॥ ॐ पिशाचांस्त० ॥२६॥ ॐ पृथिवीं त० ॥२७॥ ॐ ओषधीस्त० ॥२८॥ ॐ पशूंस्त० ॥२९॥ ॐ वनस्पतींस्त० ॥३०॥ ॐ भूतग्रामश्चतुर्विधन्त० ॥ ३१ ॥ अथ प्राचीनावीति ( अपसव्यं ) दक्षिणाभिमुखः पातितवामजानुः कृष्णैस्तिलैर्द्विगुणदर्भैः पितृतीर्थगतैः पितृतीर्थेन तर्पयेत् । ॐ यमन्तर्पयामि ॥१॥ ॐ यमपुरुषांस्त० ॥२॥ ॐ कव्यवाडनलन्त० ॥३॥ ॐ सोमन्त० ॥४॥ ॐ अर्यमणन्त० ॥५॥ ॐ अग्निष्वात्तांस्त० ॥६॥ ॐ सोमपीथांस्त० ॥७॥ ॐ बर्हिषदस्त० ॥ ८ ॥

कव्यवाडादितर्पणान्ते उत्तरवंशीयतर्पणात्प्राक् स्वपितृतर्पणमाचारात्कार्यम् । तद्यथा—गोत्रनामादि द्वितीयान्तमुच्चार्य 'पितरं तर्पयामि इति तर्पयेत् । पितृमातृमातामहादित्रयं प्रत्येकमञ्जलित्रयेण तर्पयेत् । तत्र क्रमः-"पितरम् , पितामहम् , प्रपितामहम् । मातरम् , पितामहीम् , प्रपितामहीम् । सपत्नजननीम् । मातामहम् , प्रमातामहम् , वृद्धप्रमातामहम् । अग्रे एकैकाञ्जलिना तर्पयेत् । मातामहीम् , प्रमातामहीम् , वृद्धप्रमातामहीम् । पत्नीम् । तनयम् । तनयाम् । पितृव्यकम् , पितृव्यकपत्नीम् । मातुलम् , मातुलानीम् । भ्रातरम् , भ्रातृपत्नीम् । पितृष्वसारं सापत्यां सधवाम् । मातृष्वसारं सापत्यां सधवाम् । भगिनीं सापत्यां सधवाम् । श्वशुरम्, श्वश्रूम् । गुरुम्, गुरुपत्नीम् । शिष्यम् । आप्तम् ।"

ततः सनकादितर्पणान्ते "येषां न पिता न भ्राता न पुत्रो नान्यगोत्रिणः । ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः कुशैः सदा ॥" इति मंत्रेण कुशांस्त्यक्त्वा सव्येनाचम्य, ततोऽपसव्येनैव दक्षिणाभिमुखस्तिष्ठन्नपसव्येन वेष्टयन्स्थले स्नानवस्त्रैकदेशं निष्पीडयेत् । तत्र मंत्रः— "ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः । ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥" इति ( इदं गृहे निषिद्धम् ) । ततः सव्यम् , आचमनम् , सूर्यादिभ्यस्तत्तन्मंत्रेणार्घ्यं दद्यात् । यथा— बण्महानिति मन्त्रस्य जमदग्निर्बृहती सूर्यः अर्घप्रदाने विनियोगः ।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ ९ ३ १ २
ॐ बण्महाँ२ असि सूर्य बडादित्य महाँ२ असि । महस्ते सतो महिमाप-
३ १ २ ३ १ २
निष्टममह्ना देव महाँ२ असि ॥ सूर्य एष तेऽर्घः ॥१॥ आप्यायस्वेति गौतमो गायत्री सोमः अर्घप्र० गः । ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ॥ सोम एष तेऽर्घः ॥२॥

३ २ ३ २
अग्निर्मूर्द्धेति वरुणो गायत्री भौमः अर्घप्र० गः ॥ ॐ अग्निर्मूर्द्धा-
३ २ ३ १ २र ३ २ ३ २ ३ १ २र
दिवः ककुत्पतिः पृथिव्या अयम् । अपाँ२ रेताँ२ सि जिन्वति ॥ भौम एष० ॥३॥ अग्ने विवस्वेति मण्डोर्जमदग्निर्बृहती बुधः अर्घप्र० गः ।

ॐ अग्ने विवस्वदुषसश्चित्रँ राधो अमर्त्य । आदाशुषे जातवेदो वहा-
त्वमद्या देवाँ उषर्बुधः ॥ बुध ए० ॥४॥ बृहस्पत इत्यप्रतिरथस्त्रि-
ष्टुब्बृहस्पतिः अर्घप्र०गः ॥ ॐ बृहस्पते परिदीया रथेन रक्षोहामि-
त्राँ अपबाधमानः । प्रभञ्जंत्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यवि-
ता रथानाम् ॥ गुरो ए० ॥५॥ शुक्रन्त इति भरद्वाजस्त्रिष्टुप् शुक्रः
अर्घप्र०गः ॥ ॐ शुक्रन्ते अन्यद्यजतंते अन्यद्विषुरूपे अहनी द्यौरिवा-
सि । विश्वा हि माया अवसि स्वधावन् भद्रा ते पूषन्निह रातिरस्तु ॥
शुक्र ए० ॥६॥ शंनोदेवीरिति सिन्धुद्वीपो गायत्री शनिः अर्घप्र०गः ॥
ॐ शंनो देवीरभिष्टये शन्नो भवन्तु पीतये । शं योरभि स्रवन्तु नः ॥
शने ए० ॥७॥ कया नश्चित्र इति वामदेवो गायत्री राहुः अर्घप्र०गः॥
ॐ कया नश्चित्र आभुवदूती सदा वृधः सखा । कया शचिष्ठया वृता ॥
राहो ए० ॥८॥ केतुं कृण्वन्निति मधुच्छन्दा गायत्री केतवः अर्घप्र० ।
ॐ केतुं कृण्वन्न केतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥
केतव ए० ॥९॥ इति ॥

## सामवेदीयस्नानविधिपरिशिष्टम् ।

अथ स्नानविधिं व्याख्यास्यामो नदीदेवखातगर्त्तप्रस्रवणादीन्गत्वा, शुचौ देशे मृत्तिकाकुशगोमयाक्षतानुपकल्प्य, पारक्यपाने पञ्च पिण्डानुद्धृत्य, नमस्कृत्य तीर्थं पावकानः सरस्वतीति, पादावारभ्य मृद्भिर्गात्राणि प्रक्षाल्योपविश्य, बद्धशिखी नित्ययज्ञोपवीत्याचम्य, प्राङ्मुख उदङ्मुखो वा कुशहस्तः शुचिः समाहितोऽथ सप्त व्याहृतीः सावित्रीञ्च जपित्वा सप्तकृत्वः सावित्र्यानुमन्त्रितं, सकृदुदकमाचामेत्तत आचम्यापो यथाविध्याचम्यापो यथाविधि ॥१॥ अथ देवताभिसन्धिं कृत्वा, सहस्रशीर्षाघृतवत्यश्वक्रान्त इत्याभिर्ऋग्भिर्मृत्तिकामादायेदं विष्णुर्विचक्रम इति षडृचेन सम्मृज्यो-

-द्वयन्तमसस्पर्युदुत्तममिति चोर्ध्वौ पाणी कृत्वाऽऽदित्यमवेक्षेतोद्धृ-
तासि वराहेणामोसीति च मृद्भिर्गात्राणि प्रतिलोमान्यङ्गान्यभि-
मृशेरन् द्विरेतयैवावृता कृत्वा, गावाश्चिद्घासमन्यव अग्रमग्रश्चरन्ती-
नामित्येतेन गोमयं गात्रेषु मृत्तिकावद्दतञ्च सत्यञ्चेति त्रिः शुष्का-
घमर्षणञ्जपेत्ततो देवताभिसन्धिं कृत्वा,नाभिमात्रेजले स्थित्वा, शन्नो-
देव्यापोहिष्ठयािाभिः पावमानीभिस्तरत्समन्दीभिरेतोन्विन्द्रꣳस्तवाम
तमुष्टवाम नकिइन्द्रत्वदुत्तरमित्याभिर्ऋग्भिः पवित्रवतीभिरोङ्कार-
व्याहृतीभिर्मार्जयित्वा, त्रिः प्राणायामं कृत्वा, त्रिःप्लुत्य, सहस्रशीर्षा
इति तृचेनाघमर्षणं जपेत्ततस्त्रिराप्लुत्य, पुनः शन्नोदेव्यादिभि-
र्मार्जनञ्च मार्जनञ्च ॥ २ ॥ अथ नित्यवत्संध्यामुपासीतोदुत्यं
चित्रमायङ्गौरपत्त्येता तरणिरुद्यामेष्याभिर्ऋग्भिः सवितुरुपस्थानं नमो
ब्रह्मण इत्युपजाय चेत्येवमन्तेनाग्निस्तृप्यत्विति च (तृप्यतां सर्वत्र)
सव्येनैताꣳस्तर्पयेदथापसव्येन राणायनीशटीत्यथ कव्यवाळादयो
दिव्यान्यमाꣳश्चाथात्मीयाꣳश्च त्रीन्पितृतस्त्रीन्मातृतस्त्रीन्मातामह-
तस्तत्पत्न्यश्च पितृतर्पणꣳसनकादयश्च निवीत्यथ मनुष्यधर्मास्ततो
गायत्र्यष्टशतमादौ कृत्वा, भासन्दशस्तोभमुन्नयङ्गायत्रीसामौशनꣳ-
शुद्धाशुद्धीये राजनरौहिणके बृहद्रथन्तरे पुरुषगतिर्महानाम्न्यो महा-
दिवाकीर्त्यं ज्येष्ठसामानि देवव्रतानि पुरुषव्रतान्यनुगानं तवश्यावी-
यमादित्यव्रतमेकविꣳशत्यनुगानम्पर्कादारभ्य यथाशक्त्यहरहर्ब्रह्म-
यज्ञ इति गोभिलीयाद्गोभिलीयात् ॥ ३ ॥ आप्लवने तु सम्प्राप्ते
तर्पणं तदनन्तरम् । गायत्रीञ्च जपेत्पश्चात्स्वाध्यायञ्चैव शक्तितः॥४॥
आप्लवने तु सम्प्राप्ते गायत्रीं जपतः पुरा । तर्पणं कुर्वतः पश्चात्
स्नानमेव वृथा भवेत् ॥५॥ इति स्नानविधिपरिशिष्टं समाप्तम् ।

---

(१)

## श्रीसामवेदीयोपाकर्मपरिशिष्टम् ।

प्रौष्ठपदशुक्लपक्षे हस्तेनाचार्यः सशिष्यः प्राङ्मुख उदङ्मुखो
वा ग्रामान्निष्क्रम्य,यथाविधि शुच्युदके स्नात्वाऽऽचम्य,कौशान् सप्त
ऋषीन् स्थलेऽवस्थाप्य, गन्धमाल्यादिभिः सम्पूज्य, नाभिदघ्न उद-

के स्थित्वा सशिष्य ॐकारो महाव्याहृतयो गायत्री ब्रह्मा वेदा देवा ऋषयश्छन्दाꣳस्याचार्यास्तृप्यन्तामोङ्कारं तर्पयेद्भूर्भुवः स्वरिति व्याहृतीस्तत्सवितुरिति गायत्रीꣳ सोमꣳराजेति ब्रह्माणमग्न आयाहि दशभिर्वेदाꣳउपास्मै इत्यद्ध्यायेन देवाꣳस्तर्पयेद्दगन्तैस्तर्पणमृषिर्विप्रेति ऋषिमग्न आयाहि गायत्री पुरुत्वा उष्णिगग्नओजिष्ठमनुष्टुब्यज्ञायज्ञा बृहती स्वादोः पङ्क्तिराजुहोता त्रिष्टुप्चित्रइ जगतीति छन्दाꣳसि, प्रवोमहेऽतिजगती प्रोष्वस्मै शक्करी तवत्यतिशक्करी त्रिकद्रुकेष्वष्टिरस्तु श्रौषडत्यष्टिर्धर्मस्र धृतिः सर्पतातिधृतिरित्यतिछन्दाꣳसि,संयमन्नेति कृतिश्चराचराय प्रकृतिर्द्यौरक्रान्नाकृतिर्व्योतिष्पत विकृतिर्मनोजयित्संकृतिः प्रागन्यदभिकृतिराधिपत उत्कृतिरिति विच्छन्दाꣳसि, नमो ब्रह्मण इत्येकखण्डमेवास्या ब्रह्माणं तर्पयेद्भूतग्राममिति प्रथमान्तैश्चाशिस्तृप्यत्विति च तृप्यतां वा सर्वत्र, सव्येनैताꣳस्तर्पयेदथापसव्येन तिलैर्द्विगुणदर्भैः पितृतीर्थेन ॐकारो महाव्याहृतयो गायत्री ब्रह्मा वेदा देवा ऋषयः पितरश्छन्दाꣳस्याचार्यास्तृप्यन्तामेवन्त्री राणायनीशाटीत्याचार्या इति पितॄनेकैकांस्तृभिस्तर्पयेन्निर्वीतिस्तर्पयेच्छुद्धोदकाञ्जलिभिः सातिलैरथान्वालभ्य, पुवेन ऋषीनाप्लाव्य निमज्याचम्यारिष्टसामानि गायंत्यृषीनानयन्त्यर्घादिभिः सम्पूजयन्ति येषां प्रथमं वेदारंभस्तेषामत्र वृद्धिश्राद्धमथाचार्यस्य वैरूपाक्षान्ते कर्मणि कृते व्याहृतित्रयहोमः शिष्याणां गायत्री गायत्रबार्हस्पत्यानुवचनं ब्राह्मणभोजनदक्षिणानादꣳ रहस्यानामेवोदगयन उपाकरणं पुष्यपौर्णमास्यां छन्दसामुत्सर्गं प्रौष्ठपद उपाकरणदिवसाद्ध्येयः पुष्यस्तत्रोत्सर्गस्तत्राप्येवमृषितर्पणमृषिप्लावनमारिष्टसामानि गायति वामदेव्यगानꣳ शान्त्यर्थꣳ शान्त्यर्थम् ॥१॥ इति उपाकर्मपरिशिष्टं समाप्तम् ।

---

(२)

## उपाकर्मपरिशिष्टम् ।

अथातश्छन्दसामुत्सर्गोपाकरणक्रियां व्याख्यास्यामः । प्रौष्ठपदतिष्येण बहिरपोऽभ्येत्योपस्पृश्य, कृतकृत्याः कौशानृषीꣳ स्थ-

ऽवस्थान् गन्धमाल्यधूपादिभिः सम्पूज्य, नाभिदघ्न उदकेऽनुपवि-
श्य ब्रह्माणं वेदान्देवानृषींश्छन्दाꣳस्याचार्यांश्च तर्पयन्त उच्चै-
रृषीनभिषिञ्चन्ति तृप्यतां चोत्तराध्यायेन वꣳशैश्च, ततः प्राची-
नावीतिन ऋषिपदादुपरि पितृपदेनोत्तरवꣳशैश्चाभिषिच्याचम्य,
प्लवेन ऋषीन् प्लावयन्त्यप्सु निमज्जन्ति, तत आपुनरुपाकरणा-
द्वेदं न व्याहरेयुरन्यत्र ब्रह्मयज्ञात्ततः सावित्रेण बहिरेवाप उपस्पृ-
शन्त्युत्सर्गेणैवोपाकरणं व्याख्यातमृषिमाल्यं प्लावयन्त्यपस्तथैव
निमज्याचम्यारिष्टसामानि गायन्त ऋषीनानीयार्घ्यादिभिः सम्पू-
ज्य, पुरस्ताच्छालाया उपलिप्तेऽग्नेः पश्चादाचम्योपविश्य, व्याहृति-
त्रयहोमान्तं कर्म कृत्वा, गायत्रीं गायत्रं बार्हस्पत्यं चानूच्य, वेद-
मारभ्य, छन्दाꣳस्यतिछन्दाꣳसि विच्छन्दाꣳसि सर्पिषा हुत्वा, गा-
नेषु पर्वादीन्वेदे षडङ्गे वा ग्रन्थादीन्ये वाऽधीता येषां वा जायन्ते ता
जुहोति व्याहृतीश्च, ततस्तन्त्रꣳ समाप्य, प्रतिसरान् दक्षिणे पाणा-
वाबध्नीरन् स्वस्त्ययनार्थमथ दध्यक्षतधाना भक्षयन्ति दधिक्रा-
व्णेन दधि, धानावन्तेन धाना, असꣳस्वादन्निगीर्याचम्योपविश्या-
नुवचनमनुगानं कृत्वाऽथ यथार्थमग्न आयाहि पुरुत्वाऽग्न ओजिष्ठं
यज्ञा स्वादोराजुहोता चित्र इति छन्दाꣳसि, प्रवोमहे प्रोष्वस्मै तव-
त्यं नर्यं त्रिकद्रुकेष्वस्तुश्रौषट् घर्मः प्रत्नः सर्पतेत्यतिच्छन्दाꣳसि,
संयमꣳश्वराचराय द्यौरक्रान्ज्योतिष्पत मनोजयित्प्रागन्यदधिपत इति
विच्छन्दाꣳस्युत्सर्गोपाकरणमुत्सर्गोपाकरणम् ॥ १ ॥

इति उपाकर्मपरिशिष्टम् ।

---

## अथ प्रौष्ठपदीपरिशिष्टम् ।

प्रौष्ठपदशुक्लपक्षे हस्तेनाचार्यः सशिष्यः प्राङ्मुखो वा वृद्धपुरः
सरो ग्रामान्निष्क्रम्य, यथाविधि शुच्युदके स्नात्वा, कौशान्त्सम-
र्पीन्स्थलेऽवस्थाप्य, गन्धमाल्यादिभिः सम्पूज्य, नाभिदघ्न उदके-
ऽवस्थाय सशिष्य ॐकारो महाव्याहृतयो गायत्री ब्रह्मा वेदा
देवा ऋषयश्छन्दाꣳस्याचार्यास्तृप्यन्तामग्न आयाहि दशत्युप्यास्मा
इत्यध्यायेन ऋगन्तैः सपर्वणमर्द्धर्चैर्वा व्याहृतिभिर्वꣳशैर्गायत्री

गायत्र्यादिच्छन्दोभिर्विच्छन्दोभिर्वःशैश्च ऋषीणां प्रतिनामभिः प्रथमान्तैरग्निस्तृप्यत्विति तृप्यतां वा सर्वत्र सव्येनैताःस्तर्पयेद्-थापसव्येन तिलैर्द्विगुणदर्भैः पितृतीर्थेन ॐकारो महाव्याहृतयो गायत्री ब्रह्मा वेदा देवा ऋषयः पितरश्छन्दाःस्याचार्यास्तृप्यन्तामेवं त्री राणायनिशटीत्युत्तरवंशैश्चाभिषिच्योदकाञ्जलीभिः सतिलैर्-थान्वालभ्य प्लवेन साम्ना ऋषिमाल्यं प्लावयन्त्यप्सु निमज्याच-म्यारिष्टसामानि गायन्त ऋषीनानयन्त्यर्घादिभिः सम्पूजयन्ति, येषां प्रथमं वेदारम्भस्तेषामत्र वृद्धिश्राद्धमथाचार्यस्य वैरूपाक्षान्ते कर्माणि कृते व्याहृतित्रयहोमः शिष्याणां गायत्री-गायत्र-बार्हस्प-त्यानुवचनं वेदारम्भश्छन्दोहोमश्छन्दाःस्यग्न आयाहि गायत्री, पुरुत्वा उष्णिगग्न ओजिष्ठ अनुष्टुब् , यज्ञायज्ञा बृहती, स्वादोः पङ्क्तिराजुहोता त्रिष्टुप् , चित्र इज्जगतीति छन्दाःसि, प्रवोमहेत्य-तिजगती, प्रोष्वस्मै शक्करी, तवत्यन्नर्यमातिशक्करी, त्रिकद्रुकेष्वष्टि-रस्तु श्रौषडत्यष्टिर्घर्मः प्रवृक्त धृतिः, सर्पत प्रसर्पतातिधृतिरित्य-तिच्छन्दाःसि, संयमन् कृतिश्चराचराय प्रकृतिर्द्यौरक्रानाकृतिर्ज्यो-तिष्पत विकृतिर्मनोजयित्संकृतिः, प्रागन्यदभिकृतिरधिपत उत्कृ-तिरिति विच्छन्दाःसि, घर्मः प्रवृक्त इत्यत आरभ्य स्तौभिकानि नव च्छन्दाःसि, तान्येकैकाक्षरवृद्धानि, गानपर्वादिहोमो वेदग्र-न्थादिहोमोऽङ्गादिहोमः सर्वप्रायश्चित्तादितन्त्रसमापनं, प्रतिसरब-न्धो 'त्वंयविष्ठेति'मन्त्रेण, धानावन्तमिति धानाभक्षणमनाचान्ता एव दधिभक्षणमाचमनःशिष्याणां ऋक्त्रयानुवचनः सामत्रयानु-गानं वामदेव्यगानः रहस्यानामेवोद्गयन उपाकरणं पुष्यपौर्णमा-स्यां छन्दसामुत्सर्गः, प्रौष्ठपद उपाकरणदिवसस्याधस्ताद्यः पु-ष्यस्तत्रोत्सर्गस्तत्राप्येवमेव ऋषितर्पणमृषिमाल्यप्लावनमन्ते व्या-हृतिभिर्होमो महस्त्वयोऽपि ग्रन्थान्तरोक्तहोमो दुःस्वप्नेष्वद्यनोदेव-सवितरिति जपाश्चित्यस्पर्शनादिनिमित्तेषु पुनर्मामैत्वित्याहुतिहोमः ।

इति प्रौष्ठपदीपरिशिष्टं समाप्तम् ।

## अथ गोभिलोक्तोपाकर्मोत्सर्गसूत्राणि ।

प्रौष्ठपदीं हस्तेनोपाकरणम् ॥१॥ महाव्याहृतिभिर्हुत्वा शिष्याणाᳪसावित्र्यनुवचनं यथोपनयने ॥२॥ साम सावित्रीश्च सोमᳪराजानं वरुणमिति ॥३॥ आदितश्छन्दोऽधीत्य यथार्थम् ॥४॥ अक्षतधाना भक्षयन्ति धानावन्तं करम्भिणमिति ॥५॥ दध्नः प्राश्नन्ति दधिक्राव्णो अकारिषमिति ॥६॥ आचान्तोदकाः खाण्डिकेभ्योऽनुवाक्या अनुगेयाः कारयेत् ॥७॥ सावित्रमहः काङ्क्षन्त उदगयने च पक्षिणीᳪरात्रिमुभयत एके त्रिरात्रम् ॥८॥ आचार्याणां चोदकोत्सेचनमुभयत्र ॥९॥ श्रवणामेक उपाकृत्यैतमासावित्रात्कालं काङ्क्षन्ते ॥१०॥ तैषीमुत्सृजन्ति ॥११॥ प्राङ्वोदङ्वा ग्रामान्निष्क्रम्य या आपोऽनवमेहनीयास्ता अभ्येत्योपस्पृश्य छन्दाᳪस्यृषीनाचार्यांश्च तर्पयेयुः ॥१२॥ तस्मिन्प्रत्युपाकरणेऽभ्रानाध्याय आपुनरुपाकरणाच्छन्दसः ॥ १३ ॥

इति गोभिलीयोपाकर्मोत्सर्गसूत्राणि ।

श्रीशिवराम शुक्लविरचितायां

गृह्यकारिकायां

## उपाकर्मप्रकरणम् ।

अथोपकरणं कर्म गोभिलोक्तं विविच्यते । अधीतवेदा ये विप्रा वेदमध्यापयन्ति ये ॥१॥ अधिकारः स्मृतस्तेषां तथा चाग्निमतामपि । दैवादनग्निमान्यः स्यादध्यापकश्च यो भवेत् ॥२॥ तेनापीदं प्रकर्तव्यमिति केचित्समूचिरे । मासे प्रौष्ठपदे हस्त ऋक्षे तूपाकृतिर्भवेत् ॥३॥ प्रौष्ठपदीमिति पदं द्वितीयासंयुतं तु यत् । प्रतिपदसाकाङ्क्षं तत् ज्ञेयमिति भाष्यकृत् ॥४॥ प्रतिवर्षमिदं तस्मात् कातीयवचनादपि । कर्तव्यमिह तच्छन्दोयातयामत्वमन्यथा ॥५॥ नापैति नियमेनैव तस्मादेतत्समाचरेत् । हस्तादधस्तात्पुष्ये तु वेदस्योत्सर्जनं चरेत् ॥६॥

यद्युपाकृतिनक्षत्रे रवेः सङ्क्रमणं भवेत् । नोपाकृतिस्तदा कार्येत्येवं स्मृतिविदो विदुः ॥७॥ अर्द्धरात्रादधस्ताच्चेत्सङ्क्रान्तिस्तर्हि दोषकृत् । अर्द्धरात्रात्परं क्रान्तौ न दोषः स्यादुपाकृतौ ॥८॥ नोपाकर्माधिमासे स्यादन्यशाखासु सर्वदा । अधिमासेऽपि साम्नां स्याद्गार्ग्यस्मृतिवचोबलात् ॥९॥ यतः सिंहरवौ गार्ग्यश्छन्दोगानामुपाकृतिम् । प्राह भाद्रेऽधिके मासि सिंह एव रविर्भवेत् ॥१०॥ यदि न स्यात् सिंहरविः प्राङ् मासाधिक्ययोगतः । तदा सूत्रबलाद्भाद्रे कन्याऽर्केऽपि भवेदिदम् ॥११॥ स्वसूत्रविहितः कालो यदि स्याद्दोषसंयुतः । तदा श्रावणहस्तेऽपि सिंहार्के तत्समाचरेत् ॥१२॥ ततः प्राचीनपुष्ये तु तदुत्सर्गोऽपि सम्मतः । परिशिष्टोक्तनक्षत्रद्वयोरेवमनुग्रहे ॥१३॥ तद्धस्ते दोषसत्तायां श्रावण्यां वा भवेदिदम् । 'श्रवणामेक' इत्यादि स्वसूत्रे कालबोधनात् ॥१४॥

हस्तं यावदनध्यायः पक्षेऽस्मिन् भवति ध्रुवम् । द्वेधा विभक्तादिवसापराह्णे स्यादुपाकृतिः ॥१५॥ अखण्डे हस्तनक्षत्रे, खण्डे चित्रायुते भवेत् । उदये सङ्गवव्यापिहस्तर्क्षे वै यदा भवेत् ॥१६॥ तदा चित्रायुतं ग्राह्यं, नान्यासौ तद्भवेदिदम् । ग्रहवेधो न चात्रास्ति प्रथमारम्भ एव सः ॥१७॥ मलमासादिदुष्टेषु कालेषु स्मृतिवाक्यतः । उत्सर्गकालकथने तैषीति यदुदीरितम् । तिष्यः पुष्य इति प्रोक्तस्तद्युक्ता या तिथिर्भवेत् ॥१८॥ सैव तैषी समाख्याता तस्यामुत्सर्जनं भवेत् । अथोपाकरणे सर्वं प्रयोगाय विविच्यते ॥१९॥

आरम्भे प्रथमे प्राप्ते नान्दीश्राद्धकृतेरनु । ग्रामात्प्राग्वाथ वोदग्वा विनिःक्रम्य सशिष्यकः ॥२०॥ आपो याश्चानवमेहनीयाः प्राप्य शुचिर्गुरुः । मिह सेकक्रियायां स्याद्गुदे लिङ्गेऽप्यसौ भवेत् ॥ २१ ॥ ताभ्यामधो वर्तमाना अवमेहनिकाः स्मृताः । तदूर्ध्वं वर्तमानास्त्वनवमेहनिका हि ताः ॥२२॥ नाभिदघ्नाश्च या आपस्ता अभ्येत्य समाहितः । शुचौ देशे तु सम्भारान्सादयेच्च मृदादिकान् ॥२३॥ यथोक्तविधिना स्नात्वा सन्त-

र्घ्यं च सुरादिकान् । पितॄन्मनुष्यान् सन्तर्प्य ततो ऋषीन् प्रपूजयेत् ॥२४॥ देशकालौ च सङ्कीर्त्य छन्दसामिति कीर्तयेत् । आध्यायनं समुच्चार्य उपाकर्माङ्गमुच्चरेत् ॥२५॥ ऋषीणां पूजनमहं करिष्य इति चोच्चरेत् । कौशान् दर्भचटून्पश्चात्कुर्याद्‌द्वादशसङ्ख्यया ॥२६॥ स्थापयेद्वेदिकायां तानावाहनमथाचरेत् । इममिन्द्रेति साम्ना वै गौतमं च समाह्वयेत् ॥२७॥ भरद्वाजमथाग्निन्द्र विश्वामित्रमतः परम् । असाविसोमसाम्ना तु जमदग्निमतः परम् ॥२८॥ पिबासुतेति साम्ना तमिममीति वशिष्ठकम् । कश्यपं कश्यपस्येति अत्रिं बृहद्वयेति च ॥२९॥ अरुन्धतीमिᳪस्तोममिति साम्ना समाह्वयेत् । इष्कर्तारमध्वरेति प्रवचनस्य कर्तृकान् ॥३०॥ हावास्मेति गोभिलं वै आतूनआ गणेशकम् । उभेयदिन्द्र दुर्गां च व्याहृत्या प्रवरानपि ॥३१॥ एवमावाह्य संस्थाप्य प्रतिष्ठां मन्त्रतश्चरेत् । पूजयेदुपचारैश्च दशभिस्तु षडाधिकैः ॥३२॥

ऋषिर्विप्रऋचा कुर्यादुपचारान् समाहितः । पूर्वमावाहनं प्रोक्तमासनं तदनन्तरम् ॥३३॥ ततश्च पाद्यमर्घ्यं च ततस्त्वाचमनीयकम् । स्नानं पश्चामृ तेनैव प्रकुर्यात्स्वस्वमन्त्रतः ॥३४॥ वस्त्रं चैवोपवीतं च अर्चतेति च चन्दनम् । त्वेषस्त इति धूपं च पवमानेति दीपकम् ॥३५॥ फलसाम्ना फलं चैव ऋषिभ्यो विनिवेदयेत् । अहमस्मेति नैवेद्यमुद्य नीराजनं चरेत् ॥३६॥ ततो देयः प्रमाणश्च ततो देया प्रदक्षिणा । विसर्जनान्ता इमे कार्या उपचारास्तु षोडश ॥३७॥

कुशाक्षतानथादाय नाभिदघ्नजले व्रजेत् । तिष्ठन् सन्तर्पयेत्तत्र देवतीर्थेन संयतः ॥३८॥ सरलैश्च कुशैः सम्यक् प्रथमान्तेन तर्पणम् । पठित्वोङ्कार इत्यादि क्षिपेदञ्जलिमम्भसः ॥३९॥ ओमोङ्कार इति प्रोच्य तृप्यत्विति समुच्चरेत् । भूर्भुवः स्वः समुच्चार्य महाव्याहृतयः पदात् ॥४०॥ तृप्यन्त्विति पदेत्तत्सवितुरित्यादिकं पठेत् । गायत्रीति समुच्चार्य तृप्यत्विति ततो वदेत् ॥ ४१ ॥ सोमᳪराजा पठित्वान्ते ब्रह्मा तृप्यतु चोच्चरेत् । अग्न आयाहि दशतिं पठित्वान्ते वदेद्बुधः ॥४२॥

वेदान् सन्तर्पयामिति ऋगन्ते तर्पयेच्छुचिः । तर्पयेदथ चोपास्मा अध्यायेन सुसंयतः ॥४३॥ देवान् सन्तर्पयामीति सप्तव्याहृतिभिर्ऋषीन् । सन्तर्प्य प्रथमान्तेन ततश्छन्दांसि तर्पयेत् ॥४४॥ अग्न आयाहिमन्त्रान्ते गायत्री चैव तृप्यतु । उष्णिक् चैव पुरुत्वान्तेऽनुष्टुब् वै तर्पयेत्ततः ॥४५॥ अग्न ओजिष्ठमन्त्रेण यज्ञाय बृहती ततः । स्वादोरित्था तथा पङ्क्तिस्त्रिप्यतिवति समुच्चरेत् ॥४६॥ आजुहोता तथा त्रिष्टुप् चित्रइज्जगती ततः । प्रवोमहेऽतिजगती प्रोष्वस्मै शक्करी तथा ॥४७॥ तवत्यादित्थतिपूर्वा शक्वर्येवात्र तर्पयेत् । त्रिकद्रुके तथाष्टिश्चास्तुश्रौषडतिपूर्विका ॥४८॥ अष्टिरेव समाख्याता ऋषिभिः शास्त्रदर्शिभिः । घर्मः प्रवृक्त धृतिः सर्पतेत्यतितो धृतिः ॥४९॥ संयमन्कृतिराख्यातं प्रकृतिश्च चराचरा । धीरक्रान्ताकृतिं चैव ज्योतिष्मतश्च वैकृतम् ॥५०॥ मनोजायेत्संकृतिं च प्रागन्यदभिपूर्विकाम् । आधिपत उत्कृतिं चेत्येवं छन्दांसि तर्पयेत् ॥५१॥

सन्तर्पयेदथाचार्यान् वंशीयान् प्रतिनामभिः । प्रथमान्तपदैरेव परिशिष्टवचोबलात् ॥५२॥ नमो ब्रह्मण आरभ्य कृताञ्जलिपुटस्ततः । उपजायचपर्यन्तं पठित्वा तर्पयेद्बुधः ॥५३॥ शर्वदत्तो रुद्रभूतिस्त्रातो निगड एव च । गिरिशर्मा ब्रह्मवृद्धिर्मित्रवर्चास्तथैव च ॥५४॥ सुप्रतीतो बृहस्पतिगुप्तश्च भवत्रातकः । श्रवणदत्तः सुशारदमतः परः ॥५५॥ ऊर्जयन्तो भानुमन्त आनन्दजमतः परः । शाम्बः काम्बोजकश्चैव मद्रगारश्च सातिकः ॥५६॥ सुश्रवाः प्रातरह्नश्च केतुश्च मन्त्रविन्दकः । सुनीथश्च ततः प्रोक्तः सुतेमनस ईरयेत् ॥५७॥ अंशुश्च तपर्येद्देतानमावास्यस्तथैव च । राधश्चैव च गाता च संवर्गजित्तथैव च ॥५८॥ शाकदासो विचक्षणो गर्दभीमुख एव च । ततश्चोदरशाण्डिल्य अतिधन्वा तथैव च ॥५९॥ मशकः स्थिरकश्चैव वासिष्ठश्च सुमन्त्रकः । शुषोऽथ राळकश्चैव हतिरिन्द्रोत एव च ॥६०॥ वृषशुष्णो निकोथश्च प्रतिथिश्चैव तर्पयेत् । देवतरसभाप(?) च शवसोऽग्निभुवस्तथा ॥६१॥ इन्द्रभुवो मित्रभुवो विभण्डकमतः परः । ऋष्यशृङ्गः कश्यपश्चाप्यग्निरिन्द्रश्च वायुकः ॥६२॥ मृत्युः प्रजापतिश्चैव ब्रह्मा च परितर्पयेत् । अग्निः

प्रजापतिश्चैव विश्वेदेवास्तथैव च ॥६३॥ ॐकारोऽथ वषट्कारो महाव्याहृतयस्तथा । गायत्री च तथा ब्रह्मा विष्णुर्वेदास्तथैव च ॥६४॥ देवाश्च ऋषयश्चैव मुनयश्चाथ तर्पयेत् । आचार्याश्च पुराणानि छन्दांसि तर्पयेत्ततः ॥६५॥ यज्ञाश्चाध्ययनं पश्चाद्द्यौश्चैव पृथिवी उभे । अन्तरिक्षं च सन्तर्प्याहोरात्राणि च तर्पयेत् ॥६६॥ मासाश्च ऋतवश्चैव संवत्सरस्ततः परम् । वरुणश्च समुद्राश्च नद्यो गिरय एव च ॥६७॥ क्षेत्राणि च वनान्योषधयश्च तर्पयेत्ततः । वनस्पतय आख्याता पशवश्च ततः परम् ॥६८॥ नागाश्चैवोरगाश्चैव सुपर्णाश्च वयांसि च । गावश्च वसवश्चैव रुद्रादित्यास्तथैव च ॥६९॥ मरुतश्च तथा सिद्धाः साध्या गन्धर्वकास्ततः । पिशाचाश्चैव यक्षाश्च रक्षांसि चैव तर्पयेत् ॥७०॥ भूतानि चैव नक्षत्राण्यश्विनौ तर्पयेत्ततः । अप्सरसश्च सन्तर्प्य भूतग्रामश्चतुर्विधः ॥७१॥ मरीचिश्च तथाऽत्रिश्च अङ्गिरा पुलहस्ततः । पुलस्तिश्च क्रतुरपि प्रचेताश्च वसिष्ठकः ॥७२॥ भृगुश्च नारदश्चैव सप्तर्षयस्तथैव च । अरुन्धती च तत्पत्नी स्वस्ति कुर्वन्ति तर्पिताः ॥७३॥

अपसव्यं विधायाथ पितृतीर्थगतैः कुशैः । द्विगुणैः पितृतीर्थेन ओङ्कारादि पठन् द्विजः ॥७४॥ पितृपदयुतं मन्त्रान्तेन त्रिस्तपर्येत्सुधीः । ततो राणायनिश्चैव स्वाटचमुग्व्यस्तथैव च ॥७५॥ व्यासो भागुरिरौगुंण्डिर्मानुमानौपमन्यवः । काराटिर्मशको गार्ग्यो वार्षगण्यश्च कौथुमिः ॥७६॥ शालिहोत्रिर्जैमिनिश्च त्रयोदश इमे स्मृताः । सामगा चार्यकाः स्वस्ति कुर्वन्ति तर्पिता द्विजैः ॥७७॥ शटिर्भाल्लविश्चैव काल्लविश्च ताण्ड्यकः । वृषाणकः शमबाहू रुरुकिश्चाग्यगस्तिकः ॥७८॥ बष्कशिरा हुहूश्चैव दशैते ऋषयः स्मृताः । प्रवचनस्य कर्तारः स्वस्ति कुर्वन्ति तर्पिताः ॥७९॥ कव्यवालो नलः सोमो यमश्चैवार्यमा तथा । अग्निष्वात्ताः सोमपाश्च बर्हिषद इत्यपि ॥८०॥ यमोऽथ धर्मराजश्च मृत्युरन्तक एव च । वैवस्वतस्तथा कालः सर्वभूतक्षयस्ततः ॥८१॥ आदुम्बरोऽथ दध्नश्च नीलश्च परमेष्ठिकः । वृकोदरस्तथा चित्रश्चित्रगु इति स्मृता ॥८२॥

अथ सन्तर्पयेद्विद्वानृषींश्चोत्तरवंश्यकान् । अर्यमभूतिराद्यः स्या-द्रुद्रशर्मा ततः परः ॥८३॥ पुष्ययशाः सङ्करश्चार्यमराजोऽथ गोभि-लः । पुष्यमित्रो गोभिलश्चाश्वमित्रश्चैव गोभिलः ॥८४॥ वरुण-मित्रो गोभिलो मूलमित्रश्च गोभिलः । वत्समित्रो गोभिलश्च गौ-ल्गुलवीपुत्रगोभिलः ॥८५॥ बृहद्वसुर्गोभिलश्च गोभिलश्च तथा स्मृतः । पुनस्तथैव राधादींस्तर्पयेत्प्रागुदीरितान् ॥८६॥ निवी-ती सनकादींश्च तर्पयित्वा ऋषीन्पुनः । सम्पूज्य च नमस्कृत्य प्लव-वसाम्ना च माल्यकम् ॥८७॥ सम्प्लावयेद्ब्राह्मणस्य प्लवोऽन्वह-मुदाहरन् । स्नात्वाचम्य च हाउ वागित्यादि सामचतुष्टयम् ॥८८॥ गीत्वाऽऽचारादरिष्टानि गायेत्सामानि वाक्यतः । आवाहनं विना सर्वमुत्सर्गेऽपि समाचरेत् ॥८९॥ ऋषीणां प्लावनं तत्र कर्तव्य-मिति सूरयः । उत्सर्गाहं समारभ्य चोपाकरणतः पुरा ॥९०॥ अनध्यायं प्रकुर्वीत परतोऽपि स वक्ष्यते ।

अथोपाकरणायर्षीनानयेत्स्वगृहान्मुदा ॥९१॥ मधुपर्कवि-धानेन पूजयेद्गन्धपुष्पकैः । अथाचम्या च सङ्कल्प्य गृह्याग्नौ स-मिदादिकम् ॥९२॥ आज्यतन्त्रं चरेत्तत्र रक्षा धाना तथा दधि । आसादने विशेषोऽयं धाना भ्रष्टा यवाः स्मृताः ॥९३॥ यवासिद्धार्थधान्यादिग्रन्थयः शुद्धवस्त्रजाः । रक्षा इति समाख्याताः सर्वमन्यत्तु पूर्ववत् ॥९४॥ एतान्यासाद्य सम्प्रो-क्ष्य परिस्तरणमाचरेत् । इध्ममग्नावथाधायाज्यस्य संस्करणं ततः ॥९५॥ पर्युक्ष्य प्रपदं चैव वैरूपाक्षं जपेद्बुधः । स्रुवं सम्मा-र्ज्य जुहुयाद्व्याहृतीनां त्रयं बुधः ॥९६॥ पङ्क्त्याकारेणोपविष्टाञ्छि-ष्यान्वै पाठयेद्गुरुः । खाण्डिकेभ्यश्च यत्प्रोक्तं घटा शिष्यस्य सा स्मृता ॥९७॥ शिष्येभ्यश्चैव सावित्रीं पाठयेदुपवीतवत् । गायत्र्य-श्चैव गायत्री सोमराजेति साम च ॥९८॥ अथाचार्यः स्वयं वेद-मारभेतादिमुच्चरन् । पर्वादीनार्चिकादींश्च ब्राह्मणादींस्ततः परम् ॥९९॥ अङ्गादीनपि च ब्रूयादथ होमं समाचरेत् । आज्यं स्रुवेण जुहुयाच्छन्दोभिः सप्तभिस्त्रिशः ॥१००॥ ऋग्भिरुक्ताभिरेवाथ पूर्वाद्यैरेव सर्वशः । ब्राह्मणाद्यैस्तथाऽङ्गाद्यैर्हुत्वा वस्वन्तमाचरेत् ॥१०१॥ ततः प्रतिसरान् बाहौ दक्षिणे बन्धयेद्द्विजैः । त्वं यवि-

ष्ठेति मन्त्रेण तेन स्वस्त्ययनं भवेत् ॥१०२॥ अथाचार्यः सशिष्यस्तु धानानां भक्षणं चरेत् । पठन् धानावन्तमिति प्राशनन्त्यथ च ते दधि ॥१०३॥ दधिक्राव्णः पठित्वात्र नोच्छिष्टं मन्त्रकीर्तने । अथाचम्योदकं सर्वेषूपविष्टेषु पूर्ववत् ॥१०४॥ गुरुः शिष्यगणान्ब्रूयादाद्यास्तिस्र ऋचः पृथक् । तेऽपि ता एव निर्ब्रूयुर्यथावदनुपूर्वशः । ॥१०५॥ अग्न आयाहिका आद्या ऋचस्तिस्रः प्रकीर्तिताः । सामान्यपि च तान्येव पाठयेद्गुरुरादितः ॥१०६॥ वामदेव्यं ततो गीत्वा माङ्गल्यादि समाचरेत् । पूर्णपात्रं दक्षिणा स्याद्द्विजेभ्यो भूयसी ततः ॥१०७॥ ऋषीनुत्सर्गपर्यन्तं गृहे संरक्ष्य पूजयेत् । उत्सर्गे तूत्सृजेत्तीर्थे विधिरेषः प्रकीर्तितः ॥१०८॥

अनध्याया अथोच्यन्ते सूत्रपाठक्रमादिह । उपाकर्माऽहनि ततो वेदपाठं विवर्जयेत् ॥१०९॥ सावित्रं हस्तनक्षत्रं तद्युक्तं दिवसं त्यजेत् । क्षिपेच्च पक्षिणीं रात्रिमुदग्गत्यामुपाकृतौ ॥११०॥ पक्षाविवाहनी यस्याः सा रात्रिः पक्षिणी स्मृता । उभयोपाकरणयोरेक आहुस्त्रिरात्रकम् ॥१११॥ उक्तवच्चोदकोत्सेकस्तयोरुत्सजनेऽपि च । मुनयश्चाहुरेवैके श्रावण्यां स्यादुपाकृतिः ॥ ११२ ॥ आहस्तात्स्यादनध्यायो हस्ते स्याद्दोषसम्भवः । तदैवोपाकृतिः कार्येत्येवमाहुर्महर्षयः ॥११३॥ पूर्णिमान्तप्रौष्ठपदे पुष्ये तूत्सर्जनात्परम् । उपाकृतेः पुरा कार्योऽनध्यायश्छन्दसां तथा ॥११४॥ उदग्गतोपाकरणे कृतेऽभ्रपञ्चके क्षणे । वाय्वभ्रविद्युत्स्तनितवर्षाण्यभ्रादिपञ्चकम् ॥११५॥ तस्मिन्नुपाकृतिं यावच्छन्दोऽनध्याय इष्यते । उक्तोच्यमानानध्याये ब्रह्मयज्ञं न लोपयेत् ॥११६॥

इति श्रीशिवरामशुक्लविरचितायां गोभिलगृह्यसूत्रभाष्यभूतायां गृह्यकारिकायां उपाकर्मोत्सर्गप्रकरणं समाप्तम् ।

---

अथ कृत्यचिन्तामण्युक्तश्छन्दोगानामुपाकर्मनिर्णयः ।

अथोपाकर्मकालमाह—“प्रौष्ठपदीं हस्तेनोपाकरणम् ।” ( गोभिलगृह्यसूत्रे ) । प्रौष्ठपदो भाद्रपदस्तस्य प्रौष्ठपदी तां हस्तेन

हस्तर्क्षेण उपाकरणं वेदस्योपादानं कर्तव्यमिति शेषः । प्रौष्ठपदी-मित्यत्यन्तसंयोगवाचिन्या द्वितीयया सर्वासां प्रौष्ठपदीनामुपाकरणकालत्वे प्राप्ते प्रति प्रौष्ठपदीं प्रतिवर्षमुपाकर्म कुर्यादित्यर्थः प्राप्तः । नात्र प्रौष्ठपदीशब्देन पौर्णमास्याभिहिता, तत्र हस्तनक्षत्रासम्भवात् । अत एवोक्तं परिशिष्टे-'प्रौष्ठपदशुक्लपक्षे हस्तेनाचार्य' इति । वक्ष्यमाणानेकश्रुतिस्मृतिवाक्येष्वपि हस्तनक्षत्रयुतायामेव तिथावुपाकर्मकथनाच्च । तस्मात्प्रतिवर्षं प्रौष्ठपदशुक्लपक्षे हस्तनक्षत्रयुतायां तिथावुपाकर्म कर्तव्यमिति । "प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः । क्रियते छन्दसां तेन पुनराप्यायनं भवेत् । अयातयामैश्छन्दोभिर्यत्कर्म क्रियते द्विजैः । क्रीडमानैरपि सदा तत्तेषां सिद्धिकारकम्" इति कात्यायनः । एतच्च सङ्क्रान्तियुतेऽहनि न कार्यम् । निगमः-"ग्रहयोगो गुरुं हन्ति सङ्क्रान्तिः शिष्यघातिनी । तपो हन्त्युत्तराषाढा उपाकर्माणि वैष्णव" इति । तथा--"सङ्क्रान्तौ ग्रहणे चैव सूतके मृतके तथा । गणस्नानं न कुर्वीत नारदस्य वचो यथा । अथ चेद्दोषसंयुक्ते पर्वणि स्यादुपाकृतिः । दुःखशोकभयग्रस्ता राष्ट्रे तस्मिन् द्विजातयः" इत्यादि निषेधवाक्यात् । पर्वादावर्द्धरात्रादनन्तरं सङ्क्रान्तियोगे तत्रोपाकर्म न त्याज्यम् । तदाह गार्ग्यः-"अर्द्धरात्रादधस्ताच्चेत्सङ्क्रान्तिर्ग्रहणं तथा । उपाकर्म न कर्तव्यं परतश्चेन्न दोषकृत्" इति । स्वगृह्योक्तमुख्यकालस्य सङ्क्रान्त्यादिबाधे छन्दोगैः श्रावणे मासि हस्ते कार्यम् । याज्ञवल्क्यः-"अध्यायानामुपाकर्म श्रावण्यां श्रवणेऽपि वा । हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥" अत्र ओषध्यभावः सङ्क्रान्त्यादिदोषाणामुपलक्षकम् । निर्णयामृते-"यदि स्याच्छ्रावणं पर्व ग्रहसङ्क्रान्तिदूषितम् । स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु । सङ्क्रान्तिर्ग्रहणं वापि यदि पर्वणि जायते । तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते" इति । अत्र वाक्ये पर्व इत्युपलक्षणम् । "श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि" इति मनुवाक्यात् प्रौष्ठपद्यां पौर्णमास्यां कर्तव्यमिति केचिदाहुः ।

अधिमासेऽपि छन्दोगानामुपाकर्मोत्कर्षो न भवति, तेषां सिंहार्कनियमात् । तदाह गार्ग्यः—"सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः । छन्दोगा मिलिताः कुर्युरुत्सर्गं स्वस्वछन्दसाम् । शुक्लपक्षे तु हस्तेन उपाकर्मापराह्णिकम्" इति । सिंहे रवौ हस्तेनापराह्णिकमुपाकर्म, पुष्यर्क्षे पूर्वाह्णे उत्सर्जनमित्यन्वयः । "दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु । उपाकर्ममहाषष्ठ्योर्हितदिष्टं वृषादितः" इति ऋष्यशृङ्गोक्तेश्च । ज्येष्ठशुक्लदशमी दशहरा । उपाकर्म प्रसिद्धम् । महाषष्ठी कार्त्तिके वृश्चिकार्के शुक्लषष्ठी । सा च कालादर्शे स्पष्टतयोक्ता । "छन्दोगानामुपाकर्म युगादीनां चतुष्टयम् । मलमासेऽपि कर्तव्यं वार्षिकं प्रथमाब्दिकम्" इति सङ्ग्रहोक्तेश्च । तथा च दीपिकायाम्—"अथोत्कर्षस्य तु सामगान्यविदुषां कालस्य वृद्धौ भवेदिति ।" "उत्कर्षः कालवृद्धौ स्यादि"त्याद्युत्कर्षविधायकवाक्यं शाखान्तरविषयम् । "त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम् । मङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः । द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः । एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्तितः । खण्डग्रहे तयोः प्रोक्तस्तूभयत्र दिनद्वयम्" इति । दिनद्वयं ग्रहणात्पूर्वमुत्तरं च । अत्र ग्रहणे सति ग्रहवेधदूषितत्वादुपाकर्म न कार्यमिति नाशङ्कनीयम् । "नित्ये नैमित्तिके जाप्ये होमयज्ञक्रियासु च । उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते ।" इति सकलनिबन्धधृतवाक्यात् ।

इदं द्वेधा विभक्तदिवसस्यापराह्णे कर्तव्यम् । तदाह गोभिलः—"अध्यायानामुपाकर्म कुर्यात्कालेऽपराह्णिके । पूर्वाह्णे च विसर्गः स्यादिति वेदविदो विदुः । छन्दोगा मिलिताः कुर्युः प्रातरौत्सर्गिकीं क्रियाम् । अपराह्णे ह्युपाकर्म पुष्यहस्तर्क्षयोर्द्विज" इति । इदं वाक्यद्वयं सूर्योदयमारभ्य सूर्योदयं यावद्वर्तमानहस्तविषयमुत्तरादिने समग्रापराह्णगामि विषयं च ज्ञेयम् । यत्र नक्षत्रस्य पूर्वदिवसे अपराह्णव्याप्तिरुत्तरादिने अपराह्णाव्याप्तिस्तत्र त्वाष्ट्रनक्षत्रयुतहस्तग्राह्यताविधायकवाक्यान्मुहूर्तत्रयसम्भवे उत्तरादिने कार्यम् । तदाह—कात्यायनः—"धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम् । उपाकर्म

